# संस्कृतचन्द्रिका।

संस्कृतमासिकपत्रिका ।

## षष्ठः खण्डः ।

श्रीजयचन्द्रशर्मसिद्धान्तभूषणभट्टाचार्येण
संपादितः सहकारिसंपादकेन राशि-
वडेकरेण श्रीअप्पाशास्त्रिणा
प्रकाशितश्च ।

---

कोल्हापुरनगरे
संस्कृतचन्द्रिकाकार्यालयात् ।
तत्रैव श्रीसमर्थप्रसादयन्त्रालये मुद्रितः ।
मूल्यं सार्धो रूपकः ।

# संस्कृतचन्द्रिकायाः षष्ठखण्डगतानां विषयाणां सूचीपत्रम् ।

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

॥ श्रीगणेशाय नमः ॥

शिवादीनपि कार्याणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

॥ वर्षावतरणिका ॥

श्री श्रीमती संस्कृतचन्द्रिकेयं षष्ठे पदं वत्सरकेऽर्पयन्ती ।
रसोत्सुकानामपमत्सराणामीप्सत्यशङ्कं कमनीयमङ्कम् ॥

॥ मासावतरणिका ॥

निषेव्य नवमल्लिकाकुसुमसम्पदं भूयसीं
निपीय मधु माधवीकुसुमजन्म चाप्यन्वहम् ॥
परं प्रमदमुद्वहन्मधुकरोऽत्र वैशाखके
वसन्तमभिनौति वा ललितगुञ्जितच्छद्मना ॥१॥

॥ उद्भटश्लोकाः ॥

यशसि विहितादराणामर्थिभिरुपजीव्यमानविभवानाम् ।
अभिजातवंशजानां सुहृदुपभोग्याः श्रियो महताम् ॥ १ ॥

नदीवृन्दोद्दामप्रसरसलिलापूरिततनुः
स्फुरत्स्फीतज्वालानिविडवडवाग्निक्षतजलः ।
न दर्पं नो दैन्यं स्पृशति बहुसत्वः पतिरपा-
मवस्थानां भेदाद्भवति विकृतिर्नैव महताम् ॥ २ ॥

नीतिज्ञा नियतिज्ञा वेदज्ञा अपि भवन्ति शास्त्रज्ञाः ॥

अल्पज्ञा अपि लभ्याः स्वाज्ञानज्ञायिनो विरलाः ॥ ३ ॥
नहि नामसज्जनानां शुद्धयशःस्फटिकदर्पणो विमलः॥
परिभवदुःखितजनतानिःश्वासैर्मलिनतामेति ॥ ४ ॥

## ॥ श्रीमदप्पयदीक्षितः ॥

भवन्ति किल सुविपुलेऽत्र क्षितितले भूयांसो विद्वांसो येषां शरच्चन्द्रिकाविमलेन यशःपूरेण माण्डितमिव दिगन्तरं प्रतिभाति । तद्यशः केवलं वैदुष्यसंभवमेव भूयिष्ठमुपलभ्यते । न तु तेन सहैव सहजमिवोपलक्ष्यमाणं धर्माचरणसंभूतमपि । सहृदयाः ! किं वा तया विद्वत्तया यया न धर्माचारे प्रवर्तते चेतः । सैव हि विद्वत्ता या कीर्तिमिव धर्मेऽपि श्रद्धामुत्पादयति । त एव च विद्वांसो ये विद्यामिव धर्ममप्युपार्जयितुमिच्छन्ति । विद्या हि नाम बीजमिदं धर्माचारस्य । किं तु तदसत्तर्कानलेन दग्धप्रायं न प्रसूते धर्मफलम् । अत एव विरला एव विद्वांसो धर्मनिष्ठा उपलभ्यन्ते । येऽपि धर्मनिष्ठास्तेष्वपि विरला एव विद्वांस इत्यपि नाश्चर्यम् ।

यदि क्वचन महापात्रे भाग्यवशाद्वैदुष्यं धर्माचारश्चेत्युभयमपि प्रत्यक्षीक्रियेत न तत्र प्रायेण दैविकः साक्षात्कारो लक्ष्यतामुपगच्छेत् । न चैतदपि विस्मयास्पदम् । निसर्गो ह्ययं कलिकालस्य यत्प्रायशो नैकत्र सर्वेऽपि गुणाः प्रत्यक्षतामुपयान्ति । ये च विद्वांसो धर्मनिष्ठाः साक्षात्कृतेश्वराश्च भारतं वर्षमलञ्चक्रुस्तेष्वपि विरला एव सर्वशास्त्रपारङ्गमास्तत्र च विरलतमा एव तत्र तत्र नव्यप्रबन्धप्रणेतारः ।

आसीत्किल सोऽपि समयोऽस्मिन्नशेषमहीतलमण्डनायमाने भारतवर्षे यस्मिन्नेवंविधान्यपि मानुषरत्नानि संभूय धरातलं मण्डयन्तिस्म ।

यानि चैवंविधानां मानुषत्वमुपगतानामिव देवानां मूर्तिमुपाश्रितानामिव सुकृतानां सचेतनत्वमिवोपयातानां यशः प्रसराणां महात्मनां श्रूयन्ते श्रवणरसायनान्यमृतमिवोद्वमन्ति नामानि । तेष्वेव प्राधान्यतो निशम्यते श्रीमदप्पयदीक्षितस्याभिधानम् ।

अद्य किलास्य महात्मनो यावदुपलब्धं चारित्रमुपवर्ण्यात्मनो रसनां पवित्रीकर्तुं प्रवृत्ताःस्मः ।

महाभागोऽयं कदानीमात्मनो निवासेन भारतप्रदेशं मण्डयामासेति यद्यपि समुपलब्धेभ्यस्तत्प्रबन्धेभ्यो दुष्करमवगन्तुं तथापि तत्सुकरमेवसिद्धान्तयितुम् । अस्य हि पवित्रेऽन्वये लब्धजन्मनाऽस्य भ्रातुः पौत्रेण श्रीनीलकण्ठपण्डितेन विरचिता विद्योतते श्रीनीलकण्ठविजयाख्या चम्पूः । तत्र च तेन महाकविना श्रीनीलकण्ठेन तस्य प्रबन्धस्य निर्माणावसरः प्रतिपादितो येन तस्यैव श्रीमदप्पयदीक्षितस्याप्यवस्थितिसमयः शक्यते निर्णेतुम् । तच्चेदम् ।

**अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु ।**
**कलिवर्षेषु गतेषु ग्रथितःकिल नीलकण्ठविजयोऽयम् ॥**

एतेन च ज्ञायते यदयं नीलकण्ठविजयः कले ( ४७३८ ) वर्षेषु व्यतीतेषु श्रीनीलकण्ठकविना प्रणीत इति । अयं च श्रीनीलकण्ठकविः श्रीमदप्पयदीक्षितानां सहोदरस्य चारुदीक्षिताभिधानस्य विदुषः पौत्र इति नीलकण्ठविजयान्ते विद्यमानेन इतिश्री ...... अप्पयदीक्षितसोदरचारुदीक्षितपौत्रेणेति विशेषणेन ज्ञायते । सांप्रतं च कलेर्नवनवत्यधिकनवशतोत्तरचतुःसहस्रवर्षाणि व्यतीतानि । तेषु च नीलकण्ठविजयनिर्माणाब्देषु व्यवकलितेष्वेकषष्ठयुतरद्विशतवर्षाण्यवशिष्यन्ते । अयमेव चेतः प्राक् श्रीनीलकण्ठकवेरवस्थित्यवसरः । अर्थाच्छालिवाहनस्य १५५९ शाकाब्देषु तदवस्थानं पर्यवस्यति । तस्यैव चासन्ने प्राक्तने समये श्रीमदप्पयदीक्षितस्थितिरनुमीयते । एवं च शालिवाहन-

शकस्य पञ्चदशशताब्द्या अवसाने समुद्भूतः श्रीमदप्पयदीक्षित इति संसिध्यति । यतो नीलकण्ठविजये श्रीनीलकण्ठ कविना श्रीमदप्पयदीक्षित तस्य नीलकण्ठविजयनिर्माणावसरेऽस्तित्वं न प्रतिपादितं नापि तदन्यतोऽनुमातुं शक्यम् । तेन च ततः प्रागेवास्य निधनावसर इत्यनुमीयते । श्रीमदप्पयदीक्षितश्च नवतिवत्सरात्मकेवयसि वर्तमानः शिवसायुज्यमुपागच्छदिति प्रबन्धान्तरेभ्यो निश्चीयतेऽत एव पञ्चदशयामेव श्रीशालिवाहनशकाब्द्यां तदवतारोनुमातुं शक्यः ।

यत्तु कैश्चित्प्रतिपाद्यते श्रीजगन्नाथपण्डितस्य समानकालिकः श्रीमदप्पयदीक्षित इति । तच्चात्मनो मतं स्थिरीकर्तुकामैर्यदुच्यते वृत्तमिदं यथा कदाचित्काश्यां वर्तमानः श्रीमदप्पयदीक्षितः श्रीमन्दाकिनीसलिलस्नातः कस्मिंश्चन भागीरथीसलिलशीकरशीतले घट्टे मुखमावृत्य प्रसुप्तमीषद्दृश्यमानधवलशिखाकेशं कमपि पुमांसं प्रातरवलोकमानः प्रोवाच—

**किं निःशङ्कं शेषे शेषे वयसि त्वमागते मृत्यौ । इति ।**

एतदाकर्ण्य व्यपनीतमुखावरणोजगन्नाथः श्रीमदप्पयदीक्षितमद्राक्षीत् । तं च जगन्नाथमात्मनोऽजय्यं प्रतिभटमवलोक्य पुनर्दीक्षितः प्राहस्म

**अथवा सुखं शयीथा निकटे जागर्ति जाह्नवी भवतः । इति ।**

एवमुक्त्वा च दीक्षित आत्मनो मन्दिरमुपागच्छादिति । तदेतन्मोहविजृम्भितं नाम । क्वयमार्या क्व च श्रीमदप्पयदीक्षिताः । सर्वथा नमोऽस्तु गजनिमीलिकायै भारतीयानाम् । इयं खल्वार्या नाप्पयदीक्षितस्य । एषा हि श्रीजगन्नाथरायप्रणीते भामिनीविलासे दृश्यते । भामिनीविलासे च परप्रणीतानां पद्यानां कथंचिदपि नास्त्येव निवेशः प्रत्युत स्वीयान्येव तत्रत्यान्यशेषाण्यपि पद्यानीति **मदीय** पद्यरत्नानां मञ्जूषेषा कृता मयेति वदञ्जगन्नाथराय एव प्रतिपादयति । यो हि जगन्नाथो रसगङ्गाधरनाम्न्यलङ्कारशास्त्र उदाहर्तुमपि परकीयपद्यान्यनपेक्षमाणः

निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयाऽत्र निहितं न परस्य किञ्चित् ।
किं सेव्यते सुमनसां मनसाऽपि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण ॥

इति साभिमानं प्रोवाच कथं नाम स एवात्मीयत्वेन प्रतिज्ञातेऽपि प्रबन्धे परकीयानि पद्यान्युपन्यस्येत् । अत एव च भामिनीविलासे दृश्यमानं किं निःशङ्कमिति पद्यं न श्रीमदप्पयदीक्षितप्रणीतमतएव च नोपरितनं वृत्तं मनागपि सत्यभावं स्पृशतीति विदाङ्कुर्वन्तु विद्वांसः ।

अन्यच्च श्रीमदप्पयदीक्षितजगन्नाथराययोः समानकालिकत्वे बाधकमवलोक्यतां यथा—

जगदाभरणे दिल्लीवल्लभं यवनाधिपतिं दारासाहमुपवर्णयञ्जगन्नाथ आत्मनस्तत्समानकालिकतां दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वय इति दारासाहस्यैव सविधे यौवनावस्थायामात्मनोऽवस्थानं च स्पष्टयति । दारासाहश्च श्रीशालिवाहनशकस्य १५८१ वत्सरान्यावद्दिल्लीराज्यं पालयामासेति पुरावृत्तज्ञाः प्रचक्षते । तेन च श्रीशालिवाहनशकस्य षोडश्याः शताब्द्या उत्तरार्धे श्रीजगन्नाथस्यावस्थितिर्निश्चीयते । प्रतिपादितं चास्माभिः सप्रमाणं पञ्चदश्यामेव शताब्द्यां श्रीमदप्पयदीक्षितानामवस्थानम् । अत एव न कथञ्चिदप्पयदीक्षितजगन्नाथयोः समकालिकत्वं प्रतिपादयितुं शक्यम् ।

श्रीमदप्पयदीक्षितस्य जीवनचरितं तु सङ्क्षेपत उपलभ्यते । तच्च रसिकेभ्य उपन्हियते ।

महात्माऽयं द्रविडजातीयो ब्राह्मणः । सुप्रसिद्धात्काञ्चीनाम्नो नगराद्दाग्नेय्यां च आदिपाल्यसंज्ञोऽग्रहारो विद्यते तत्रायं निवसतिस्म । पिताऽस्य श्रीनारायणदीक्षितो नाम । सञ्जातोपनयनोऽयं महाभागो वेदमधीतेस्म । समाप्य च द्वादशवर्षे ( आत्मनोवयसः ) वेदाध्ययनं

शास्त्राध्ययने बुद्धिमावबन्ध । अयं च वेदान्तालङ्कारशास्त्रयोः परं प्रावीण्यमुपागच्छत् । व्याकरणादिष्वपि शास्त्रेषुपरमोऽयंपण्डित इत्यपि श्रूयते। समाप्ते चाध्ययनेऽयं भार्यां पर्यणयत् । अस्य च तिस्रोभार्या बभूवुः। तासु चायमेकादश सुताँल्लेभे । श्रीशालिवाहनस्य पञ्चदश्यां शताब्द्यां विद्यानगराधिनाथस्य श्रीकृष्णदेवमहीपतेः क्षितिशासनावसरेऽयं परममभ्युदयमाससादेति पुरावृत्तज्ञाः प्राहुः ।

अयं च श्रीशिव एव परं ब्रह्मेति प्रतिपादयामास । नानाविधैः प्रतिभटपण्डितैर्विवदमानश्चायं तदेवात्मनो मतं स्थिरीचक्रे । चन्द्रगिरिनिवासी भूपालवरः श्रीवेङ्कटपतिरायल्लूरस्य पाण्डित्येन प्रमोदस्य परां काष्ठामारूढ एनं सह परिवारेण पुपोष । अदाच्चास्मै महीयसीं भूसंपदं ययाऽऽत्मनश्छात्रपुत्रादीनां च परिपालनायावश्यकस्य वित्तस्य कृते परमुखमनवेक्षमाणः सुखमुवास श्रीमदप्पयदीक्षितः । अनेन किलाध्यापिता बहवश्छात्राः किं तु न तत्राद्यापि कश्चिन्नामतोऽप्यवगतोऽस्माभिः ।

सहृदयाः ये किल विद्वांसस्ते स्वकीयं मतं स्थिरीकर्तुमतिमात्रं प्रयतन्ते । क्वचित्तु निजमतस्थिरीकरणाय प्रवृत्ताः पण्डिताः परेण पराजिताः परं क्रोधमवलम्ब्य प्रतिपक्षस्यानिष्टमप्यनुध्यायन्ति । यदा च श्रीमदप्पयदीक्षिते वेङ्कटरायल्लूराल्लिह्यत्तदा तस्यैवराज्ञो विशिष्टाद्वैतमतावलम्बी बभूव पण्डितस्ताताचार्योनाम ( अपिनामायमेव श्रीवेङ्कटाध्वरिकवेः पितामहस्य मातुलः स्यात् ) स च स्वपक्षस्थिरीकरणाय दीक्षितमहाशयेन विवदमानो राज्ञः सभायां पराजयं लेभे । तेन संतप्तान्तरोप्याकारगोपनप्रवीणस्ताताचार्यः प्रीतमिवात्मानं दर्शयामास । अभ्यन्तरे तु दीक्षितेन सह कृताशिथिलद्वेषः कदाचिद्राजधान्याः स्वग्रामं प्रयान्तं दीक्षितं निगूढमेव घातयितुं घातकान्प्रेरयामास । ते च घातका मध्येमार्गं कैश्चन दिव्यपुरुषैः पशुमारं मारिताः क्रोशन्तः प्रतिनिवृत्य वृत्तमिदं ताताचार्याय निवेदयामासुः । अथ कर्णाकर्णिकयेमां वार्तामाकर्ण्य क्रुद्धो मही-

पालस्ताताचार्यं निर्भर्त्सयामास श्लाघे च श्रीमदप्पयदीक्षितम्। भा. अ.को.

अस्य च कानिचिद्भुतचरित्राणि वृद्धेभ्यः श्रूयन्ते तेषामप्यत्र प्रकाशनं नानर्हमिति मन्यामहे ।

कदाचिच्छ्रीमदप्पयदीक्षित ईश्वरदीदृक्षया श्रीविष्णोर्मन्दिरमुपागच्छत्। श्रीशिवैकनिष्ठमनाः शिवमेव सर्वतः पश्यन्नसौ विष्णुमन्दिरेऽपिश्रीशिवमेव विलोकमानः

**शान्तं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं**
**शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम् ।**
**नागं पाशं च घण्टां प्रलयहुतभुजं साङ्कुशं वामभागे**
**नानालङ्कारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि॥**

इति श्रीशिवध्यानपद्यमेव पठतिस्म। तदात्वे चान्तर्हितायाः श्रीविष्णुप्रतिमायाः स्थाने श्रीशिवमूर्तिरेवाविरभूत् । तदवलोक्य मूर्तिपरिवर्तनं विस्मिताः केचन धार्मिका अप्पयदीक्षिताय निवेदयामासुः । सोऽपि पुनस्तत्र गत्वा शान्ताकारमित्यादि श्रीविष्णोर्ध्यानपद्यं पपाठ । ततश्च तत्र पुनर्विष्णुमूर्तिराविरभूदिति ।

अथैकदा दीक्षित आत्मनो बुद्धेः शिवैकतानत्वं परिचेतुकामो धत्तूरबीजान्यास्वाद्यात्मनश्छात्रान्प्रोवाच । वत्सा अतःपरं समुद्भ्रान्त इव यदहं प्रलपिष्यामि तन्मे प्रकृतिमापन्नाय निवेद्यतामिति। तेषु तथेत्युक्त्वा विरतेषु हेमबीजबीजस्याशनतः प्रमत्तस्यापि दीक्षितमहाशयस्य वदनारविन्दतः श्रीशिवनामैवाविरतं निरियाय । महाभागाः निपुणं तावद्विचार्यतां कीदृशमस्य दीक्षितमहाशयस्य शैवत्वमिति प्रमत्तस्यापि यस्य वदनतो न शिवनामतोऽन्यान्निरपतत् स किं सामान्यः शैवः ।

यत्किमपि वा मतमवलम्बमानो योयः पण्डितोऽस्य पुरत आपपात तं तं पराजित्य महाभागोयं शैवमेव मतं स्थिरीचक्रे । प्रणयिनं च जनं सप्रणयमेवमभाषिष्ट

पुरारौ च मुरारौ च न भेदः पारमार्थिकः ।
तथापि मामकी भक्तिश्चन्द्रचूडे प्रधावति ॥ इति ॥

शैवमतस्थापनाचार्योऽयं सर्वा अप्युपनिषदः शिवपरतयैव व्याचचक्षे । किं तु नारायणोपनिषद्व्याख्यानावसरे संज्ञामन्तरा णत्वस्यासंभाव्यत्वाच्छ्री शिवस्य च नारायणसंज्ञाभावाद्व्याकुलीभूतो **णत्वं परं बाधत** इत्यभिदधे। सा चोपनिषन्नानेन व्याख्यातेति श्रूयते । मैसूरुप्रदेशनिवासिना तु केनापि पण्डितेन सापि शिवपरत्वेन निर्णीता व्याख्याता च सविस्तरमित्यप्याकर्ण्यते । न चैतत्कृतमेकस्या अप्युपनिषदो व्याख्यानं दृष्टमस्माभिः । किं तु नैतदसंभवनीय मन्यामहे । ब्रह्मतर्कस्तवे हि सम्यङ्निर्णीतमेतेन श्रीशिव-एव परं ब्रह्मेति ।

अस्यालौकिकेन पाण्डित्येनासुलभेन च श्रीशङ्करसाक्षात्कारेण परं विस्मयमापन्नास्तदानीन्तना एनं श्रीशिवस्यैवांशभूतं मेनिरे। एतत्सूचकं च श्रीनीलकण्ठकवेर्नीलकण्ठविजयारम्भवर्ति पद्यमिदम्—

**लीलालीढपुराणसूक्तिशकलावष्टम्भसंभावना-**
**पर्यस्तश्रुतिसेतुभिः कतिपयैर्नीते कलौ सान्द्रताम् ।***
**श्रीकण्ठोऽवततार यस्य वपुषा कल्कयात्मना वाऽच्युतः**
**श्रीमानप्पयदीक्षितः स जयति श्रीकण्ठविद्यागुरुः॥इति**

---

* लीलया न तु प्रयासेन लीढा आपाततोऽवगतार्था इति यावत् । न तु सम्यग्ज्ञातार्था ये पुराणसूक्तीनां शकलाः खण्डा न तु समग्राणि वाक्यानि तैर्योऽवष्टम्भः वयं पुराणज्ञा वयं पुराणज्ञा इति गर्वः तेन याः सम्भावनास्तर्कास्ताभिः पर्यस्ता भिन्ना इति यावत् । श्रुतिरूपाः सेतवो यैस्तैः यथेच्छाचार प्रतिबन्धकत्वात्सेतुसाम्यम् । कतिपयैर्मनुजैः कलौ चतुर्थे पापाचारप्रधाने युगे सान्द्रतां निबिडत्वं नीते प्रापिते सति । प्रथमेन विशेषणेन तेषां पण्डितमन्यत्वमेव न तु लेशतोपि पुराणज्ञत्वमिति ध्वन्यते कलेः सान्द्रतानाम पापाचारप्रवृध्याधर्माभ्युदयः । अतएव एवश्रीकण्ठावतारत्वमावश्यकमितिभावः । संभवामि युगे युग इत्युक्तेः ।

धार्मिकप्रवरोऽयं कावेरीरोधसि भूयिष्ठानेव यज्ञान्विदधे अत एवासौ दीक्षित इत्यभिधीयते ।

अस्य च पुत्रा अपि प्रायो विद्वांस एव समजायन्त नवेति न सम्यगवगम्यते किं तु वृद्धेषु भूयिष्ठप्रचारेयमाख्यायिका श्रूयतेऽनया चास्य तनयानामपि कवित्वमनुमातुं शक्यम् । सा तु यथा—

कदाचिदप्पयदीक्षितस्य कश्चन पुत्रो मनसि काममपि ललनां ध्यायंस्तामेवोद्दिश्य रहसि पद्यं निर्मातुमुपाक्रमत यथा—

**अकृशं कुचयोः कृशं वलग्ने**
**विपुलं वक्षसि विस्तृतं नितम्बे**
**अधरेरुण माविरस्तु चित्ते**

विहितायां चैतावत्यामेव रचनायामतर्कितमेव श्रीमदप्पयदीक्षितस्तत्रोपस्थे । इयेष च पुत्रेण पत्रोपरिलिख्यमानं पद्यमवलोकितुम् । तस्य च तां कामनामनुमाय पुत्रो झगिति

**करुणाशालि कपालि भागधेयम् ॥**

इति चतुर्थं चरणं तत्रैवोपन्यस्तवान्येन तदशेषमपि पद्यं श्रीभवानीपरतया सद्भावमेव कवयितुर्बोधयति । एतच्च श्रीमदप्पयदीक्षितैः कुवलयानन्दे संगृहीतम् । सर्वमेतत्केवलं विद्वद्वदनेभ्यः श्रूयते न तु तत्र किमपि प्रमाणमुपलभामहे ।

श्रीमदप्पयदीक्षितप्रणीतास्तु प्रबन्धाः सुबहुला एव तत्र केचिदवलोकिता अस्माभिः केचित्तु नाममात्रेणावगताः। प्रायेण चास्य शैवागमप्रतिपादका एव प्रबन्धा भूयांसः। अलङ्कारादौ काव्येषु च विलसन्ति प्रबन्धा एतस्य । तान्यावद्विदितान्नामतो निर्दिश्य दृष्टानां तात्पर्यमपि संख्यान्तरे वक्ष्यामः ।

( क्रमशः )

# समयप्रदीपः ।

श्रीशिवः शरणम् ।

नानासुरासुरशिरोमणिरश्मिजाल-
नीराजितं मुनिगणैः परिचिन्त्यमानम् ।
वन्दे तदङ्घ्रिसरसीरुहमिन्दुमौले-
र्यस्य प्रसादमनुयाति वचोऽधिदेवी ॥ १ ॥
नानाकवीन्द्रवचनानि मुहुर्विचिन्त्य
सम्यग्विभाव्य समयानपि सत्कवीनाम् ।
काव्यप्रबन्धरचनास्वभिलाषुकाणां
कुर्वे हिताय सुगमं समयप्रदीपम् ॥ २ ॥
युक्तं गुणैर्बहुविधै रससारशालि
काव्यं विभूषितमलङ्करणैश्च सम्यक् ।
सम्मन्यते न कविभिः समयव्यपेतं
न्यस्तं महार्घमपि रत्नमिवाश्मसारे ॥ ३ ॥
एते न जातु समयाः कविनायकाना-
मेकत्र केनचिदपि ग्रथिता बुधेन ।
पर्याकुलत्वमवलोक्य ततो जनानां
संग्रथ्यते सुगम एष मया प्रबन्धः ॥ ४ ॥
यद्यप्ययं न गुणमात्रमयः प्रबन्धः
सन्तस्तथापि न विषादमितो भजेयुः ।
व्योमान्तरे निबिडतां तमसि प्रयाते
नैकापि किं मुदमुदञ्चयिता कलेन्दोः ॥ ५ ॥

तत्र तावत्कविसमयानां काव्योपयोगित्वात्प्रथमं काव्यलक्षणमाह ।

**यदास्वादनमात्रेण सतां हरति मानसम् ।**
**कवेः शब्दात्मकं कर्म तत्काव्यमिति कथ्यते ॥** *

तस्य च निर्माणे व्युत्पत्तिरभ्यासश्च यद्यप्यावश्यकस्तथापि प्राधान्यतः प्रतिभैवापेक्ष्यते । सा च प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मतेति रुद्रेण प्रतिपाद्यते । न खलु प्रतिभां विना शक्यते काव्यं निर्मातुम् । सा च प्रतिभा संस्कृता मनोरममसंस्कृता चामनोहरं काव्यमुत्पादयति । संस्कारस्त्वस्या व्युत्पत्तेरभ्यासाच्च सञ्जायते । तत्र तावद्व्युत्पत्तिर्नाम—

**लोकेस्थावरजङ्गमरूपे तत्स्वरूपे च लक्षणप्रमाणसाहित्यच्छन्दोलङ्कारश्रुतिस्मृतिपुराणेतिहासागमनाट्याभिधानकोषकामार्थयोगादिशास्त्रेषु च निपुणता ... ... ... ।** १

इति वाग्भटः प्राह । तत्र लोका भूर्भुवरादयो मध्यमस्तु भूलोक इति । अत्र च द्वीपादीनामवस्थानेऽयं कवीनां समयः ।—

**जम्बूद्वीपः सर्वमध्ये ततश्च**
**प्लक्षो नाम्ना शाल्मलोऽन्तःक्रमोन्तः ।**
**क्रौञ्चः शाकः पुष्करश्चेत्यथैषां**

---

* चतुरश्चेतश्चमत्कारि कवेः कर्म काव्यमिति वाग्भटः ।

१ लोकसंस्थितिज्ञानं पुराणेभ्योऽवगन्तव्यं भास्करादिप्रणीतेभ्यो वा सिद्धान्तेभ्यः । तत्स्वरूपादिकं कविसमयसिद्धमेव काव्ये निबद्धव्यम् । तच्चाग्रे वक्ष्यते । व्याकरणज्ञानं लक्षणज्ञानमितिवाग्भटाशयः । षड्दर्शनी प्रमाणम् । महाकाव्यकथाऽऽख्यायिकाऽऽख्यानादि साहित्यम् । उपमादयः सर्वस्वप्रकाशप्रदीपदर्पणगंगाधरादावुक्ता अलङ्काराः पिङ्गलप्रणीताच्छन्दःशास्त्राच्छन्दसां ज्ञानम् । भारतादिभ्य इतिहासस्य । आप्तानां वचनमागमः । भरताहोबलादिप्रणीतेभ्यो नाट्यशास्त्रप्रबन्धेभ्यो नाट्यशास्त्रावगमः । वात्स्यायनमल्लीनाथजयदेवादिप्रणीतेभ्यः कामसूत्रपंचसायकरतिमंजरीप्रभृतिभ्यः कामशास्त्रज्ञानम् । विदुरकामन्दकशुक्रचाणक्यादिनिर्मितेभ्यो नीतिग्रन्थेभ्योऽर्थशास्त्रज्ञानम् । पतंजलिप्रमुखैः प्रणीतेभ्यः पातंजलदर्शनादिभ्यो हठयोगप्रदीपादिभ्यश्च योगशास्त्रज्ञानम् । महाकवयः प्रायेण सर्वमप्येतदवगच्छन्तीति दृश्यते ।

बाह्याबाह्या संस्थितिर्मण्डलीभिः ॥

तानभितश्च—

लावणो रसमयः सुरोदकः
सार्पिषो दधिजलः पयःपयाः ।
स्वादुवारिरुदधिश्च सप्तम-
स्तान्परीत्य त इमे व्यवस्थिताः ॥

इति सप्त सागरा अवतिष्ठन्ते । तत्र

एकमेवांबुधिं केचित्प्राहुस्त्रीनपरे जगुः ।
चतुरस्त्वितरे प्रोचुः सप्त चान्ये कवीश्वराः ॥

सर्वेषामपि विस्तरशो विवरणं काव्यानुशासने द्रष्टव्यम् । नात्रोच्यते ऽप्रसङ्गात् ।

अभ्यासस्तु काव्यं निर्मातुं विचारयितुं च ये जानन्ति तेषामेवोपदेशेन काव्यरचनायां प्रवृत्तिः । एवं व्युत्पत्त्याऽभ्यासेन च संस्कृता प्रतिभा चतुरचेतश्चमत्कारि काव्यं निर्मातुं प्रभवति । यद्यपि व्युत्पत्तिरिति लोक इत्यादिनाऽशेषवस्तुशास्त्रादिज्ञानमभिधीयते तथापि न तत्समग्रमपि निकाममावश्यकमिति केचन प्राहुः ।

द्वित्रकोषपरिज्ञानं द्वित्रव्याकरणज्ञता ।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥ इति ।

परे तु—

नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥ इत्याहुः ।

एवं च वाग्भटमते केवलायाः प्रतिभाया एव प्राधान्यतः काव्यनिर्माणहेतुत्वमितरेषां तु तत्संस्कारकत्वमिति । इतरेषां तु प्रतिभाया इव व्युत्पत्त्यादीनामपि काव्यजननहेतुत्वं सम्मतमिति । दण्डी तु प्रतिभां

विनाऽपि केवलश्रुतेनाभ्यासेन चोपासिता वागपि काव्यं निर्मातुं प्रभवे-दित्याह यथा—

न विद्यते यद्यपि पूर्ववासना-
गुणानुबन्धिप्रतिभानमद्भुतम् ।
श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम् ॥ इति ।

अभ्यासस्तु कविसमयावगमाय । ते च कविसमयाः प्रोच्यन्ते ।

तत्र ।

असन्तोऽपि निबध्यन्ते भावाः केचित्कवीश्वरैः ।
नाद्रियन्ते च सन्तोऽपि केचित्काव्यनिबन्धने ॥

तत्रासतां निबन्धनं प्राह—

नदीष्वप्यम्बुजास्तित्वं हंसाः प्रतिजलाशयम् ।
स्वर्णरत्नगजास्तद्वत्प्रतिभूधरवर्तिनः ॥
शुक्लपक्षे समग्रेऽपि चन्द्रिकाया अवस्थितिः ।
पेया चकोरकैर्ज्योत्स्ना बालो हरशिरोविधुः ॥
मुष्टिमेयश्चान्धकारः कुम्भग्राह्याऽपि कौमुदी ।
स्याद्यशो हासयोः शौक्ल्यं कार्ष्णिमा व्योमपाप्मनोः ।
अकीर्तेश्चोच्यते तद्वच्छोणिमा क्रोधरागयोः ।
चातकैर्वारिदोद्भूतमेव वारि निपीयते ॥
दिवैव चक्रवाकानां घटते मिथुनं तथा ।
वियुज्यते निशायां च कामितापाय शीतलम् ॥
अशोकस्य विकासः स्याद्योषितां पादताडनात् ।
बकुलस्यास्यमद्येन प्रियङ्गोः स्पर्शमात्रतः ॥
वीक्षणात्तिलकस्यालिङ्गनात्कुरबकस्य च

मन्दारस्य च नर्मभ्यो हसिताच्चम्पकस्य च ।
आस्यवातेन चूतस्य नमेरोरपि गायनात् ।
पुरस्तान्नर्तनैरेवं कर्णिकारस्य कथ्यते ॥

अशोकस्येत्यादौ सर्वत्र विकास इति पादताडनादित्यादौ च योषितामिति सम्बध्यते । कर्तरि षष्ठी

कामस्य केतने मीनो धनुस्तस्य च कौसुमम् ।
बाणाश्च पौष्पाः कथ्यन्ते शिञ्जिनी भृङ्गमालिका ॥
भिद्यतेऽस्य शरैर्यूनां हृदयं मदमेति च ।

अथात्रोदाहरणानि प्रदर्श्यन्ते । तत्र नदीषु कमलादीनामस्तित्वं यथा—

भागीरथीमनिलकम्पितपद्मखण्ड *
मन्दस्खलन्मधुमरन्दकरम्बिताम्बुम् ।
सद्यः पतन्निबिडभृङ्गकुलाकुलाम्भः-
कालिन्दिकामदहरामनिशं भजामः ॥ इति ।

अत्र भागीरथ्यामपि कमलानामस्तित्वमुपवर्ण्यते । जलाशय इति जलमाशयेऽभ्यन्तरे येषामिति नदीसरस्तडागवापीप्रभृतीनामपि वाचकम् । अत 'एव तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घ' इति विश्वनाथः प्राह । तत्र नदीषु हंसस्थितिर्यथा—

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरी रोधसि ॥ इति ।

एवमन्यदप्यूह्यम् । प्रायेण च यत्र कमलानां तत्र हंसानामपि समव-

---

*पद्मानां कमलानां खण्डः समूहः । मरन्दो मकरन्दः । करम्बितं मिश्रीकृतम् । सद्यस्तत्कालमेव पतता भृङ्गकुलेन भ्रमरसमुदायेनाकुलं व्याप्तं यदम्भो जलं तेन कालिन्द्या मदं कृष्णत्वरूपं गर्वं हरतीति तथाभूताम् ।

स्थानमुपवर्ण्यते कविभिः । ते हि कमलवनेषु सञ्चरन्तीति प्रसिद्धिः । पर्वतेषु गजरत्नादीनां स्थितिर्यथा—

नीलाश्मरश्मिपटलानि महेभमुक्त-
सीत्कारशीकरविसृञ्जि तटान्तरेषु ।
आलोकयन्ति सरलीकृतकण्ठनालाः
सानन्दमम्बुदधियाऽत्र मयूरनार्यः ॥ इति ।

यथा वा मम गोकर्णसम्भवे

अनेकरत्नद्युतिदीपमालिका
निराकृतेऽन्धेऽपि तमस्यनारतम् ।
महेभयूथानि चरन्ति कानने
नृणामिह ध्वान्तधियं वितन्वते ॥ इति ।

पर्वतेषु स्वर्णस्थितिर्यथा—

तटेषु गाङ्गेयमयेषु यस्य
प्रभातभानुप्रभया युतेषु ।
समुल्लसच्छल्लकिकाभ्रमेण
प्रभाप्ररोहेषु गजाः पतन्ति ॥ इति ।

कविसमयप्रसिद्धमप्येदनुपवर्णितमपि न किल काव्यस्य शोभां न पुष्णाति । अतः क्वचित्पर्वतवर्णने न दृश्यते सुवर्णस्य रत्नानां वा तत्रोपवर्णितमवस्थानम् । किं तु यदि कविः कमपिभूधरमधिकृत्य ब्रूयात्—

न ते सुवर्णं न मतङ्गजा वा
न चापि रत्नानि महीधरेन्द्र ॥ इति ।

तदा तद्दुष्टतामुपगामिष्यति । एवमन्येष्वपि समयेष्ववबोद्धव्यम् ।
समग्रेऽपि शुक्लपक्षे चन्द्रिकाया अवस्थानं यथा--

विसर्पिणा ते यशसा नरेन्द्र
क्षितौ सदोद्भाति सितोऽत्र पक्षः ॥ इति ।

अत्र राजयशसा जगति सन्ततं शुक्लपक्षोद्भवस्य वर्णनया शुक्लपक्षस्य निरन्तरं चन्द्रिकया धवलीभावो ध्वन्यते।

(क्रमशः)

श्रीशिवः शरणम् ।

## कविप्रभावः ।



किममृतमया एतेऽम्भोदा अनारतवर्षिणः
किमु मधुसरित्पूरा नित्यप्रमोदविधायिनः ।
किमु नवरसोत्सर्गामर्त्यद्रुमा अविनश्वरा
नरतनुभृतो भूमावेते चरन्ति कवीश्वराः ॥ १ ॥
यदि दिशि दिशि न्यस्तुं वाञ्छा यशः सुविनिर्मलं
यदि च महतां मूर्धन्यत्वं निकाममभीप्स्यते ।
यदि परिहृतिश्चेष्टा दोषोत्करस्य महीयस-
स्तदनुदिवसं सन्तोष्यन्तां कविप्रवरा जनैः ॥ २ ॥
भवतु सुकृती लोकाधीशैरपि प्रतिपूजितो
धनदरुचिरैश्वर्यो वाचस्पतिप्रतिमो धिया ।
तदपि भविताऽऽसंवर्तान्तं जनेषु विनिन्दितो
यदि कविजने बद्धद्वेषो वृथैव भविष्यति ॥ ३ ॥
प्रतिभटपराजेता वीरो नृपालकुलार्चितो
मदनमधुरः सद्दानौघैः प्रसादितभूसुरः ।
यदि कविजने कोपारक्तां क्षिपेन्नयनद्वयीं

स खलु भविता कल्पान्तान्तं तदा बुधगर्हितः ॥ ४ ॥
सुमधुरपदन्यासा राजत्सुवृत्तमनोरमा
गुणगणपरिस्फूर्जत्कान्तिर्विराजदलङ्कृतिः ।
अपि नवनवैर्भावै रम्या रसोल्लसदन्तरा
हरति न मनः केषां कान्ता कवीन्द्रसरस्वती ॥ ५ ॥
सुरभिसिकतातैलाभ्यक्तः सुमैर्गगनोद्भवै
रुचिरिततनुर्गन्धर्वाख्ये चरिष्यति पत्तने ।
सुललिततनुर्वन्ध्यासूनुर्नपुंसकजैर्वृतो-
नृभिरभिलषेदेवं कर्तुं कवेर्यदि भारती ॥ ६ ॥
अपि खुरणसा सङ्किन्नाक्षी समुन्नतदन्तयुक्
तिमिरनिवहस्फूर्जत्कान्तिर्भवेद्भुवनेऽङ्गना ।
भवति ललितघ्राणाम्भोजेक्षणा सुदती च सा
कनकरुचिरा सैव प्रायः कवीन्द्रपरिग्रहात् ॥ ७ ॥
अपि कृतयुगे काले वाचामगोचर एव वा
भवतु नृपतिः स्फूर्जत्कीर्तिस्तथापि स सर्वथा ।
व्रजति सततं यत्र प्रत्यक्षतां ललिताङ्ककैः
कविजनवचःपूरः सोयं किलाद्भुतदर्पणः ॥ ८ ॥
नयनपदवीदूरीभूते गृहे नरदुश्वरे
दृढमपिहितद्वारो यत्र क्रिया मनुजश्चरेत् ।
अपि पवनतस्तन्वीभूत्वा प्रविश्य तदालयं
निभृतचरितं तस्यावैति प्रभुः कविभारती ॥ ९ ॥
क्व नु कुमुदिनी निश्चैतन्या सदा जडसङ्गता
क्व च स भगवान्पीयूषांशुर्विहायसि सञ्चरन् ।
तदपि घटते कामं प्रीतिस्तयोर्यदनारतं

स कविवचसो दुर्विज्ञेयः प्रभाव उदीर्यते ॥ १० ॥
मरुदपि भवेन्मल्लीनाथो मनोजरुजार्दितः
खमपि विचरन्दौत्यं यूनः करिष्यति नीरदः ।
अपि स गगनश्रान्तो भानुर्निवत्स्यति भूतले
यदि कविवचोमायावर्ते परिभ्रममेष्यति ॥ ११ ॥
जलमयतनुः पारावारोऽप्यपस्मृतिपीडना-
मयति तृषयाऽम्भोदं वृक्षो जलान्यभियाचते ।
अपि करुणयाऽश्रूणि ग्रावा विमुञ्चति लङ्घितः
किमिव भुवने काव्याभिख्ये कवेर्ननु दुर्घटम् ॥ १२॥
भ्रमति गगने दिङ्नागानां प्रयाति *कटस्थलीं
विहरति मुहुर्दिव्योद्यानेऽभ्युपैत्यमरावतीम् ।
अपि दिविषदां शुद्धान्तेषु प्रयाति निरर्गला
नवनवरसास्वादोत्कण्ठा कवीन्द्रसरस्वती ॥ १३ ॥
भुवनमपरं शब्दाभिख्यं विराजति यत्र ते
महितचरिता आकल्पान्तं लसन्ति नरोत्तमाः ।
विभवगुरुणो यस्याप्येतेऽग्रिमाः प्रतिभावतां
विधिमतिगता निर्मातारो बुधा रसपेशलाः ॥ १४ ॥
रसयति रसं स्ववामानां विलाससमुद्भवं
विशदयति चामर्त्यैर्वेद्यं चिराय सुधारसम् ।
अपि परिमलं दिव्यद्रूणां पुरो निदधात्यसौ
निखिलभुवनाभ्यन्तःसञ्चारिणी कविभारती ॥ १५ ॥
यदपि दिवि यत्पाताले वा यदस्ति धरातले
यदिह गहने कान्तारे यद्गुहान्तरचारि वा ।

---

* कटो गण्डः १ अन्तःपुरम् २ नरश्रेष्ठा नायकीभूताः पुरुषा इति यावत् ।

तदपि मनुजो गेहे तिष्ठन्नवैति किलाद्भुतं
यदि कविवचःकल्पद्रूणां परिग्रहतामियात् ॥ १६ ॥
यत्स्रष्टाऽपि न शक्नुयाज्जनयितुं पातुं न यच्छ्रीपति-
र्यत्संहर्तुमुमापतिश्च कमलालङ्कर्तुमुच्चैर्न यत् ।
तन्नूनं जनयेदवेदभिनवस्रष्टा कविः संहरे-
त्संस्कुर्याच्च ततः कवीन्द्रसदृशः कोऽन्यः प्रभुर्भूतले ॥ १७
प्रकृतिपरुषा क्वापि क्वाप्युल्लसद्विजद्रुमो-
द्भवकिसलयश्रीका द्राक्षारसोपमिता क्वचित् ।
रमयति मुहुश्चित्तं नानाविधत्वमुपागता
श्रुतिपथमुपायातानेकै रसैः कविभारती ॥ १८ ॥
नीतौ दाक्ष्यं वितरतितरां शिक्षयत्येव शास्त्रं
सङ्गीतोत्थं रसयति रसं भावबोधं विधत्ते ।
शृङ्गारादौ रमयति मतिं मोहमुच्चैर्लुनीते
काव्यं नृभ्यो वितरति न किं कल्पवल्लीसगर्भ्यम् ॥ १९ ॥
आनन्दस्य परोऽवधिर्नवरसप्रोल्लासलीलालयो
दिव्येन्दीवरलोचनाऽधरसुधानिःस्यन्दवारांनिधिः ।
लीलालोलवराङ्गनामधुरिमावस्थानभूमिः परा
सत्काव्यात्मकतामुपेत्य रसिकस्वान्तं समाकर्षति ॥ २० ॥
कविता सा चिरं जीया मोक्षपद्येव सत्कवेः ।
यदास्वादनमात्रेण परानन्दोऽधिगम्यते ॥ २१ ॥
सुपदन्यासमनोज्ञालङ्कारोद्भासिता रसोत्फुल्ला ।
किं नु सखे वरवनिता नहि न हि कविता कवीन्द्रस्य २२

# विज्ञापनम् ।

विदाङ्कुर्वन्तु संस्कृतचन्द्रिकाया ग्राहकमहाशयाः । एषा किल **चन्द्रिकायाः षष्ठखण्डस्य प्रथमसंख्या** श्रीमतां करसरोजमापतति । संस्कृतचन्द्रिका चाग्रिममूल्यमनादाय न शक्या वितरीतुम् । द्रविणव्ययमन्तरा हि दुःशकेयं प्रकाशयितुम् । अतो विज्ञाप्यते यावच्छक्यं सत्वरं प्रेष्यतां षष्ठवत्सरमूल्यम् । भूयांसः किल महात्मानश्चिराय चन्द्रिकामङ्गीकृत्यान्ते व्हीर्पीप्रतिनिवर्तनयाऽस्मान्विप्रलब्धवन्त इतीदानीमुच्चैस्तरामावेद्यते माहाभागा यदि नेष्यत एव चन्द्रिका तदेयमेव संख्या प्रत्यर्प्यतां ये तु नेमां प्रत्यर्पयेयुस्ते किल चन्द्रिकामिच्छन्तीत्याकलय्य द्वितीयसंख्यां V. P. द्वारा प्रेरयिष्यामः सा चावश्यमङ्गीकार्येति ।

**विनीतवशंवदः प्रकाशकः ।**

---

# समालोचना

**विज्ञानशतकम्**—श्रीभर्तृहरिप्रणीतमिदं शतश्लोकात्मकं पद्यकाव्यं नागपूरनिवासिना घुले इत्युपाह्वेन श्रीकृष्णशर्मणा विरचितया प्रज्ञाख्यव्याख्यया समुल्लसितं तेनैव प्रकाशितं समालोचनार्थमस्मत्करतलमापातितम्। उपस्थितस्य चास्य व्यतीताः सुबहवो दिवसाः किं तु कुतोऽपि प्रतिबन्धकात्कालमेतावन्तं न पारितं शतकमिदं समालोचयितुमस्माभिः । साम्प्रतं चेदं सविस्तरं समालोचयितुं प्रवृत्ताः स्मः ।

कोल्ब्रूकसंज्ञितात्कस्माश्चिदिङ्ग्लण्डीयपण्डिताद्भर्तृहरिप्रणीतं चतुर्थमपि शतकं विद्यत इति समधिगत्य तज्जिज्ञासमाना अनुसन्धानाय बद्धपरिकरा अपि केचिदस्मद्देशीया विद्वांसो निष्फलीभूतमनोरथा विषादम-

मुमाक्षाः । आरब्धो हि प्रयासो विफलीभूतो द्विगुणतरं दूनयति । तेषु च विद्वत्सु विफलाशत्वमुपगतेषु साम्प्रतं पण्डितेन घुलेश्रीकृष्णशर्मणा तदात्मनः पितामहचरणानां प्रबन्धसङ्ग्रहे यदृच्छया प्राप्तं व्याख्यातं प्रकाशितं च । श्रीभर्तृहरिणा नाम प्राचीनविदुषा प्रणीतत्वादेव साम्प्रतमस्य गुणदोषविवेचनमसाम्प्रतं मन्यामहे । तथापि नैतदनुचितमभिधातुं यत्काव्यमिदं मनोहारीति । व्याख्या चेयं शशिनमिव चन्द्रिका कमलमिव सुरभिता सहकारमिव वसन्तश्रीः पारिजातमिव कुसुमसम्पत्सविशेषमुद्भासयति काव्यम् । प्रज्ञैव खल्वियं श्रीकृष्णशर्मणः सरस्वतीमिषेण परिणता प्रज्ञाभिधाना व्याख्या । शतकं चेदमस्माभिरामूलान्तं पठितं विचिन्तितश्चार्थः । अत्र च व्याख्याविषये पद्यविषयेऽपि मनोरममिदमित्यतो भिन्नं न निःसरति वचनमस्मद्वदनात् ।

किं तु निकामं विचारणार्होऽत्रत्य उपोद्घातः । तत्र यदस्मत्सम्मतं तत्प्रतिपादयितुमिच्छामः । अत्र किल श्रीशङ्कराचार्येभ्यः पराचीनत्वं भर्तृहरेः प्रतिपाद्य तस्मादेवास्य षष्ठशतकेऽवस्थानं प्रतिपादितम् । न जानीमः प्रमाणपरतन्त्राः कथं नाम श्रीशङ्कराचार्याणां ख्रिस्तीयषष्ठशतके समुद्भवः सम्भावनीय इति । निरूपितं किलास्माभिः पञ्चमखण्डस्य द्वितीयसंख्यायां श्रीमदाचार्याणां जननसमयादि । किं च नीलकण्ठपण्डिता अपि तमेव समयमनुमन्यन्ते ( आ. वि. सु. ) । अन्यच्च श्रीमच्छङ्कराचार्याणां शृङ्गेरीपुरविद्यमाने मठे पञ्जिकायां स एव समयः समुल्लिखित उपलभ्यते ( केसरी ) सत्येवं को वा निराकृत्य श्रद्धेयतमानि प्राचीनवचनानि पाश्चात्यानुशीलितमेव भ्रान्तिमयं पन्थानमनुशीलयंस्तर्कमात्रशरणतां प्रपद्येत । न ह्यपहाय दृष्टमुचितमदृष्टं कल्पयितुम् । स च समय इतः प्राग्द्विसहस्रसमधिकानि वर्षाणि । वदन्तु किल पाश्चात्याः पाश्चात्यमात्रानुयायिनो वाऽस्य षष्ठशतके समुद्भूतत्वं किं तु न तद्युक्तियुक्तं प्रतिभाति । अत एव श्रीशङ्कराचार्याणां मतान्यनुवदन्नपि श्रीभर्तृहरिर्न षष्ठशतक एव तदुत्तर-

मेव वा सम्भूत इति निर्णेतुं शक्यम् । स च कदानीं समुद्भूत इति प्रतिपादनस्य तु नायमवसरः । स हि कालो भर्तृहरिसमयनिर्णयावसरे सप्रमाणं निरूपयिष्यते । स्यात्किल प्रमाणान्तरेण विज्ञानशतकप्रणेतुर्भर्तृहरेः षष्ठशतकसमुद्भूतत्वं किं तु न तेन श्रीमदाचार्याणामवसरः परिवर्तयितुं शक्यो नापि वा वाक्यपदीयवैराग्यशतकादिप्रणेतुर्नृपस्य भर्तृहरेः । यद्यपि निर्णीतप्रायं वैराग्यशतकादिप्रणेतुर्विज्ञानशतकप्रणेतुश्चाभिन्नत्वं भर्तृहरेस्तथापि तत्संसिद्धौ भूयान्प्रत्यूहः । तत्र तावच्छ्रीकृष्णशास्त्रिणः सिद्धान्त उपोद्घातादुद्धृत्य संक्षेपतोऽत्रोपन्यस्यते । तथाहि । ( १ ) विज्ञानशतकस्यान्तिमे पद्ये मयैव शतकचतुष्टयं प्रणीतमिति प्रतिजानीते कविर्यथा-

**बुधानां वैराग्यं सुघटयतु वैराग्यशतकं**
**गृहस्थानामेकं हरिपदसरोजप्रणयिनाम् ।**
**जनानामानन्दं वितरतु नितान्तं सुविशद-**
**त्रयं शेषव्याख्यागलिततमसां शुद्धमनसाम् ॥ इति ***

पद्यमिदं विज्ञानशतकस्य वैराग्यशतककर्तृनिर्मितत्वं बोधयति ।

( २ ) समानकर्तृकाणां काव्यानां यन्नैसर्गिकं विचारकल्पनासाम्यं पद्यरचनारुचिसादृश्यं वर्तते तदत्रापि शतकचतुष्टये प्राप्यते । तत्र दिङ्मात्रं यथा—

सहनीयतेजः ( वि० श० ५५ )—शान्तायतेजसे (वैराग्यश० १) अन्नाशाय सदा रटन्ति ( वि० ९५ )—दीनादीनमुखैः ( वै० श०८) क्षुत्क्षामकण्ठाः (वि० १८ )–क्षुत्क्षामोऽपि। वेदो निर्वेदमागात् (वि० ६७) पुरा विद्वत्ताऽऽसीत् ( वै०श०२८ )-— । अजरममरं चिन्तय मनः परं ब्रह्म (वि० १५)--तस्मादनन्तमजरं परमं विकासि तद्ब्रह्म चिन्तय ( वै०-

---

* सुविशदानां शतकानां त्रयमित्यर्थः । तच्च नीतिशृङ्गारविज्ञानात्मकम् । शेषस्य परमात्मनो व्याख्या नाम तेन गलितं नष्टं तमो मोहो येषां तेषामत एव शुद्धमनसां ( प्रज्ञा ) ।

७६ ) तां काशीं नो भजन्ते किमिति सुमतयो दुःखभारं वहन्ते (वि०-३८ )--तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते । नाभ्यस्तो धातुवादः ( वि०४७)—नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या (वै०८९) । सर्वोपाश्रविनाशनैकचतुरः कालाय तस्मै नमः ( वि० ९९ ) सर्वं यस्य वशादगास्मृतिपथं कालाय तस्मै नमः ( वै० ३७ ) । जरया जीर्णी-कृतायां तनौ ( वि० ९४ ) जराजीर्णैरङ्गैः ( वै० ११२ ) । आढ्यः कश्चिदपण्डितोऽपि ( वि० ८२ ) यस्यास्ति वित्तं ( नी० श० ४१ ) । इत्यादि ।

( ३ ) अर्थार्थिततया ( वि० २१ )-- आत्मबोधः ( शृं० ५२ ) अत्रोभयत्रापि व्यधिकरणबहुव्रीहिः सप्तमीतरविभक्तिक इति सादृश्यम् ।

( ४ ) लिखितपुस्तकान्ते श्रीभर्तृहरिविरचितं विज्ञानशतकमिति स्पष्टमुपलभ्यते ।

( ५ ) भर्तृहरिनिर्वेदनाटक इवात्रापि भर्तृहरिर्भार्यां प्रति बालाश-ब्देन व्यवहरति । इति

अथास्य समीचीनत्वमसमीचीनत्वं वा यथामति निर्णीयते । तत्र तावन्न युज्यते प्रथमा भणितिः । न हि तत्र पद्ये विज्ञानशतकप्रणेत्रैव शतकत्रयं प्रणीतमिति कण्ठतः प्रोक्तम् । इदमेव खलु पद्यं विज्ञानशत-कस्य शतकत्रयकर्तुर्भिन्नकर्तृकत्वं प्रद्योतयति । को वा महात्मा पद्यमि-दं समीचीनं सरलार्थमिति वाङ्गीकुर्यात् । कश्चास्य स्वीकुर्याद्भर्तृहरि-प्रणीतत्वम् । न खलु महाकविपदार्हो भर्तृहरिर्दोषगणग्रस्तमेवंविधं पद्यं कदाचिदपि ग्रथ्नीयात् । दोषाश्चात्रसुधीभिरवधेया यथा—— सुघटयतु न जानीमोऽत्र सुपदस्य प्रयोजनमिति घटयत्वित्यनेनैवेष्टार्थसिद्धेरधिकपद-प्रयोगो दोषः । अन्यच्च । यदुक्तमत्र शेषव्याख्यागलिततमसां शुद्धम-नसां जनानां शतकत्रयमानन्दं जनयत्विति कथं नाम तत्सङ्गच्छताम् । परमेश्वरनामस्मरणेन गलिताज्ञानानां विशुद्धमनसां महात्मनां क इव

शृङ्गारशतकेनानन्द इति विज्ञानशतकप्रणेतैव जानातु। एवं विधानां विशुद्धान्तराणां चेतसि प्रमोदजनकं यदि नीतिशतकं शृङ्गारशतकं वा स्यात्तदा कमवलम्बतां वैराग्यशतकं के च बुधाः। विशुद्धमनसां यदि शतकत्रयमेवानन्दजनकं तदा किमविशुद्धमनसामेव प्रमोदाय वैराग्यशतकं भवतु। सर्वथा नायं कविजनोचितः श्लोकोऽत एव नायं श्रीभर्तृहरिप्रणीतः। अस्य च विज्ञानशतकान्तःपातित्वाद्विज्ञानशतकस्यापि शतकत्रयप्रणेतुर्भिन्नकर्तृकत्वं स्फुटीभवति।

(२) न हि खल्वयं नियमो यत्समानकर्तृकाणामेव काव्यानां विचारकल्पनाशब्दोपन्यासादि सादृश्यं भवत्यपि तु दृश्यते भिन्नकर्तृकाणामप्येतत्। किमधिकं विभिन्नदेशीयेष्वपि कविषु सदृशकल्पनानामाविर्भावो दृश्यते। एतच्च निबन्धमालायां द्रष्टव्यम्। क्षुत्क्षामप्रभृतयस्त्वनुप्रासार्थमाद्रियन्ते कविभिः। यदि तु विचारसादृश्यमेवात्रापेक्ष्यते तदा तत्र वैराग्यशतके सुस्पष्टमुपलक्ष्यमाणो न विस्मरणीयः श्रीभर्तृहरेर्निसर्गोऽपि। यथा सहनीयतेजः— शान्ताय तेजस इत्यादिशब्दानां सादृश्याद्विज्ञानशतकस्य वैराग्यादिशतककर्तृजन्यत्वं प्रतिपाद्यते। तदा श्रीभर्तृहरेरुपास्यस्य श्रीचन्द्रचूडस्य नात्र नामापि श्रूयत इति तद्भिन्नकर्तृकत्वमप्येतस्यावश्यमभ्युपेतव्यम्। आह च भर्तृहरिर्भाक्तिः शूलिनि शक्तिरात्मदमने इति शिवोपासकत्वमेव सतां लक्षणं नीतिशतके। अस्तौच्चात्मनः प्रियत्वादेव चूडोत्तंसितचारुचन्द्रकलिकेति श्रीशङ्करमेव।

वैराग्यशतकेऽपि। एवं कदा वाराणस्यामित्यादौ च शिवस्तवनमेवानेन क्रियमाणमुपलभ्यते यश्चैवमविरतं शिव एव ध्यायंस्तन्मयत्वमगमयच्चेतः। स एव श्रीभर्तृहरिः केवलश्रीकृष्णस्तुतिमयं विज्ञानशतकं प्रणिनायेति को वा ब्रूयात्। विज्ञानशतके च तत्र तत्र श्रीकृष्ण एव कविनोपवर्ण्यते। एतच्च तत्रस्यैकविंशद्द्वाविंशत्रयोविंशचतुर्विंशादिपद्यावलोकनेन स्फुटीभविष्यति।

(क्रमशः)

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥



## ॥ श्रीगणेशाय नमः ॥

शिवादीनपि कार्याणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## ॥ मासावतरणिका ॥

प्लुष्टप्रायेषु शश्वद्दिनकरकिरणैः पावकार्चिःसगर्भ्यै-
र्लोकेषूद्याति योयं क्षितिधरकटकान्मासि शुक्रेम्बुवाहः ।
तेन प्रीतं निकामं भुवनमिदमभूत्तन्न चित्रं हि काले
चेतस्यल्पाऽप्यदभ्रां मुदमपजनयत्येव वाञ्छोपकर्तुः ॥ २ ॥*

## ॥ उद्भटश्लोकः ॥

आलिङ्ग्य गाढमुदरं पितुरर्धजाने-
रुत्सङ्गवर्त्यवतु बालगजाननो वः ।
यत्कुम्भयोर्गिरिसुताकुचपार्श्वभाजोः
स्तन्यं पिपासति गुहस्त्रिभिराननाब्जैः ॥ ५ ॥ +

---

*प्लुष्टो दग्धः । अर्चिर्ज्वाला । सगर्भ्यः सदृश इत्यर्थः । क्षितिधरः पर्वतः । शुक्रो ज्येष्ठः । अम्बुवाहो मेघः । अदभ्रा बहुला ।

+ अर्धं शरीरस्यार्धभाग एव जाया यस्य सोऽर्धजानिः । शङ्करस्यार्धनारीनटेश्वरत्वाद्वामशरीरस्य नारीमयत्वमवबोध्यम् । पितुः श्रीशिवस्य उदरं गाढं यथा तथाऽऽलिङ्ग्य उत्सङ्गवर्ती अङ्के वर्तमानो बालगजाननः शिशुरूपः श्रीगणपतिर्वः अवतु । यत्कुम्भयोर्यस्य गजाननस्य कुम्भयोर्गण्डोपरिवर्तमानयोर्वर्तुलमांसपिण्डयोः

# श्रीमदप्पयदीक्षितः।

( पूर्वतोनुवृत्तः )

उक्तपूर्वमस्माभिः श्रीमदप्पयदीक्षितप्रणीतानां प्रबन्धानां यावद्विदितं नामानि प्रदर्श्य दृष्टानां तात्पर्यमपि वर्णयिष्याम इति। तदिदानीं प्रस्तूयते। एतेन किल विशालमतिवैभवेन बहवः शास्त्रीया अशास्त्रीयाश्च प्रणीता ग्रन्थाः। तत्र तावच्छास्त्रीया एतेऽस्मच्छ्रवणसरणिमुपायाताः। यथा—१ आत्मार्पणस्तुतिः २ उपक्रमपराक्रमः ३ ब्रह्मतर्कस्तवः ४ मध्वमतविध्वंसः ५ रत्नत्रयपरीक्षा ६ वादनक्षत्रमालिका ७ विधिरसायनसुखोपजीविनी ८ वीरशैवम् ९ शारीरिकन्यायरक्षामणिः १० शिवतत्त्वविवेकः ११ शिवादित्यमणिदीपिका १२ शिवाद्वैतनिर्णयः १३ शिवार्चनचन्द्रिका १४ सिद्धान्तलेशसङ्ग्रहः १५ कुवलयानन्दः १६ रसिकरञ्जिनी १७ चित्रमीमांसा १८ वृत्तिवार्तिकं चेति। तत्राद्याश्चतुर्दशदर्शनरहस्यप्रतिपादकाः कुवलयानन्दादयश्च चत्वारोऽलङ्कारशास्त्रीयाः। एतेषु च ब्रह्मतर्कस्तवः कुवलयानन्दश्चित्रमीमांसा वृत्तिवार्तिकं च दृष्टा अस्माभिः।

अशास्त्रीयेषु तु द्वौ कोशौ तदितरे च काव्यमयाः। तत्र नामसङ्ग्रहमाला शब्दप्रकाशश्चेति कोशद्वयम्। १ चन्द्रकलास्तुतिः २ दशकुमार-चरितसंक्षेपः ३ भक्तिशतकम् ४ भारततात्पर्यसङ्ग्रहः ५ वरदराजशतकम् ६ वैराग्यशतकम् ७ शिवकर्णामृतम् ८ हरिवंशसारचरितं चेति काव्यानि। एतेषु च वैराग्यशतकमेवास्मन्नयनपदवीमवतीर्णम्। ये च न दृष्टाः प्रब-

---

गिरिसुतायाः कुचयोः पार्श्वभाजोः सन्निहितयोः सतोः गुहः कार्तिकेयः त्रिभिः आननाब्जैः कमलसदृशैर्वदनैः स्तन्यं मातृस्तनजन्यं पयः पिपासति पातुमिच्छति। पार्वत्याः शङ्करार्धशरीरमयत्वादेकस्तनशालित्वेऽपि तत्समीपगतौ गजाननस्य गण्डावपि स्तनावित्येवाशङ्कमानः स्तनत्रयमिदमिति मत्वा त्रिभिर्वदनैः पातुं वाञ्छतीति भावः॥

न्धास्तेषामप्यनुसंधानाय प्रयतामहे । किं तु सांप्रतं प्रत्यक्षीकृतानामेव प्रबन्धानां तात्पर्यमुपवर्ण्य यथावसरमुपलब्धेषु प्रबन्धान्तरेषु तत्रत्यमपि तात्पर्यं प्रतिपादयितुं वाञ्छामः । अहो दुर्भाग्यं भारतवर्षस्य यदेवंविधान्यपि प्रबन्धरत्नानि नोपलब्धुं शक्यन्ते । भवत्वनुसारामः प्रकृतम् ।

## ब्रह्मतर्कस्तवः ।

प्रबन्धोयं पद्यात्मकोऽतिमनोहरश्च । अस्य च द्विपञ्चाशत्पद्यानि । प्रतिपाद्यं च किं स्यादिति श्रीमदप्पयदीक्षितस्य शिवएव परं ब्रह्मेतिसिद्धान्तं प्रबन्धस्य च ब्रह्मतर्कस्तव इत्यभिधानमवलोक्यावगच्छेयुरेव विचक्षणाः। स खल्वात्मनः सिद्धान्तः प्रतिपक्षशङ्कानिराकरणपूर्वकं सप्रमाणं चात्र स्थिरीकृतः । अस्ति चास्य श्रीमदप्पयदीक्षितैरेव प्रणीता नानाविधश्रुतिस्मृतिप्रमाणपरिप्लुता विविधयुक्तिजालकसमुद्भासिता च व्याख्या । तत्संवलिते च सकृदपि पठितेऽस्मिन्ब्रह्मतर्कस्तवे भवत्येव श्रीदीक्षितचरणानां सर्वतोमुखस्य दुरासदस्य पाण्डित्यस्य परिचयो विस्मयते चान्तरं संप्ररोहन्ति च तत्क्षणमेव भक्त्युन्मेषातिशयात्पुलकाः सर्वाङ्गेषु । अतिमहीयसो विवादग्रस्तस्यापि विषयस्य रहस्यमस्मिन्नतिलघीयस्यापि प्रबन्धे सम्यगुपनिबद्धम् । एतद्गतेभ्यश्च पद्येभ्यः कानिचित्सविवरणा(१)न्युद्धृत्य प्रदर्श्यन्ते गुणामृतमात्रलोलुपेभ्यो विद्वद्भ्यः ।

उच्यते किल कैश्चित् श्रीशिवो नाम तामस एवेति तच्च निराकृतं युक्त्यादिभिर्निराकृतं ब्रह्मतर्कस्तवे यथा— अथ तामसत्वं संहाररुद्रधर्ममपि परशिवधर्ममभ्युपेत्य तस्यदोषत्वाभावं समर्थयते—

**कालाग्निरुद्रवपुषा भगवान्भवार्तिं**
**कल्पावसानसमयेषु हरन्प्रजानाम् ।**
**गृह्णासि शङ्कर तमः करुणैकमूर्तिः**
**शस्त्रं नृणां व्रणरुजं शमयन्निव त्वम् ॥ २० ॥**

---

(१) विवरणं तु संक्षेपादेव प्रदर्श्यते विस्तरभयात् ।

किमिह तामसत्वं दोषत्वेनोपपाद्यते किं तमोगुणमुपकरणं कृत्वा सकलं जगत्संहरतीति नैर्घृण्यापादकत्वेन तमोगुणोपकरणत्वेन दोषत्वमुपपाद्यते उत प्राकृतजनवत्तदभिभूतत्वम् । तत्राद्यपक्षनिराकरणार्थं श्लोकः । संसारमहाध्वनि चिरं गतागतश्रान्तान्प्राणिनः किञ्चित्कालं महासुषुप्त्यापादनेन विश्रान्तिं प्रापयितुं सकलजगत्संजिहीर्षन्महादेवस्तत्संहारोपकरणतया तमो गृह्णाति । यथा चिरकालव्रणरुजार्त्या निद्राहाररहितानतिदुःखमनुभवतो मनुष्यान्व्रणरुजोऽपनयनेन सुखयितुं तात्कालिकं किंचिद्दुःखकरमपिव्रणच्छेदं करिष्यन्व्रणवैद्यस्तदुपकरणतया शस्त्रं गृह्णाति । न च शस्त्रग्रहणं व्रणच्छेदनं च तस्य नैर्घृण्यापादकम् । किं तु अयं व्रणी रक्षणीय इति परमदयालुत्व ज्ञापकमेव । तदेतदुक्तं शिवपुराणे निदानज्ञस्य भिषजो रुग्णे हिंसां प्रयुञ्जतः । न किंचिदपि नैर्घृण्यं घृणैवात्र प्रयोजिकेति ।

अथ द्वितीयं विकल्पं निरस्यति—

**निद्रालुता न तव शङ्कर शक्यशङ्का**
**क्रौर्यं किमप्यनुचिते विषये न दृष्टम् ।**
**नान्योऽपि कश्चन गुणस्तमसो विकारः**
**शङ्कया कथं तव बुधैस्तमसाऽभिभूतिः ॥ २१ ॥**

तमसाऽभिभूतस्य हि निद्रापारवश्यं भवति न तदिह शक्यशङ्कम् । जागरेऽपि तस्य क्रौर्यं भवति तदपि शिवस्य क्वचिदपि न दृष्टम् । ननु त्रिपुरजलन्धरादिवधमूलस्य क्रौर्यस्योचितविषयत्वेऽपि ब्रह्मपञ्चमशिरोलवनदक्षाध्वरध्वंसनादि देवतानिग्रहमूलं क्रौर्यं त्वनुचितविषयमिति चेदुच्यते । निग्रहस्तावद्द्विविधः । अनुग्रहोद्देश्यकस्तदनुद्देश्यकश्च । आद्योऽपि त्रिविधः अनुग्राह्यानुग्रहोद्देश्यकस्तदितरानुग्रहोद्देश्यक उभयानुग्रहोद्देश्यकश्च । तत्राद्यः सदाचारानुवर्तनाद्यर्थः पुत्रशिष्यादिनिग्रहः स तु युक्त एव । द्वितीयो बह्वितरानुग्रहार्थश्चेन्न दोषः । एकस्मिन्यत्र निधनं प्रापिते दुष्टचारिणि । बहूनां भवति क्षेमं तत्र पुण्यप्रदो वध इतिवचनात् । स यथा मृगयया

व्याघ्रादिवधः । चोरवधउभयनिग्रहार्थः राजभिर्धृतदण्डास्तु हित्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति संतः सुकृतिनो यथेतिवचनात् ॥ एवं निर्दोषाणां मध्यवर्त्येवान्यतमः शिवकृतो निग्रहः सर्वोऽपि । अतः पुत्रादिनिग्रह इव ब्रह्मादिनिग्रहोऽप्युचितविषय एव । तदुक्तं शिवपुराणे । ये पुनर्निग्रहाः केचिद्ब्रह्मादिषु निदर्शिताः । तेऽपिलोकहितायैव कृताः श्रीकण्ठमूर्तिना ॥ अखण्डस्याधिपत्यं हि श्रीकण्ठस्य न संशयः । श्रीकण्ठाख्यां शिवो मूर्तिं क्रीडन्तीमधितिष्ठति ॥ सदोषा एव देवाद्या निगृहीता यथोचितम् । ततस्तेऽपि विपाप्मानः प्रजाश्च विगतज्वराः ॥ निग्रहोऽपि स्वरूपेण विदुषां न जुगुप्सितः । अत एव हि दण्ड्येषु दण्डो राज्ञां प्रशस्यते ॥ यत्सिद्धिरीश्वरत्वेन कार्यवर्गस्य सर्वशः । न स चेदीशतां कुर्याज्जगतः कथमीश्वरः ॥ हिते सदा निषण्णानामीश्वरस्य निदर्शनम् । कथं स हृष्यते सद्भिरसानामेव निग्रहात् ॥ सर्वोऽपि निग्रहो लोके न च विद्वेषपूर्वकः । न च द्वेष्टि पिता पुत्रं यो निगृह्यापि शिक्षयेत् ॥ इति ॥ एवं निद्राकौर्ययोरभावेऽपि मोहादिविकारो यदि दृश्येत तदाऽपिकल्प्येत तमसाऽभिभूतत्वम् । अतः श्रीशिवे तस्याप्यभावात्तत्कल्पनं निरवकाशमिति भावः । इत्यादि॥ एवमादिभिः श्लोकैः श्रीशिवस्य तामसत्वं प्रमाणोपन्यासपुरःसरं निराकृत्य पशुपतित्वदोषोऽपि निरस्तः । तत्रत्यं पद्यमेकमात्रमुद्धृत्यात्र प्रकाश्यते । यथा

**आगन्तुकं यदि भवेत्तव पाशुपत्य-**
**मर्थोऽपि निस्तरति नानुपपत्तिसीमाम् ।**
**संसारिणो हि सकलाः पशवो निरुक्ताः**
**स्यादादिमत्कथमधीश्वर तत्पतित्वम् ॥ ३१ ॥***

---

* यदि ते पाशुपत्यं पशुपतित्वमागन्तुकं अस्वाभाविकमादिमदित्यर्थः । यदि भवेत्तदा अर्थः पशुपतिपदस्यार्थोऽपि अनुपपत्तिसीमां अयोग्यत्वस्यमर्यादां न निस्तरति नोल्लङ्घयति । अयोग्यत्वरूपेण दोषेण ग्रस्तो भवतीत्यर्थः । कः स पशुपतिपदस्यार्थ इत्युत्तरार्धेनाह । संसारिण इति । निरुक्ता अर्थापिताः ।

पाशुपत्यं हि सर्वेषामपि जीवानामाधिपत्यरूपं सर्वेश्वरत्वमेव । आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्तिनः । तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृत इति शैवलैङ्गादिपुराणोद्घोषात् । अतस्तदनादिसिद्धमादिमत्कल्पयितुं न युक्तमिति भावः । एतेन तत्तेजोऽसृजतेत्यादौ भूतार्थकप्रत्ययसत्वेऽपि यथा तेज आदीनां न नित्यत्वं तथा पशुपतित्वस्याप्यस्त्विति शङ्का निरस्ता । .... ... ... न चेह भूतभाविवर्तमानसकलजीवाधिपत्ये पारमेश्वर्ये नित्ये सिद्धधर्मत्वन्यायः प्रवर्तयितुं शक्यते । एवं प्रसाधितं पाशुपत्यस्यानादित्वम् । इत्यादि

एवं गङ्गाधारणस्यापि यो हेतुः कैश्चिदुपन्यस्यते भगवता किल शिवेनात्मानं पावयितुमेव पावनीति शिरसि धृता भागीरथीति तदपि निकाममयुक्तमिति निराकृतं श्रीदीक्षितचरणैस्तत्रैव । यथा—

**गङ्गा धृता न भवता शिव पावनीति**
**नास्वादितो मधुर इत्यपि कालकूटः ।**
**संरक्षणाय जगतां करुणातिरेका-**
**त्कर्मद्वयं कलितमेतदनन्यसाध्यम् ॥ ३५ ॥**

गङ्गाधारणं तावदनन्यसाध्यमिति भारते भगीरथं प्रति गङ्गावचनेनावगतम् । करिष्यामि महाराज वचस्ते नात्र संशयः । वेगं तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् ॥ न क्षमस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप । अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरादिति ॥ रामायणेऽपि तं प्रति ब्रह्मवचनेनावगतम् । गङ्गायाः पतनं राजन्पृथिवी न सहिष्यते । तां वै धारयितुं नान्यं पश्यामि शूलिन इति ॥ भागवते तु । कोऽपि धारयितुं वेगं पतन्त्या मे महीतले । न चेद्भूमितलं भित्त्वा नृप यास्ये रसातलमिति पृष्टवतीं गङ्गां प्रति भगीरथवचनेनावगतं यथा-धारये-द्दवर्तावेगं रुद्रः स्वात्माशरीरिणाम् । यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव जन्तुषु । इति । इदं च गङ्गाधारणं न केवलं भगीरथपितामहोत्तारणमा-

त्रार्थं किं तु सर्वोपकारकस्यागस्त्येन पीतस्य समुद्रस्य परिपूरणेन गङ्गा-वेगाद्भूविदारणपरिहारेण च जगत्संरक्षणार्थमित्यपि भारते समधिगतम्। तत्र ह्यारण्यपर्वणि अगस्त्यनिपीतस्य लोकपावनतया सर्वोपकारकस्य समुद्रस्य परिपूरणोपायं प्रष्टुमागतान्देवान्प्रति ब्रह्मणा भगीरथः स्वपिता-महोत्तारणार्थं गङ्गामानेष्यति तया च समुद्रस्य पूरणं भविष्यति विग-तज्वरा भवथेत्युक्तमिति प्रपञ्चितम्। एवमनन्यसाध्यं गङ्गाधारणं जग-त्संरक्षणार्थमेव शिवेन कृतं न तु स्वस्यापि पावनीति तद्धारणं कृतम्। यथा-कालकूटं विषं मधुरमिति नास्वादितं किं तु जगत्संरक्षणार्थमेव एवमिद-मपीति दृष्टान्ततया संप्रतिपन्नं कालकूटग्रसनोदाहरणम्। तद्धि जगत्सं-रक्षणार्थमिति शिवपुराणादिषु प्रसिद्धमेव। भागवतेऽपि तथैवोक्तम्। तत्र हि कालकूटप्रादुर्भावानन्तरं तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्प-दसह्यवीर्यम्। भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदा-शिवमित्युक्त्वा ततस्तत्प्रसादनाय त्रिमूर्त्युत्तीर्णनिस्त्रैगुण्यशिवाभिधानपरब्र-ह्मरूपपरमात्मतत्त्वतया तत्र कैलासवासिनः श्रीकण्ठरुद्रस्य शिवविभूतिवि-शेषस्य प्रजापतिकृते स्तोत्रे कालकूटसंहरणमिदं ब्रह्मादीनामप्यसाध्यमत-स्त्वदेकशरणा वयमित्युक्तम्।

एवं भगवतः श्मशाननिवासित्वरूपो दोषोऽपि कैश्चिदुत्थाप्यमानः परिहृतः सप्रपञ्चम् +। तस्यापि सारमात्रमत्र प्रदर्शयितुमिच्छामः। यथा-

**दग्धे तवाक्षिदहनेन चराचरेऽस्मि-**
**न्मत्वाऽखिलं भुवनमेव महाश्मशानम्।**
**तत्र स्थितिं विबुधनाथ तवासहायां**
**संतः श्मशानवसतिं समुदाहरन्ति ॥ ४८ ॥**

---

+ श्रीशिवसहस्रनामभाष्ये तु श्मानः शेताः प्राणिनः शेरते पुनर्जन्माभावाल्लीयन्ते ऽस्मिंस्तच्छ्मशानमितिव्युत्पाद्य श्मशानं मोक्षप्राप्तिस्थानमिति स्थिरीकृत्य तच्च काश्यां तु मरणान्मुक्तिरिति काश्येवेत्याभिहितमत एव च तत्र निवासाच्छ्रीशिवस्य नास्ति दोष-लेशोऽपीत्युक्तमिति प्रकाशकः।

अत्र भागवतवचनं कामाध्वरत्रिपुरकालगराद्यनेकभूतद्रुहः क्षपयतः स्तुतये न तत्ते । तन्वन्तकाल इदमात्मकृतं स्वनेत्रवह्निस्फुलिङ्गशिखया भसितं न वेदेति ॥ एवं महाश्मशानवासदोषं परिहृत्य क्षुद्रेष्वपि श्मशानेषु नृत्यकारित्वरूपं दोषं बीजोपन्यासेन परिहरति । यथा—

**संध्यासु भूतगणभैरवभद्रकाली-**
**संरम्भजन्मजगदापदपासनाय ।**
**तद्गोचरेषु पितृकाननभूमिषु त्वं**
**तत्तादृशं गिरिश ताण्डवमातनोषि ॥ ४९ ॥**

महान्खल्वस्य विवरणप्रपञ्चो न शक्यते समग्रः समुद्धर्तुमतस्तात्पर्यमात्रं प्रदर्शयामः । तथा हि । लिङ्गपुराणे संध्यासु श्मशाननृत्यस्य हेतुरुक्तः । पुरा किल पुरुषेणावध्यस्य दारुकासुरस्य वधार्थं शिवेन प्रेरिता महादेवी जगन्मातृत्वेन दयालुतया क्रूरमपि तमसुरं न जघान । किं तु केन चिदंशेन शितिकण्ठं प्रविश्य कालकूटस्य सहस्रतममप्यंशं पीत्वाऽतिक्रूरा भद्रकाल्यभवत् । ततश्च दारुकं निहत्य गणैः सह श्मशाने निवसन्ती स्वयं लोकान्संहर्तुमारेभे । ततः शिवः केनचिदंशेन बटुकभैरवो भूत्वा तामुपसृत्य स्तन्यं याचमानो रुदन्नशेष्ट । साऽपि दयया तस्मै स्तन्यं प्रादात् । स तु तत्पानेन सपदि परिवृत्तस्वभावः क्रूरो भूत्वा तया सह जगत्संहर्तुमारेभे । ततः प्रभृति च श्रीशिवो भद्रकाल्या बटुकभैरवस्य तद्गणानां च परित्रासाज्जगद्रक्षणीयमिति कृत्वा तेषामानन्दनाय श्मशानभूमिषु नृत्यति । सैव हि भद्रकाल्यादीनां निवासभूमिरिति ॥ अतःपरं च महाभारतवामनपुराणश्रीमहाभागवतादिषु यथोक्तं नैतद्दूषणमिति तथैव सविस्तरं प्रोक्तं दीक्षितपादैः । एतच्च ब्रह्मतर्कस्तवे द्रष्टव्यं रसिकैः ॥

सहृदयाः समुपहृतोऽयं ब्रह्मतर्कस्तवस्य सारः श्रीमद्भ्यः संख्यान्तरे तु प्रबन्धान्तराण्युदाहरिष्यामः । ( क्रमशः )

# श्रीभागीरथीमाहात्म्यम् ॥



## सुधासोदर्यं ते सलिलमशिवं नः शमयतु ।

हा धिग्दैवम् । येषामेवातिविशालतमस्य ज्ञानाम्भोधेः कणानास्वाद्य विदेशवर्तिनोऽपि वैज्ञानिकत्वमासादयितुमीहन्ते येषामेव करुणालवस्य निदर्शनानि श्रीब्रह्मसूत्रप्रभृतीनि शास्त्राणि पुराणसङ्घाश्च ये च योगबलात्त्रैकालिकमपि वस्तुजातं प्रत्यक्षीकृत्य तत्तत्कालोचितान्यभिदधुः कर्माणि ये च स्वप्नेऽपि परप्रतारणं पापमेवेत्याकलयाञ्चक्रुस्तेषामेव पवित्रतमानामार्याणां वंशे समुद्भूता विलक्षणवितर्का नव्यपुरुषाः सर्वमपि प्राचीनानां मतं नाम परप्रतारणायाः पराकोटिरिति संभावयन्तो धिक्कुर्वन्ति प्राचीनान् । न चैषां वेदाः प्रमाणं शास्त्राणि न स्मृतयो नापि वा पुराणानि । यो हि प्राचीनानां वेदेष्वादरः स एषां पाश्चात्यवैज्ञानिकानां वचनेषु । ते यदि ब्रूयुर्नास्ति गोरात्मेति तदाऽमी अपि तेषामेकान्तपरिचरा ॐ तथेति तदपिस्वीकुर्युः । तत्रैव विहितसुदृढविश्वासा ह्येते निजपितृदेवतृप्तिहेतुभूतमपि श्राद्धं ब्राह्मणानामात्मम्भरित्वे दृष्टान्तत्वेनोपन्यस्यन्ति । सुरपूजनमपि प्रतारणामाकलयन्ति । यज्ञोपवीतधारणमपि निर्हेतुकमेव मन्यन्ते । मृते पितरि क्रियमाणं क्षौरमपि यत्किञ्चनकारित्वपक्षे कुर्वन्ति । तीर्थजलान्यपि तृणायमन्यन्ते । क्षेत्राण्यपि सावहेलं पश्यन्ति । किमधिकं तदेषां प्रमाणपदवीमवगाहते तदाचरणीयतामुपयाति तत्रादरः समुन्मिषति तदेवानुल्लङ्घनीयं भवति तदेव च लोकहितबीजतामुपयाति यन्नामपाश्चात्यवैज्ञानिकानां वदनारविन्दतो यदृच्छयाऽपि निःसरेद्वचनमित्यहो जितं भगवता कालेन ।

पाश्चात्यास्तु अस्मद्देशीयानामपि प्राचां वचनानि विचारयितुं प्रवृत्ता विविधैर्यन्त्रादिभिरनुभूय प्राचीनप्रतिपादितानां वस्तूनां माहात्म्यं यदा यदा

ब्रुवते अहो पवित्रतमा किल तुलसी। अस्या हि पत्रैः स्पृष्टोपि पवनः पवित्रतामुपयाति। कषायपत्रतोऽपि शैत्यव्यथापनयने साधीयांस्तुलसी-वृक्ष इति वा। अहो मतिर्भारतवर्षीयाणां प्राचीनविदुषां यदेतैः प्राणा-यामो विधेयत्वेनोक्तः। एतेन हि प्रस्फुरति बुद्धिः संवर्धते शक्तिः शुध्यति च मास्तिष्कमिति वाऽवश्यंविधेयानि श्राद्धानीति वा। तदा तदा तदनुकरणमात्रेण कृतार्थीभवितुकामाः खल्वेते क्षणादेव तत्र तत्र वाता-यनेषु प्रग्रीविकाप्रान्तेषु वाट्टालिकानां शतशस्तुलसी पात्राणि न्यस्यन्ति। अर्धसाधितमपि दुग्धपत्रकषायमूषरे क्षिपन्ति। प्रशंसन्ति प्राणायामं निम-न्त्रयन्ति च ब्राह्मणाञ्छ्राद्धार्थम्। यत्सत्यं बालस्यापि वदनमलङ्कुर्या-द्धासोऽमीषामेवंविधेनाचरितेन।

अद्यत्वे च कश्चिद्युरोपीयवैज्ञानिकः * सहस्रशोऽपि क्रोशानतीत्य भारतवर्षमुपागतोऽत्रत्यैरप्रगल्भविवेकैः कैश्चित्प्रवाहोऽयं पूतिगन्धिनां पदा-र्थानामशुद्धेयमस्पृश्येयमित्यादिवचनैः कृतपुरस्कारामपि भागीरथीं तत्त्वतो जिज्ञासुः किमित्येषा भारतवर्षीयैः श्रद्धालुभिः प्रशस्यतमेत्यभिधीयत इति निर्णेतुकामश्चातिमहामूल्यानि पृथक्करणयन्त्राण्यादाय श्रीभागीरथ्या-जलं पृथक्चकार। सूक्ष्मदर्शिना चापरेण महामूल्येन यन्त्रेण निरीक्ष्य तन्नीरं परीक्ष्य च निपुणं प्रकारान्तरेण तस्या माहात्म्यातिशयं प्रतिपन्नो यदाह तदत्र केषांचित्तोषायोपन्यस्यते यथा—

श्रीमत्याः काश्याः परिसरमलङ्कुर्वाणायाः श्रीभागीरथ्या नीरं मया पृथगकारि। तच्च पृथक्कर्तुमारभमाणोऽहं प्रथमं तावज्जलमात्रे विद्यमानाः सूक्ष्मतमाः कीटविशेषाः श्रीभागीरथ्या अपि नीरे विद्यन्ते न वेति विचारयितुमुद्युक्तः। जिज्ञासया चानयाऽऽक्रान्तमानसः समादाय सूक्ष्म-तरमपि पदार्थं महत्तरीकृत्य प्रदर्शयत्किमपि सूक्ष्मदर्शकं यन्त्रं श्रीमत्या भागीरथ्याः सलिलमद्राक्षम्। अहो चित्रम्। यन्निपुणतरमवलोकिते

* मार्कंटयूनसंज्ञः

तस्मिन्नासीन्मे निश्चयो यथा—— नूनं गगनमिवातिमात्रनिर्मलमिदं गङ्गोदकमिति । ततश्च महीयांसमध्यगच्छं विस्मयम् । विषूचिकासान्निपातजनपदोध्वंसनप्रभृतयो हि भूयांसो भुवनविभीषणा व्याधयः सलिलगतैः कीटविशेषैरेवोत्पद्यन्ते । कीटाश्चैते भूमिजलसमीरणानुसारेण सर्वाण्यपि जलानि यथायथं दूषयन्त्येव न्यूनमधिकं वा । कालविशेषे च तेभ्य एव कीटेभ्यः समुत्पद्यन्ते रोगा अनेकविधाः । सत्यप्येवं सृष्टिस्वाभाव्ये निपुणतरं सूक्ष्मदर्शकेणापि यन्त्रेणावलोकमानेन मया भागीरथ्या जले नैकोऽपि कीटको दृष्टः । एवं भूते च येऽस्माभिर्यन्त्रविशेषैरपि निश्चेतुमशक्यास्तेष्वपि सूक्ष्मतरेषु विषयेषु भारतवर्षीयाणां प्राचीनविदुषां निःसंदिग्धः सिद्धान्त इत्यहो पाण्डित्यं भारतीयानां प्राचीनानाम् । तदानीं किलाहं सहस्रशः प्राचीनमुनीनां धन्यवादमुदघोषयम् । अतिमात्रं चोपागच्छं विस्मयम् ।

ततश्च पुनरहं व्यचिन्तयं किमिति जलान्तरेष्विव गङ्गाजलेऽपि न कीटकैर्भवितव्यमित्येतदवश्यमनुसंधेयमिति । विचिन्त्य चैवमादाय कूपोदकं ( यत्किल जलत्वादेव कीटदूषितम् )तद्गङ्गाम्भसि निक्षिप्तवान् । पुनश्चापश्यं सूक्ष्मदर्शकेन यन्त्रेण । एवं कुर्वाणस्य च ममासीत्प्रत्यक्षं यथा जलान्तराः सर्वेऽपि कीटका गङ्गोदकं प्राप्य सपदि निधनमाजग्मुरिति । अन्तः क्षिप्तेऽपि कीटसंकुले नीरे गङ्गाजलं निजनैर्मल्येन गगनं विडम्बयत्येव । नैवैतज्जलान्तरेण दूषयितुं शक्यमिति । आसीच्च मे सिद्धान्तः—

न खलु जलं नामेदं सलिलं गङ्गाया अपि तु भूतलदुरासदममृतमेवेदमिति ।

यथा जलान्तरैः कीटकैर्नेदं दूषयितुं शक्यमेवं नानाविधाः पूतिगन्धयोऽपि पदार्था नास्य विकृतिमुत्पादयितुं प्रभवन्ति । काश्यां किल मूत्रपुरीषादीनामपि कुल्या गङ्गायामिव प्रवेश्यन्ते तत्रत्यैः । कीटका अपि बहव एतत्प्रविशन्ति । किं तु न तैर्वस्तुभिर्नापि वा तैः कीटैरेतस्यमा-

लिन्यं भवति । नापि वाऽशतोऽपि पावित्र्यमुपयान्ति । प्रत्युत पूतयोऽपि पदार्था भागीरथीजलस्य संसर्गात्समुज्झन्ति दुर्गुणमात्मीयम् । कीटकास्तु यत्र निपतन्त एव म्रियन्ते । अहो नु खलु भोः पावित्र्यं भागीरथीनीरस्येति ।

श्रुत्वा चेदं पाश्चात्यपण्डितवचनं बहव इदानीं प्रतिपन्नाः सुधारका माहात्म्यं मन्दाकिनीसलिलस्य । आस्तिकानां तु प्राचीनमतानुयायिनां भारतीयानां सितासिते सरित इत्यादि वेदवचनान्येव भागीरथीमाहात्म्यप्रतिपादनायालं प्रयासस्त्वयं नव्यानेव कांश्चित्प्रत्याययितुमिति शिवम् ।

---

## अस्मत्कर्तव्यम् ।

( पञ्चमखण्डस्य द्वादशसंख्यातोऽनुवृत्तम् )

**यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।**

निर्दिशन्ति किल शास्त्राणि नायमात्मा नायमात्मेति न त्वयमेवात्मेति । न त्वतो नास्त्येवात्मेति प्रतिबोद्धव्यम् । अन्धः किमपि वस्तु निर्देष्टुं न पारयतीति नास्त्येव तद्वस्त्विति न किल युक्तमभिधातुम् । जनसङ्कीर्णे प्रदेशे भर्तुरभितोऽपि वर्तमाना वधूर्न खलु ममायं भर्तेति सांगुलिनिर्देशमभिधातुं पारयते । यदि तु पृच्छेत कश्चिदन्यमेवाभिमुखीकृत्य सुदति किमयं ते भर्तेति तदा सा ब्रूयान्नेति । एवं मुहुर्मुहुरन्यमन्यमभिमुखीकृत्यानुयुक्ताऽपि नायं नायमित्येव भाषेत । किं तु भर्तारमेवाभिमुखीकृत्य यदि साऽनुयुज्येत मुग्धे किमेष एव ते भर्तेति तदा किल नासौ किंचिदपि ब्रूयात् । अपि तु तदानीं तस्या लज्जया तूष्णीम्भाव एव सोयमस्या भर्तेत्युत्तरयेत् । अथ भर्तुरवलोकने यदियं कुलवधूस्तूष्णीं भवति नैव चायमेव स इत्युत्तरयति किन्नु ततो बोद्धव्यं किमस्त्यस्याः पतिरित्याहोस्विन्नास्त्येवेति । अर्थादस्त्यवेत्यवश्यमवगन्तव्यम् । एवं शास्त्रैः स्वरूपतोऽनिर्दिष्टमपि ब्रह्म विद्यत एवेत्यभ्युपेतव्यम् । निषेधमुखेनैवात्मनो निर्देशस्तु शास्त्रैरप्यात्माऽ२ क्यः स्वरूपेण निर्देष्टुमित्येव बोधयति । गुरुरपि नायमात्मेति यन्निषेधमुखेने-

शोपदिशति शिष्यं तस्याप्ययमेवाशयोऽवगन्तव्यः । किं तु यदा शिष्यः परं ज्योतिष आनन्दमनुभवति तदा गुरुस्तूष्णीं भवति । शिष्यस्तु दिव्यं प्रकाशमधिगतः समनुभवत्यमन्दमानन्दम् ।

नैतद्दृश्यं जगदात्मेत्यशेषाणामेव शास्त्राणां सिद्धान्तः । श्रुतिरप्येतदेव प्रतिपादयति । सा खल्वात्मज्ञानेभूयिष्ठानुपायानुपदिशति यैरात्मावगन्तुं शक्येत । सर्वोऽपि स्वस्वसामर्थ्यानुरूपमुपायमनुवर्तेत ।

यथा कश्चिन्नरः पीवरतनुना बलीयसा पथिकेनात्मनिवासोचितं ग्रामं मध्याह्ने पृष्टो ब्रूते महाभाग इतः पञ्चक्रोशान्तरितोऽमुकसंज्ञस्तव निवासोचितो ग्रामस्तत्रैवातिवाह्यतां रात्रिरिति । अथ स एव केनापिनिर्बलेन मन्दगतिनाऽस्थिमात्रसारेण तथैव कृतप्रश्नो ब्रूते भद्र इतः क्रोशद्वयान्तरितस्तवनिवासोचितोऽमुकनामा ग्रामस्तत्रातिवाह्यतां रजनीति । पृच्छतो नरस्य सामर्थ्यमनुमायाभिहितमेतद्युक्तरूपमेव । यस्य हि यादृशी शक्तिस्तस्य तादृश उपदेशः । एवं शास्त्रमपि मोक्षपत्तनं प्रवेष्टुं वाञ्छन्तं नरं स्वसामर्थ्यानुरूपमेवानुवर्तितुमाश्रमचतुष्टयं विदधाति । तत्र च यो यस्यानुरूपः स तेनाश्रयणीयः । ते च ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसंन्यासाख्याश्चत्वारो द्विजैरनुभावितव्याः क्रमशः । किं तु गार्हस्थ्यात्परमेव संन्यासः स्वीकार्य इति नायं नियमः । यदा हि नरस्य वैराग्यं जायेत तदैव संन्यासो विहितः । अतो यदि वैराग्यं तदा ब्रह्मचर्यादपि प्रव्रजेत् । एवमेव श्रुतावुक्तं यदहरेव विरजेत्तदहरेव प्रव्रजेद्ब्रह्मचर्याद्वा गृहाद्वा वनाद्वेति ।

आत्मानुचिन्तनमेव संन्यासिनां परोधर्मः । गृहस्था अप्यात्मानुचिन्तनाभ्यासमात्मनो धर्मस्यान्यतमं भागमाकलयेयुः । आत्माभ्यासविषये न किल विलम्बो युक्तः ।

उक्तं च

**यावत्स्वस्थमिदं कलेवरगृहं यावज्जरा दूरतो**
**यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।**

आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महा-
न्संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः॥इति॥

तत्त्वं च जिज्ञासुः शास्त्रमभ्यस्येत् । तत्त्वज्ञानानन्तरं च जह्याच्छास्त्राणि । तेषां तदानीमनुपयुक्तत्वात् । शरीरमेवात्मेति विचारस्तु मायामूलक एव । शरीरस्यात्मीयत्वविषयिणी तु कल्पना नरशृगालयोस्तुल्यैव तत्र शृगालस्यैव कदाचिच्छरीरस्यात्मीयत्वविषयिणी कल्पना युज्येत । मरणोत्तरं हि नराणामपि शरीरं शृगालस्यैवाधीनं भवति ।

शरीरं किल जलबुद्बुदैस्तुलितम् । किं तु जलबुद्बुदमप्यतिशेते शरीरं संकटाधिक्येन । अतर्कितोपनतं मरणं यथा कश्चित्स्नातुं गच्छति तत्रैव दैवगत्या निमज्जति च । उरगग्रस्तार्धतनोर्भेकस्येव शरीरमिदमस्माकम् । यदर्थं वयं मानुष्यं प्राप्तास्तत्साधने धनमन्ये च लौकिका भोगाः संकटाथैव । तेषां रक्षणं केवलं त्रासावहमेव । अत्रेयं काचिदाख्यायिका । यथा— कश्चिद्गुरुरात्मनः शिष्येण सह स्थानान्तरमुद्दिश्य प्रतिष्ठमानः पथि किमपि भयं वर्तते न वेति तं पप्रच्छ । शिष्यस्तु न बोधितवान्प्रयोजनमेवं विधस्यानुयोगस्य । अथान्यस्मिन्दिवसे विविक्तमासेवमानो गुरुः कामपि वसनपेशिकां कुक्षेर्बहिः कृत्वा रक्षैनामप्रमत्तमिति शिष्याय प्रादात् । किमेतस्स्यादिति कुतूहलाकुलितः शिष्यो यावत्तामुद्ग्रथ्य बन्धनमवलोकते तावत्तत्र दीप्तिमत्सुवर्णमभूत् । ततश्चेद्गेव प्राग्गुरुणा कृतस्य प्रश्नस्य बीजमिति ज्ञात्वा तां सुवर्ण गर्भां पेशिकां धरातले निचखान । अथ प्रतिनिवर्तमानो गुरुः कञ्चन पान्थमप्राक्षीद्विद्यते कापि मार्गे भीतिरिति शिष्यस्तु तदाकर्ण्य सविनयमब्रवीत् गुरो भीतिस्तु किल प्रागेव पृष्ठतः कृताऽलमिदानीं चिन्तयेति ।

नेदं शरीरमात्मेति प्रत्यक्षेऽपि दृश्यते यथा ममैष पादो ममेदं शिर इत्येव वयं ब्रूमो न त्वहं पादोऽहं शिर इत्यादि । एतावतैव किलैतेषां कश्चिन्नियन्ता स्वामी च विद्यत इति संसिद्धम् । यदा किल देवदत्तो

म्रियते तदा मृतो देवदत्त इति वयं ब्रूमः । किं तु दृश्यत एव तस्य शरीरम् । अतः सिद्धं नात्मा शरीरमिति । नान्नमय आत्मा । किं तदात्मा प्राणात्मकः । गाढप्रसुप्तो नरस्तारतरमाहूतोऽपि नैव प्रत्युत्तरयति। तत्किं तदा न स जीवति । अतो नात्मा प्राणमयः । किंतर्हि मन एवात्मा । देवदत्तो ब्रूत एवं मे मनस्यासीदित्यादि । अतोऽस्ति किंचिन्मनसोऽपि भिन्नं येनानुसार्यते लोक इति सिद्धम् । अतो नात्मा मनोमयः । नाप्यात्मा बुद्धिसुखात्मकः । सुखं हि क्षणविनाशि । नात्मा विज्ञानमयोऽज्ञानमयो वा । नापि स्तनन्धयत्वबाल्यतारुण्यवार्धक्यादिभिर्विक्रियते ।

अथ किमिदानीमात्मा । शुद्धचिन्मयोऽयमात्मा । सुषुप्तौ किल शुद्धं ज्ञानमाविर्भवति । ज्ञानं तु द्विविधं स्मृतिरनुभवश्चेति । सुषुप्तिसमुद्भूतं तु ज्ञानं स्मृतिसदृशम् । प्रबुद्धो हि प्रातर्वदति सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति । निद्रायां सुखं विस्मृतिश्चानुभूयते । सर्वव्यापी खल्वयमात्मा । स प्रकाशतेऽतितरां जागृतिस्वप्नसुषुप्तिष्ववस्थासु । स किलाब्रह्मपिपीलिकान्तमशेषं जगद्व्याप्नोति । स्वयमदृष्टोऽपि भुवनमशेषं प्रेक्षते ।

आत्मानमधिगन्तुं तिस्रः किल श्रेणयो विद्यन्ते । ताश्च श्रवणं मननं निदिध्यासनं चेति। तत्र श्रवणं नाम गुरुणोक्तस्य श्रोत्रेन्द्रियेणावग्रहणम् । मननं तु गुरूपदिष्टस्य तत्त्वस्य स्वयं परीक्षणमनुशीलनं च । निदिध्यासनं चैकाग्र्येण मनसाऽऽत्मनोनुध्यानम् ।

योगश्चित्तवृत्तिनिरोधः। चित्तवृत्तिनिरोधेऽपि स एवोपायः प्रयुज्यते। स च योगोमन्त्रोलम्बिक आलयो हठश्चेति चतुर्विधः। प्रासादशिरसि विद्यमानस्य केतोरं शुकमिवातिचञ्चलं चेतः। यथा संक्षुब्धे सरोजले प्रतिबिम्बिता अपि दिव्या आकृतयोऽसमग्राश्चञ्चलाश्च दृश्यन्ते । प्रशान्ते तु सलिले ताः सुस्पष्टाः सुनिश्चलाश्चावलोक्यन्ते । एवं न तावन्मनस्यात्मनः प्रतिबिम्बं सुस्पष्टतया पदमाधत्ते यावन्न तन्निश्चलं निराबाधं च ।

चित्तस्यैकाग्र्यमधिगन्तुं बहवः किलोपायाः । तदर्थमेव प्रतिमाः

पूज्यन्ते । न किलातीन्द्रिय आत्मनि सुनिश्चलं चित्तमाधातुं मनुष्यः शक्नोति ।अतः प्रथमं प्रतिमानामेव पूजनं विहितम् । ततः शनैः शनैरात्मनोऽनुचिन्तनम् । परब्रह्मणः प्रासादं प्रवेष्टुमभिलष्यतो मुमुक्षुपथिकस्य गन्तव्ये पथि प्रथममिदं वसतिस्थानं प्रतिमापूजनं नाम । यथा दूरतरे प्रदेशे वर्तमानं कमपि ग्रामं जिगमिषुः पान्थोऽस्मात्प्रदेशादतिदवीयांस्ते गन्तव्यो ग्राम इत्यभिहितः परिश्राम्यति किं तु प्रथममितोऽतिसमीपे ग्राम इत्यभिहितः सोल्लासं गच्छति तत्र गतश्चेतः समीपतरः स इति तत्र चातिसमीपे इति प्रोक्तः सानन्दं गच्छति न च परिश्राम्यति । एवं शनैः शनैः स्थानात्स्थानं गच्छन्नप्रतिहतोत्साहोऽचिरादेवात्मनोऽभिलषितं ग्राममवाप्नोति । एवमेवेदम् । लब्धात्मज्ञानो जीर्णं वसनमिव शरीरमवलोकते ।

अथ को नाम मोक्षः । अज्ञानस्य निरास आशायाश्च विनाशो मोक्षः । निस्पृहस्य तृणं जगत् । निराशस्याखिलं जगदपि वशे वर्तते ।

ब्रह्मक्षत्रियवैश्यशूद्राख्याश्चत्वारो वर्णाः कर्मविशेषाद्विहिताः । तेषां च यानि कर्माणि तानि तैस्तैरवश्यमनुष्ठेयानि । कर्माणि च चित्तस्य शुध्यर्थमेव कल्पितानि ।

अज्ञानं तु तमःस्वरूपं प्रकाशात्मकं च ज्ञानम् । धूलिपटलोपहतं दर्पणमिव नराणां चेतः । सा किल धूलिरवश्यं निराकर्तव्या । यतश्छाया न मूर्च्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा । यथा न विना घर्षणादग्निः काष्ठादुत्पद्यत एवं नह्यनपनीताज्ञानपटले चेतस्याविर्भवेज्ज्ञानम् ।

कर्मसु च कानिचिन्निषिद्धानि तानि परित्याज्यानि । कानिचिच्च विहितानि तानि श्रद्धयाऽनुष्ठेयानि । कानिचिदीप्सिताधिगमायाश्रयणीयानि । कानि चिच्चात्मनो दुःखविनाशाय त्याज्यानि । त्रिकालज्ञायीनि शास्त्राणि कलियुगेऽवश्यं भावीनि पापानि विचिन्त्य तन्निवृत्तये प्रत्यहं दशापि गायत्रीर्जपेदित्यादिदिशुः ।

ये चात्मन आचारा न ते हातव्याः । न हि नृशंसेनाधिगम्यत आत्मज्ञानम् । ज्ञातात्माऽपि किमपि पापं कर्मानुष्ठाय प्रारब्धकर्मणो निन्द्यथा नैव शुद्धिमुपयाति । पूर्वजन्मसु कृतैः सुकृतैः किल ज्ञानमुपलभ्यते । यदि तु दुष्कर्मानुष्ठीयेत नात्मज्ञानमप्यधिगम्येत ।

अत्र किल भारते मोक्षाप्तये नानाविधाः पन्थानः समुद्भूताः । तत्र च सालोक्यसारूप्यसायुज्याख्यानि सोपानानि । तत्र च मिथो विरोधे नास्ति प्रयोजनं किंचित् । मुक्तिलाभमुद्दिश्य प्रत्येक आत्मन इष्टं पन्थानमवलम्बेत ।

भूयान्किलास्मदर्थे श्रीमच्छङ्कराचार्यैः परिश्रमः सोढः । तत्रभवद्भिश्च तैर्मण्डनमिश्रमवजित्य सरस्वत्यपि पराजिग्ये । मूर्तिमत्यपि भारती नास्य ज्ञानं चालयितुं प्रबभूव । सर्वेऽपि वयं तस्यैव वचनानुसारेण वर्तेमहि । अन्यथा न केवलमाध्यात्मिकज्ञानहानिरपि त्वस्मद्गुरोः परिश्रमोऽपि नैष्फल्यमुपगच्छेत् ।

अत्र जगति यदेको नरः संमानसुखादिभिरन्यमतिशेते स ईश्वरस्यैव पक्षपात इति न वक्तव्यम् । तत्र हि कारणं कर्मैव ।

कर्मणैव कर्मणः प्रध्वंसः कर्तव्यः । न खल्वीश्वराय पार्थिवान्येव कुसुमानि प्रतिदिनमर्पणीयानीत्येव नियमः । किं तु यथा पार्थिवान्येवं कर्मात्मकानि पुष्पाणि भगवते समर्प्यन्ताम् । भगवान्हि कर्मकुसुमैरेव विशेषतः प्रसादोन्मुखो भवतीति शिवम् ।

---

# अद्भुतः पिशाचः ।

आसीत्किलाद्यावधि संदेहदोलायामेवाधिरूढमस्मदीयं चेतो वर्तते न वा भुवनेऽत्र पिशाच इति । श्रुतं तु बहुशो वृद्धमुखात् । यथा किल दृष्टाः कैश्चिद्विभीषणाकृतयः शून्यानि मन्दिराण्यधिवसन्त एत इति । दृष्टश्चै-

षामावेशः सहस्रशो नराणामङ्गेषु विशेतषश्च नारीणाम् । श्रुतानि पठितानि च संवादपत्रिकादिष्वेषामतिविलक्षणान्याचरितानि । यथा एते किल पीवरतरशरीरमपि मानुषं विद्यमानमपि दृष्टिपथातीततामुपनयन्ति । सुशोभनान्यपि वस्तूनि बीभत्समयतां प्रापयन्ति । समीपतरवर्तिनमपि सपदि शतक्रोशान्तरितं विदधतीत्यादि । किं तु केनात्र प्रत्येतव्यं वृद्धवाक्येष्वघटनीयेषु चाचरितेषु । केवलं तु नास्त्येव सर्वथा पिशाच इति दृढीभूतायामपि मतौ कैश्चिदाधुनिकैरपि मुहुर्मुहुः कर्णाभ्यर्णे विचार्यतां विचार्यतां ननु श्रद्धेयतमं प्राचीनानां वचनजालमिति प्रतिदिनं समुच्चारिते महीयसि ध्वनौ किन्वेतत्स्यादिति समुदपद्यत चेतसि जिज्ञासा । ततश्च तया विवशीकृतान्तरैरस्माभिर्निपुणतरं तदनुसंधातुमारब्धम् । आसीच्चास्मन्मनसि मास्तु नाम प्रत्यक्षं पिशाचस्य तथापि यदि सोऽनुमानेनापि सिध्येत्तदाऽपि तस्यास्तित्वमङ्गीकर्तव्यमिति । एवं भूते चानुसंधित्सया भूयः परिभ्रम्य तत्र तत्राप्तानां वचनेभ्योऽनुभवैश्च नानाविधैः सुहृदां निरचिनुमास्त्येव पिशाच इति । सूक्ष्मतरं चानुसन्धीयमाने पर्यवसितं यथा प्रायेण पिशाचानां नारीणामेव जातौ प्रसरति प्रभाव इति किं तु सचेतनायामेव स्त्रीजातावसौ प्रवर्तत इति । भाग्यवशाच्चैतदिदानीमस्माभिरपि भूयिष्ठमनुभूत यदसौ पिशाचोऽदृष्टरूपः सचेतनास्वचेतनास्वपि स्त्रीजातिषु प्रवर्तते ताश्च तामवस्थामापादयति यया बहुभिरपि नरैः प्रत्यक्षीकृतास्ताः स्तोकमपि द्रष्टुं न शक्येरन्निति । कथमन्यथा पत्रप्रापणाधिकरणे सावधानमप्रमत्तैश्च तत्र तत्र प्रापयितुं द्विधा त्रिधा चतुर्धा च परीक्ष्य दीयमाना अधिकरणिकैः प्रेष्यमाणाश्च संस्कृतचन्द्रिकाः भूयसां ग्राहकाणां करकमलं नालङ्कुर्युर्नचापि प्रतिनिवर्तेरन् । यदेता अस्माभिः प्रेषिता अपि चन्द्रिका ग्राहकैर्नाधिगम्यन्ते भवन्ति चातीन्द्रियास्तन्नूनं कोऽपि बलवत्तरः स्त्रीत्वमात्रविमोहितः पिशाच एवैताः कवलयतीति । अपि नामेदमेव सत्यं स्यात् ।

---

सप्रमोदं स्वीकारः—श्रीकृष्णचन्द्रदेवमहाराजप्रेरिता मोदमञ्जूषा साहित्यरत्नाद्युपाधिसमुल्लसितश्रीअम्बिकादत्तव्यासप्रहितानि च सङ्ख्य-सागरसुधागद्यकाव्यमीमांसागुप्ताशुद्धिप्रदर्शनं रत्नाष्टकं चेति चत्वारि पुस्तकान्यधिगतान्येवास्माभिः । तानि च यथावसरमचिरादेव समालोच-यिष्यन्ते ।

---

## समाचारपत्रसंपादकस्तवः । *

देशोपकारव्रतधारकाय
नानाकलाकौशलकोविदाय ।
निःशेषशास्त्रेषु च दीक्षिताय
संपादकाय प्रणतिर्ममास्तु ॥१॥
पत्रे स्वकीये जगदेकनेत्रे
शिशुं त्रिपादं त्रिशिरस्करञ्च ।
सृजस्यजस्रं कुतुकेन तेन
संपादक त्वं चतुराननोऽसि ॥२॥
आकृष्टुमुच्चैर्लघु पत्रमूल्यं
नवोपहारादिविधेर्विधाने ।
समस्तमायाविशिरोमणित्वात्
त्वमेव संपादक माधवोऽसि ॥३॥

---

* स्तवोयं बहुभ्य एव दिवसेभ्यः प्रागुपनतः किन्त्वद्यावधि प्रकाशयितुं न लब्धो-वसर इति क्षमामभ्यर्थ्य यथामति अहोऽस्ति साधुत्वमतः परं किमित्यादौ संशोध्य चेदानीं प्रकाश्यते । न चायं प्रबन्धः सर्वथा संमत. किं तु मनोहर इति प्रकाश्यते ।

स्वदोषराशिं च तृणं विधाय
त्रुटिं समालम्ब्य लघुं परेषाम् ।
अलेख्यलेखैः कृतकालनाशात्
त्वमीश्वरो भीमभयंकरोऽसि ॥४॥
संपादक त्वत्कृपयैव लेखा
निंद्या अपि स्थानमवाप्नुवन्ति ।
बुधाहृतास्तेऽपि भवन्ति हेयाः
सकोपदृक्कोणकटाक्षपातात् ॥५॥
त्वं लेखनीं पाणितले निधाय
विराजसे वीरपदासने स्वे ।
सुरेन्द्रसिंहासनमप्यचिन्त्यम्
तदाऽतिगर्वेण तिरस्करोषि ॥६॥
गृह्णासि संपादक तां यदैव
तदैव शास्त्राणि सविस्तराणि ।
भाषाः समस्ताः सकलाः कलाश्च
त्वां स्वद्वयेनेव समाश्रयन्ति ॥७॥
अहो विचित्रं तदतीव भाति
संपादकत्वेन सहैव यत्ते ।
आयाति शक्तिर्मनसि क्षणेन
नानानवीनौषधिकल्पनायाः ॥८॥
पत्रेषु संप्रेषितपुस्तकानाम्
नामैव गृह्णन्विदधासि मौनम् ।
आलोचनामन्यकृतां तथापि
रम्यामपि त्वं किल धिक्करोषि ॥९॥

विज्ञप्तिमेतां शृणु मामकीनाम्
वदामि संपादक ते हिताय ।
परस्य सत्पुस्तकपत्रकेभ्यो
मा मैव गुप्तं विषयान्हर त्वम् ॥१०॥
टाइम्समुख्यानि जयन्तु तानि
पत्राणि येभ्यः परिगृह्य वार्ताः ।
त्वमन्यदानोदरपूरकस्य
प्राणान्स्वपत्रस्य सदैव पासि ॥११॥
नम्रोऽसि मूल्यग्रहणे च मौनी
पत्रोत्तरे दोषनिदर्शने स्वे ।
रुष्टः कुतो नीतिविदस्त्वयेवं
विलक्षणा नीतिरहो गृहीता ॥१२॥
अभद्रभद्रौषधिपुस्तकानां
विक्रेतृवर्गः समवाप्य सम्यक् ।
विज्ञापनद्वारमलभ्यलाभम्
प्राप्नोति संपादक ते प्रसादात् ॥१३॥
इहास्ति साधुत्वमतः परं किम्
प्रकाश्य लोकस्य विमाननां यत् ।
स्थिते भये पाणियुगं प्रसार्य
क्षमस्व हाहेति च भाषसे त्वम् ॥१४॥
गायन्ति संपादकता गुणानाम्
लीलां यथाशक्ति महाजनास्ताम् ।
स्वातन्त्र्यविद्याबलवर्धनानि
सर्वाणि यच्छक्तिविजृम्भणानि ॥ १५ ॥

अतोऽन्वहं भक्तिभरान्वितोऽहम्
कीर्तिं त्वदीयां किल कीर्तयामि ।
ममापरीदं स्तवनं निशम्य
प्रसीद संपादक सर्ववन्द्य ॥ १६ ॥

इति ।

महावीरप्रसाद द्विवेदिनः
झांशी

## समालोचना ;

( पूर्वतोऽनुवृत्ता । )

### विज्ञानशतकम् ।

अथ यदुदाहृत दिङ्मात्रं शब्दादिसादृश्यं शतकत्रयगतानां विज्ञानशतकगतानां च पद्यानां तदिह सङ्क्षेपत एव विचारयितुमिच्छामः । तथा हि । तत्र तावदिदं नैव विस्मरणीयं यदृच्छयाऽपि कवीनां वदनकमलतो निःस्यन्दते परैरङ्गीकृतोऽपि काव्यरसमकरन्दो न किल ते तं तथाविधमेव निबद्धुं वाञ्छन्ति । नापि तथोपनिबद्ध इत्येव स परप्रणीतत्वमुपयाति । योऽह्यजानद्भिरेव कविप्रवरैरुपनिबध्यतेऽर्थः कथं नाम स परकीयत्वमुपयातु । कविवरः श्रीभवभूतिर्यथाह जगज्जीर्णारण्यं कथमसि विधातुं व्यवसित इति मालतीमाधवे तथैव किलापरोऽपि कश्चित् जगज्जीर्णारण्यं विषयविनिवृत्तस्य मनस इति प्राह । तत्किमेतच्चरणद्वयमेककर्तृकमेवेत्यभ्युपेतव्यम् । अतएवसहनीयतेजः क्षुत्क्षामप्रभृतयो विज्ञानशतकप्रणेत्राऽऽत्मनः काव्ये समुपनिबद्धा अपि शब्दा न खल्वात्मनोऽधिकरणभूतमपि विज्ञानशतकं शतकत्रयविरचयित्रैव श्रीभर्तृहरिणा प्रणीतमिति बोधयितुं प्रभवन्ति ।

अत्रेदमपि प्रसङ्गादवबोध्यम् । विज्ञानशतकं किमु भर्तृहरिणा प्रागेव समुपनिबद्धमाहोस्विच्छतकत्रयप्रणयनादुत्तर एव काल इति । प्रागेवेति तु न शक्यते वक्तुम् । यो हि विज्ञानरसिकत्वं विन्दति न किल स कालकूटसहोदरेषु प्रसज्जते विषयेषु । अत एव शतकत्रयप्रणयनोत्तरकालमेव तत्तेन विरचितमिति स्वीकर्तव्यं किं तु तदपि न युज्यते । यो हि प्राक्प्रणीतानन्तमधुरपद्ये न किल तस्यैव वदनारविन्दादमनोहरः पद्यप्रबन्धः कथञ्चिदप्युदयमासादयति । अतः कथमुत्तीर्यतामियमुभयतस्पाशा रज्जुः । यद्यपि विज्ञानशतकं नाम मनोहरं तथापि न तदंशतोऽपि श्रीभर्तृहरिप्रणीतस्य शतकत्रयस्य तुलामधिरोपयितुं युक्तम् ।

**मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल**
**भ्रातर्व्योम निबद्ध एष भवतामन्त्यः प्रणामाञ्जलिः ।**
**युष्मत्संगवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-**
**ज्ञानापास्तसमस्तमोहमहिमा लीये परब्रह्मणि ॥** (वैराग्यशतकम्)

इत्यादिषु सुस्पष्टमवलोकमाना सुमनोहरा शय्या हृदयङ्गमं वाऽप्योजो ( यद्वामनेनानुमतं पदानां नृत्यत्प्रायत्वामिति ) बन्धस्य वा गाढत्वं सुविशदश्च प्रसादो न किल

**हे पुत्रा व्रजताभयं यत इतो गेहं जनन्या समं**
**रागद्वेषमदादयो भवतु वः पन्थाः शिवोऽमायया।**
( विज्ञानशतकम् )

इत्यादिषु मुहुरतिनिपुणमप्यन्विष्यमाणः कथञ्चिदपि नयनगोचरत्वमुपयाति । अतोऽनन्यगत्याऽवश्यमेतदङ्गीकर्तुमापतितं यन्नैव शतकमिदं शतकत्रयप्रणेत्रा श्रीभर्तृहरिणा प्रणीतमिति ।

एतावता दूरीभूतायामपि सादृश्यकल्पनामूलायां शतकत्रयविज्ञानशतकयोः समानकर्तृकत्वशङ्कायां पुनः किञ्चिदभिधायेतो विरन्तुमिच्छामः । यथा । यदि—

कदा वाराणस्याममरतटिनीरोधसि वस-
न्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
अये गौरीनाथ त्रिपुरहरशंभो त्रिनयन
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्॥

इति वैराग्यशतकवर्तिना पद्येन

कदा भागीरथ्या भवजलधिसंतारतरणेः
स्खलद्वीचीमाला चपलतलविस्तारितमुदः।
तमःस्थाने कुञ्जे क्वचिदपि निविश्याहृतमना
भविष्याम्येकाकी नरकमथने ध्यानरसिकः॥ *

इति पद्यस्य सादृश्याद्भर्तृहरिप्रणीतमेवेदमिति मन्तव्यं तदा

कदा कान्तागारे परिमलमिलत्पुष्पशयने
शयानः श्यामायाः कुचयुगमलं वक्षसि वहन्।
अये बाले मुग्धे चपलनयने चन्द्रवदने
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि रजनीः॥

इत्यादीनामपि तत्सादृश्यस्य दुष्परिहरत्वात्तद्विरचितत्वमेवाभ्युपेयं स्यात्। एवं **स्वर्गग्राम**कुटीनिवासफलदैः कर्मक्रिया विभ्रमैरिति वैराग्यशतक आरोप्यमाणं स्वर्गस्य ग्रामत्वं **स्वर्गग्रामटिका**विलुण्ठनवृथोच्छूनैः किमेभि-र्भुजैरिति मुरारिपद्येऽप्यवलोक्यत इति किमेतदुभयमपि समानकर्तृकमेवे-त्यूरीकर्तव्यम्। अतो न युज्यत एवंविधसादृश्यमात्रेण कस्यापि समान-कर्तृकत्वमापादयितुमिति किल मन्यामहे।

( ३ ) एवमर्थार्थितयाऽऽत्मबोध इत्यत्रापि दृश्यमानं बहुव्रीहेर्वैय्य-धिकरण्यं नोभयोः समानकर्तृकतां बोधयितुं प्रभवेत्। बहवो हि स्वीकुर्वते कवयो वैय्यधिकरण्यं बहुव्रीहेरिति प्रत्यक्षीक्रियतां कादम्बर्यादिषु प्रब-न्धेषु। विस्तरभयात्तु नात्रोदाहर्तुमिच्छामः। ( क्रमशः )

---

* अत्र द्वितीयचरणबन्धस्य भक्तिरसेऽनुचितत्वं तृतीय आङ्पूर्वस्य हरतेः प्रत्याह-रणे कविभिरप्रयुक्तत्वं च १ दोषायैव २ समुपनिबद्धं भवति।

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥



॥ श्रीगणेशाय नमः ॥

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

॥ भासावतरणिका ॥

आवृण्वन्नखिलं नभो घनतमःसंपातकान्तिर्घनो
भानोर्भां तिरयन्नशेषजनतानेत्रोत्सवं चैन्दवीम् ।
याति श्लाघ्यतमत्वमेव भुवने वर्षन्नजस्रं शुचौ-
वेकोऽपि क्षपयेद्धि दोषनिवहं सर्वाङ्गरम्यो गुणः॥३॥

॥ उद्भटश्लोकाः ॥

पश्यति परेषु दोषानसतोऽपि जनः सतोऽपि नैव गुणान् ।
विपरीतमिदं स्वस्मिन्महिमा मोहाञ्जनस्यैषः ॥ ६ ॥

गतिर्व्योम्ना तत्किं गरुडमभिटीकेत चटकः
पिबत्वम्भः क्षारं न खलु कलशीसूनुरलसः ।
कलः कण्ठे नादः क इव मशकः किन्नरपतेः
कथंचित्साधर्म्यं क्षिपति न तु वैधर्म्यनियमम् ॥७॥*

---

१ शुचिः— आषाढः । २ असतः अविद्यमानान् । ३ सतः विद्यमानान् । ४ स्वस्मिन् आत्मविषये । जनः किल अविद्यमानानपि परस्य दोषान् पश्यति । गुणांस्तु नैव पश्यति । आत्मनस्तु गुणानेव पश्यति न दोषानिति भावः ।

* गतिरिति । कथञ्चिदवाप्तमपि परेषामेकदेशीयं सादृश्यं न वैधर्म्यस्यापकरणाय भवतीति पद्येनानेनोच्यते । यद्यपि व्योम्ना आकाशेन गतिर्गमनं गरुडसदृशमित्यर्थः

# श्रीमदप्पयदीक्षितः ।

( पूर्वतोऽनुवृत्तः )

प्रतिश्रुतमस्माभिर्द्वितीयसंख्यायां श्रीदीक्षितप्रणीतानामपरेषामपि प्रबन्धानामिहोद्धरणं तत्रेदानीं प्रवर्तामहे । अस्मदवलोकितेषु च दीक्षितप्रणीतेषु द्वितीयश्चित्रमीमांसानामालङ्कारशास्त्रीयः प्रबन्धः। तत्र च प्रथमप्रकरणे ( ग्रन्थारम्भप्रकरणे ) ध्वनिर्गुणीभूतव्यङ्ग्यं चित्रं चेति काव्यस्य भेदत्रयं प्रतिपाद्य **यदव्यङ्ग्यमपि चारु तच्चित्र**मिति चित्रलक्षणमुपन्यस्य शब्दचित्रमर्थचित्रमुभयचित्रं चेति चित्रस्यापि त्रिविधता प्रतिपादिता ।

त्रिविधे ( ध्वनिगुणीभूतव्यङ्ग्यचित्राख्ये ) च काव्ये प्रथमं ध्वनिगुणीभूतव्यङ्ग्यमिति द्विविधं काव्यं ग्रन्थान्तरे प्रपञ्चितमिति दीक्षिताः प्राहुः। स च प्रबन्धो वृत्तिवार्तिकमेवेत्युपरिष्टात्स्फुटीकरिष्यामः । चित्रं तु वृत्तिवार्तिके न प्रतिपादितमिति तदेव चित्रमीमांसाया विषय इति बोद्धव्यम् । त्रिविधे च ( शब्दचित्रमर्थचित्रमुभयचित्रं चेति ) चित्रे शब्दचित्रं प्रायो नीरसमिति न विशेषतः कविभिराद्रियते । अत एव शब्दचित्रस्यानुप्रासयमकपद्माद्यंशमपहाय केवलमर्थचित्रस्यैव चित्रमीमांसायां प्रतिपादनमिति चित्रमीमांसायामुक्तम् ।

---

तथापि चटकः कलविङ्कः ( चिमणी ) गरुडमभिटीकेत किं सादृश्यं कुर्यात् किं नेत्यर्थः । टीकृगतावभिः सादृश्ये । अलसः सत्यामपि शक्तौ कर्मण्यनुत्साहवान्पुरुषः कर्ता क्षारं लवणं ( खारट ) अम्भः जलमालस्यादिति भावः पिबतु तथापि स कलशीसूनुः कुम्भपुत्रोऽगस्तिः न खलु नैव भवति । क्षारजलपानेऽपि नागस्त्यसाम्यमित्यर्थः । कण्ठे मशकस्य कण्ठे कलः सुन्दरो नादः अस्तीति शेषः । तथापि मशकः किन्नरपतेः क इव नोभयोः सादृश्यसंबन्ध इति भावः । अत्रार्थान्तरमाह । कथंचिन्महता प्रयासेन यत्सादृश्यं साम्यं तत्कर्तृभूतं वैधर्म्यस्य नियमं विरुद्धधर्मवत्ताया नियमेनस्थितिमित्यर्थः न क्षिपति नापाकरोति । एकदेशतः कथंचित्सादृिः समानत्वे प्राप्तेपि तद्विरुद्धा नैसर्गिकागुणा नैव परिहर्तुं शक्या इति भावः ॥

एतेन चास्य ग्रन्थस्य चित्रमीमांसेत्यस्य नाम्नः प्रवृत्तेर्निमित्तमप्यभिहितं भवति चित्रस्य मीमांसाज्ञानं यस्मात्प्रबन्धादिति ।

अर्थचित्रं चोपमादयोऽलङ्कारा इत्यभिप्रायेण द्वितीयप्रकरणेऽलङ्कारलक्षणान्युपक्रान्तानि । तत्र च प्रायेण सर्वेष्वप्यलङ्कारेषु प्राधान्यात्प्रायेणालङ्काराणामुपमामूलकत्वाच्चोपमैव प्रथमत उपन्यस्ता यथैकैव नटी नानाविधानां भूमिकानां परिग्रहे नानाविधैर्नामभिराख्यायत एवमुपमैव प्रयोजनभेदाद्रूपकादिसंज्ञाभिर्व्यपदिश्यत इति च प्रोक्तं दीक्षितैर्यथा—

**उपमैका शैलूषी[1] संप्राप्ता चित्रभूमिकाभेदान्[2] ।**
**रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥ इति॥**

उदाहृतं चेदं सप्रपञ्चं तत्रैव । तच्च रमणीयत्वादत्रोपन्हियते । यथा—

चन्द्र इव मुखमिति सादृश्यवर्णनं तावदुपमा । सैवोक्तिभङ्गीभेदेनानेकालङ्कारभावं भजते । तथा हि । चन्द्र इव मुखं मुखमिव चन्द्र इत्युपमेयोपमा । मुखं मुखमिवेत्यनन्वयः । मुखमिव चन्द्र इति प्रतीपम् । चन्द्रं दृष्ट्वा मुखं स्मरामीति स्मरणम् । मुखमेव चन्द्र इति रूपकम् । मुखचन्द्रेण तापः शाम्यतीति परिणामः । किमिदं मुखमुताहो चन्द्र इति संदेहः । चन्द्र इति चकोरास्त्वन्मुखमनुधावन्ति इति भ्रान्तिमान् चन्द्र इति चकोराः कमलमिति चञ्चरीकास्त्वन्मुखे रज्यन्तीत्युल्लेखः । चन्द्रोऽयं न मुखमित्यपह्नुतिः । नूनं चन्द्र इत्युत्प्रेक्षा । चन्द्रोऽयमित्यतिशयोक्तिः । मुखेन चन्द्रकमले निर्जिते इति तुल्ययोगिता । निशि चन्द्रस्त्वन्मुखं च दृश्यतीति दीपकम् । त्वन्मुख एवाहं रज्यामि चन्द्र एव चकोरो रज्यत इति प्रतिवस्तूपमा । दिवि चन्द्रो भुवि त्वन्मुखमिति दृष्टान्तः । मुखं चन्द्रश्रियं बिभर्तीति निदर्शना । निष्कलङ्कं मुखं चन्द्रादतिरिच्यत इति व्यतिरेकः । त्वन्मुखेन सह चन्द्रो निशासु

---

१ नटी । २ चित्रान्भूमिकानां भेदानितिचित्राण्येव भूमिका इति च ।

हृष्यतीति सहोक्तिः । मुखं नेत्राङ्कुरुचिरं स्मितज्योत्स्नोपशोभितमिति समासोक्तिः । अब्जेन सदृशं वक्त्रं हरिणाहितसक्तिनेति श्लेषः । मुखस्य पुरतश्चन्द्रो निष्प्रभ इत्यप्रस्तुतप्रशंसा । इति ॥

अत्र चोपमाया एव कथमलङ्कारान्तरमूलकत्वमिति सम्यगुपवर्णितम् । एतेषु चोदाहरणेषु प्रायश उपमाया ध्वनिरेव । साधर्म्यमूलिका ह्युपमा । तच्च केचिदुत्प्रेक्षादयोलङ्कारा नापेक्षन्ते । ते ह्यध्यवसायमूला एवेति धर्मसूरिप्रभृतयः प्राहुः । यद्यपि नापेक्षन्तेऽलङ्कारान्तराणि ( कानिचित् ) सादृश्यमतो नास्ति तेषामुपमात्वमिति सत्यं तथापि सादृश्यमूलामुपमां विशदीकुर्वद्भिर्वचनैरेवालङ्कारान्तराणि निष्पादयितुं शक्यानि येषु ध्वनिमात्रेणोपमाया अवस्थितिः स्यादित्येव दीक्षिताशय इति केचित् ।

इयं च मनोरमाऽपि चित्रमीमांसा न समापिता श्रीदीक्षितचरणैः । किमत्र कारणमिति तु नावगन्तुं शक्यते । प्रतिबन्धकमन्तरा स्वेच्छयैव दीक्षितैरेषाऽर्ध एव परित्यक्तेति प्रतिभाति । अस्या ह्यन्ते **अप्यर्धचित्रमीमांसा न मुदे कस्य मांसला । अनूरुरिव घर्मांशोरर्धेन्दुरिव धूर्जटेः** ॥ इत्युक्तम् । अर्धाप्येषा रमणीयैवेति वचनं तु स्वयमेषा समापयितुं नेष्यत इत्येव बोधयति। न किल सिद्धिमतां विद्वदग्रेसराणां दीक्षितसदृशानां महात्मनां विमृश्यकारिणामुत्साहसंपदमन्तराया बाधेरन् । अतः स्वयमेव तैरेषा परित्यक्तेति ब्रूमः ।

अस्यां च यानि मनोहराणि पद्यानि तानि संक्षेपत उदाहृत्यान्यत्र प्रवर्तिष्यामहे । यथा-

**चक्रभ्रमणकरत्वात्कुदृष्टिभिर्दूरवर्ज्यमानत्वात् ।**
**श्रुत्यन्तखेलनत्वान्मशक त्वामेव माधवं मन्ये ॥**

श्लेषोत्थापितमनुमानमिदम् । चक्रस्य भ्रमणो भ्रामकः करो यस्य तथाविधत्वात् कुदृष्टिभिः कुत्सितैश्चार्वाकादिनास्तिकदर्शनैर्दूरवर्ज्यमानत्वात् श्रुतीनामन्तेषु उपनिषत्सु खेलनं विलासो यस्य तथाविधत्वादिति

माधव१८१। मशकपक्षे तु चक्रभ्रमणस्य चक्राकारभ्रमणस्य करः कारकः। कुदृष्टिभिर्दूषितनेत्रैर्दूरवर्ज्यमानत्वात्। अक्षिरोगग्रस्ताः किल मशकान्नयनसमीपगतान्न सहन्त इति। श्रुत्योरन्ते कर्णसमीपे खेलनः क्रीडकः। श्रवणसमीपे हि मशकः परिभ्रमतीति प्रसिद्धिः॥ एवम्-

**सुहृदालापेनैव प्रणश्यति स्थास्नुरान्तरः क्लेशः।**
**कान्तामुखचन्द्रेण हि शाम्यति रुचिरेण विरहजस्तापः॥ इति।**

सुलभमिदम्। एवं भगवतः शशाङ्कशेखरस्य वर्णनं यथा—

**तारानायकशेखराय जगदाधाराय धाराधर-**
**च्छायाधारककन्धराय गिरिजासंगैकशृङ्गारिणे।**
**नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे**
**नागैः कङ्कणिने नगेन गृहिणे नाथाय सेयं नतिः॥इति॥**

कोऽपि भक्तिरसविनम्रान्तरो भगवन्तं चन्द्रचूडमभिष्टौति। तारेति। तारानायकश्चन्द्र एव शेखरो यस्य यश्च जगतामाधारो यस्य च धाराधरस्य मेघस्य छायायाः कान्त्या धारिका कन्धरा। यश्च गिरिजायाः श्रीपार्वत्या संगेनैकः शृङ्गारी यश्च नद्या भागीरथ्या शिरोधृतया शेखरवान्यश्च दृशा ललाटतटवर्तिन्या तृतीयया दृष्ट्या तिलकवान्यश्च नारायणेन भगवता विष्णुना त्रिपुरदहनावसरे बाणतां प्रापितेन अस्त्रवान्। यश्च नागैः करादिषु भूषणतां नीतैः सर्पैः कङ्कणवान्यश्च नगेन निवासभूतेन कैलासगिरिणा गृहवांस्तस्मै नाथाय भगवते महादेवाय इयं नतिरयं नमस्कार इति॥

एवमुल्लेखालङ्कारस्योपमासंकीर्णस्योदाहरणम्—

**कस्तूरीतिलकन्ति फालफलके देव्या मुखाम्भोरुहे**
**रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति।**

---

१ स्थास्नुः स्थिरतरः। अन्तरो मानसः।

**याः कर्णे विकचोत्पलन्ति कुचयोरंशे च कालागुरु-**
**स्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥इति ***

अत्र च भगवतो नीलकण्ठस्य कण्ठकान्तेस्तत्र तत्र देव्याः श्रीपार्वत्याः शरीरभागे कस्तूरीतिलकादिवदाचरणमुल्लिख्यते । एवमपह्नुत्यलङ्कारोदाहरणे—

**आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे**
**कण्ठे लग्नः सुकण्ठः प्रसरति कुचयोर्दत्तगाढाङ्कसंगः ।**
**बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक्प्रियो मे**
**बाले लज्जा निरस्ता नहि नहि सरले चोलकः किं त्रपाकृत् ॥इति**

अत्र च काचिद्विलासिनी प्रियमधिकृत्य प्रक्रान्तवचना मध्य एव सख्या पृष्टाऽऽत्मन आशयं निगूहितुं प्रियमपह्नुत्य चोलकोऽयं मयोपवर्ण्यत इति प्राह । अयं च चोलकः कञ्चुलिकाख्यः स्त्रीणामापपदीनो वसनविशेषः ।

एवमुत्प्रेक्षोदाहरणम् ।

**भूयस्तराणि यदमूनि तमस्विनीषु**
**ज्योत्स्नीषु च प्रविरलानि ततः प्रतीमः ।**
**संध्यानलेन भृशमम्बरमूषिकाया-**
**मावर्तितैरुडुभिरेव कृतोऽयमिन्दुः ॥ इति ॥**

क्षीणचन्द्रासु कृष्णपक्षे तमोयुक्तासु रात्रिषु यतो नक्षत्राणि भूयांसि भवन्ति यतश्च ज्योत्स्नायुक्तासु रात्रिषु तान्येव विरलतामापद्यन्ते ततो

---

* याः श्रीकण्ठस्य शङ्करस्य कण्ठत्विषो गलकान्तयो देव्याः पार्वत्याः फालफलके ललाटे कस्तूरीतिलकवदाचरन्ति । क्विबन्तो नामधातुः । मुखाम्भोरुहे मुखकमले रोलम्बा भ्रमरा इवाचरन्ति । मौलिं प्रति शिरसि तमालस्य नीलवर्णस्य वृक्षविशेषस्य लोलश्चञ्चलो मुकुलानां कलिकानामवतंस इवाचरन्ति । कर्णे विकचं प्रफुल्लमुत्पलं कमलमिवाचरन्ति । कुचयोरंशे प्रान्ते कालागुरोः कृष्णचन्दनस्य स्थासः स्थासकः पत्रवल्लीति यावत्तद्वदाचरन्ति । तास्तव प्रार्थयितुः शिवं मङ्गलं प्रथयन्तु विस्तारयन्त्वित्यर्थः ।

मन्यामहे संध्यामयेनाग्निनाऽऽकाशरूपायां मूषायां नक्षत्राण्यावर्त्य तेषामेवायं चन्द्रो निर्मित इति । यथा स्वर्णकारः स्वर्णकणैर्मूषायामावर्तितैः कुण्डलकटकादीनलङ्कारान्निष्पादयति एवं नक्षत्रैरेव निर्मितोयं चन्द्रः । अत एव कृष्णपक्षे चन्द्राभावे नक्षत्राणां बाहूल्यं शुक्लपक्षे च तेषां चन्द्रकिरणे विनियोगान्न्यूनत्वमितिकश्चित्कविः प्राह ।

एवमतिशयोक्त्युदाहरणेषु—कश्चित्पण्डितः कमपि राजानं श्लाघते ।

**पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर ।**
**भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ॥ इति ॥**

हे राजन्भवतः करेण सदृशः कल्पतरुपल्लव इति यद्यपि सत्यं तथापि तत्रायं विशेषो यत्कल्पतरुपल्लवः कर्णं ( श्रवणं ) भूषयति । सुरसुंदरीभिर्हि स कर्णपूरीक्रियते । भवतः करः पुनः कर्णं ( कर्णनामानमङ्गदेशाधिपतिं ) तिरस्कुरत इत्यर्थः । ( क्रमशः )

# प्रेरितपत्रम् । *

## काव्यकादम्बिनीसमस्यासमालोचना



## कंसभार्याविपालम् ।

समस्येयं काव्यकादम्बिन्या नाम ग्वाल्हेरनगरावस्थितायाः परिषदः । अस्याः पूर्तिस्तु—

* न किल वयं कामपि व्यक्तिमुद्दिश्य दोषोद्घाटने प्रवर्तितुं वाञ्छामः । यदि तु समस्यापि देशस्य हितचिकीर्षया किमपि केनाप्यारभ्येत तदा देशहितवाञ्छयैव तद्गतानां दोषाणां प्रकाशनमावश्यकम् । तत्र संस्कृतभाषासमुद्धारप्रवृत्तानां भाषादोषा अत्यन्तमनुचिता इत्यवधार्य शास्त्रिणः पत्रं प्रकाशितं चन्द्रिकायाम् । शास्त्रिणा तु केवलं व्याकरणदोषाः समुल्लिखितास्तदतिरिक्तास्तु काव्यदोषाः समुन्नेयाः स्वयमेव सुधीभिः । मेघमालयेव चन्द्रस्य काव्यकादम्बिन्यापि काव्यस्य प्रसादः समूलमुन्मूलति इति भाति ।

**श्रीपूषाणं द्विजयुतमथो नेत्रयुक्तं भगं च**
**श्मश्र्वाढ्यं श्रीभृगुमपि तथान्यानमर्त्यांश्च सांगान् ।**
**साकं धात्रा त्रिपुरमथनं दीनवाचा ययाचे**
**सप्राणं कुर्विति सुमनसां कं सभाऽऽर्याधिपालम् ॥ इति ।**

कं दक्षं सुमनसां ( देवानां ) सभा आर्याधिपालं पार्वतीपतिम्

अत्र पूषणमिति वक्तव्ये ( पूषाणमिति )दीर्घकरणमसाधु । इन्हन्पूषार्यम्णां शाविति नियमात् । काव्यकादम्बिन्या मन्त्रिणा तु समाधानमत्रात्यद्भुतं कल्पितम् । यथा—श्रीपूषाणमानयति जीवयति श्रीपूषाणः । अन् प्राणन इत्यतः कर्मण्यण् ब्रह्माणीवत् । श्रीपूषाणं तदधिष्ठात्रीं देवतामित्यर्थः । तत्रभवता मन्त्रिणा श्रीपूषाणमानयतीति विग्रहे दीर्घ एव लिखितः । अत्र विमर्शः । ब्रह्माणीवद्देवतावाचकत्वे स्त्रीत्वबुद्धेरनिवार्यत्वान्ङीबापत्तिः । संज्ञाविरहाण्णत्वस्यानापत्तिश्च । पूषा स्वयं देवता तत्र देवतान्तराधिष्ठानकल्पने प्रमाणाभावः फलाभावोऽनवस्था च । भगवता तु व्यासेन भागवतीयचतुर्थस्कन्धे चण्डीशः पूषणमिति साधुरेव प्रयुक्तः । श्रीपदप्रयोगोऽपीशातिरस्कारप्रकरणस्याविसंवादी याचनाविसंवादी च ।

एवमन्या समस्या—

**दैवतं दैवतन्त्रम् ॥ इति ॥**

अस्याः पूर्तिः—

**इच्छामात्रोल्लसितनयनप्रान्तविस्तारतो यो**
**लोकोत्पत्तिस्थितिविनशनं रारचीत्यप्रयत्नात् ।**
**सोऽयं देवो दशमुखमुखान्हन्तुमद्धावतीर्ण-**
**स्तस्मान्मन्ये श्रुतिपथमतं दैवतं दैवतन्त्रम् ॥ इति ।**

अत्र रारचीति यङ् लुङन्तमसाधु रचयतेरेकाच्त्वविरहेण यङ् एवाप्रवृत्तेरिति समालोचकः । मन्त्रिणा त्वत्रापि समाहितम् । रचेरदन्त-

स्वसामर्थ्याणिण्विकल्पः । रचधातोः क्विपि तस्याकारस्य लोपे तत आचारक्विपि तदन्तायङ् तस्य लुगिति । अत्र सामर्थ्यविचारः । अथादन्ता इत्युपक्रम्य चुरादिगणे रचिः पठितस्तस्यान्तिमोऽकारो दीर्घसन्वद्भावोपधावृद्धीनां निवृत्तये पाणिनिना पठित इति चारितार्थ्यात्तस्य न णिज्विकल्पकल्पनायां हेतुता । तथा च तत्रैवोक्तं दिक्षितैः । अल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । अचकथदिति । तुल्यमेतद्रचयतौ । रचयति अररचत् । मन्त्रिरीत्या णिज्विकल्पाङ्गीकारे तु कथति प्रथति रचति गणतीत्यादीनामनिष्टानामापत्तिः । क्विब्द्वयार्थसहकृतयङर्थधीरण्यनियन्त्रणैव मान्त्रिणःप्रयोगस्यैवानुपपत्तौ तादृशानिष्टधिषणा विचारणा निष्फलैवेति मदीया बुद्धिः । गीर्वाणवाण्यभ्युन्नतये समुद्युक्तानां विचारचातुरी तत्सहचरी वाङ्माधुरी चापेक्षत इति नाथ्यते[1] ।

समालोचितमेतद्रत्नललामपाठशालाध्यापक-

**श्रीविष्णुशास्त्रिणा** ( रतलाम )

---

# अधर्मविपाकम् ।

( पञ्चमखण्डस्य दशमसंख्यातोऽनुवृत्तम् )

**( ततः प्रविशति धर्मः )**

धर्मः—अहो नु खलु भोः कष्टोयं प्रणयपाशः । मया हीदानीं वत्साया विरहपर्याकुलेन

**अग्रे सा शिशुभावतः समुदयद्भासाऽथपृष्टेऽपि सा**
**सोदर्यानुगताऽखिलास्वपि दिशास्वेकैव वत्सेक्ष्यते ।**

---

१ प्रार्थ्यते.

चिन्नं किं तु जिघृक्षया प्रतिपलं व्यापारितो मत्कर-
स्तामप्राप्य निराशतामुपगतो बाढं परिश्राम्यति ॥ ३॥

अवितथं खल्विदमभिधीयतेऽभिज्ञैरनिष्टाशङ्कि प्रियजनहृदयमिति । यतः—

किं घोरे गहने[२] चरन्त्यशरणा हिंस्रैर्गृहीता भवे-
त्किं वा नः प्रथमावलम्बनमिति व्यापादिताऽरातिभिः ।
किं नारी ललितेति काननचरै रुद्धा दुराशावशै-
रित्थं नैकविधं मदीयमधुना वत्सां मनः शङ्कते ॥ ४॥

( वामाक्षिस्पंदनं सूचयित्वा ) कथममङ्गलनिलयेन स्फुरितमिदानीमिव दक्षिणेतरेण चक्षुषा । ( सविषादम् ) प्रभवति किल सर्वथा दैवम् । न जाने किमिदानीमापतिष्यति दुःसहं दुःखमिति । भवतु । ( सोद्वेगम्) रात्रिंदिवं वत्सामेव विचिन्तयता किल मया पादमूलगताऽपि न संभविता देवी । एषाऽपि किल प्रतिदिनं कन्यकाविरहव्याकुला परिहीयते गात्रैः । प्रकृतिरेव हि नारीणां कातरत्वं नाम । अयं चैवंविधो जीवितानिबन्धनायमानाया विप्रयोगो वत्साया येनाहमपि नाम प्रगल्भः पुरुषो व्याकुलतां नीतः । एतां च प्राभातिकसुधांशुसन्निभाननामवलोकयतः समधिकं द्रूयते मे चेतः । तन्न युक्तमद्यैनामप्रसाद्य स्थातुम् । तत्कुत्र नु खलु भवेदिनानीं देवी ( ऊर्ध्वमवलोक्य ) एषा किल तत्रभवत्याः प्रमदवनप्रवेशवेला तद्यावत्तत्रैव गच्छामि । ( परिक्रम्यावलोक्य च ) एतत्तत्प्रमदवनम् ( पुनर्निपुणमवलोक्य सानन्दम् ) अये कथमिहैव

मन्दस्मितोल्लासितचारुमुखी विलोल-
गात्री भयादिव चलाक्षिसरोरुहेयम् ।
आपाण्डुरेण वमनेन समुल्लसन्ती
वत्सा विभाति सदनं परिवर्तमाना[३] ॥ ५ ॥

---

२ अरण्ये ३ प्रतिनिवर्तमानेत्यर्थः ।

हन्त अधिगतमिदानीमाश्वासनम् ( उपसृत्य ) वत्से किमेवमसि कातरा ( इत्यादातुमिच्छन्स्पर्शमभिनीय सविषादं निःश्वस्य ) हा धिक् विप्रलब्धोऽस्मि मन्दभाग्यः । तथा हि—

**नवविकसितः पुष्पौघोऽयं न हास्यमुदेत्यद-**
**स्तरलिततनुर्भङ्गालीयं न चाक्षिसरोरुहम् ।**
**इदमपि रजोवृन्दं सर्पत्सितं किल नांशुकं**
**पवनचपला चेयं वीरुन्न मे तनुसंभवा ॥ ६ ॥**

( पुनर्निःश्वस्य ) अहो एवं किल प्रतिपलं प्रतारयति मां विप्रयोगो वत्सायाः । भवतु यावत्प्रियामवलोकयामि ( इति किंचित्पुरत उपसृत्य विलोक्य च ) एषा किल तनया विरहपर्याकुलाऽविरतरुदितोत्कृन्तना शिलातलमधिशयाना देवी किमपि विस्रब्धं मन्त्रयमाणा सखीभिस्तिष्ठति । न खलु क्षणविस्मृतमस्याः शोकानलमात्मन उपसर्पणेनोद्दीपयितुमिच्छामि । तदत्रैव तावल्लतान्तरितः शृणोमि किमेषा मन्त्रयतीति ( इति तथा कुर्वन्स्थितः )

**( ततः प्रविशति यथोद्दिष्टव्यापारा सह सखीभिरासनस्था देवी )**

सखी— हला श्रुतिशीलने अलं धीरतामुज्झित्वा ।

देवी— ( दीर्घमुष्णं च निःश्वस्य ) हला क्वेदानीं मे वत्सा ( इति बाष्पं विसृजति )

द्वितीया सखी —( अश्रूणि परिमृज्य ) सखि किमासि कातरा । ननु रमणीयतमेदानीमरण्यानीति समुचित एव स्वभावरसिकाया वत्साया विलम्बः । तद्धैर्यं तावदवलम्ब्यतामचिरेणैव त्वामानन्दयिष्यति श्रद्धा ।

देवी—मकरन्दिके क्व मे वत्साया विरहानलेन भस्मावशेषीकृतं धैर्यम् । सखि रमणीयेष्वपि वस्तुषु न मे सज्जति दृष्टिः । शून्यमिव प्रतिभाति मे भुवनम् । बलादपसार्यमाणाऽपि न मुञ्चति मानसमुत्कण्ठा ।

तृतीया सखी—कथं वा चन्द्रिकाविरहं साहिष्यते कुमुदिनी । पुरुषोपि किलामुना विरहसंतापेन व्याकुलीभविष्यति किम्पुनरबला नः प्रियसखी ।

धर्म:—एवमेतत् । अनेकप्रतिपक्षनिर्दयावदारणकर्कशं ममापि हि हृदयमभिलङ्घितमनेन दुर्निवारेण वत्साया विप्रयोगेण ।

देवी—सखि वारंवारमनिमित्तानि मां व्याकुलीकुर्वन्ति । प्रभातप्रायायां च रजन्यामद्यावलोकितो मया कोऽपि परुषदर्शनः स्वप्नः । ततस्तु द्विगुणीभूतशोकावेगायै किमपि न रोचते मह्यम् । दीर्यतीव मे हृदयम् ( इति बाष्पमुत्सृजति )

सख्यः–( अश्रूण्यपनीय ) अस्त्येतच्छिद्रेषु बहुलीभवनमनर्थानाम् । सखि कः पुनः स स्वप्नः ।

धर्म:—ममाप्यास्ति कौतूहलमेतदाकर्णयितुम् ।

देवी—( सगद्गदम् ) श्रूयताम् । अद्य किल प्रभाते सुप्ताहं कस्मिंश्चिदरण्ये नयनविलोभनीयं कनकविषाणं हरिणतनयायुगलं मातरमन्विच्छद्विलोकितवती ।

धर्म:—उपक्रान्तमिव प्रतिकूलस्य विलसितं मे दैवस्य ।

सख्यः—ततस्ततः ।

देवी—ततः पथि गच्छत्तत्र तत्र बालातपशिखामनोहराणि लवलीकिसलयान्यास्वाद्य मरकतकिरणजालमिव बालतृणकवलमुपभुज्य शरच्चन्द्रिकापूरमिवातिनिर्मलं सलिलमापीयात्मनो निवासस्याभिमुखीभूतम् ।

सख्यः—ततस्ततः ततः कियद्दूरमतिक्रान्ते तस्मिन्

धर्म:—किन्वतः परं वक्ष्यति ।

देवी—सहसा समुत्पन्नः कोपिश्रवणभीषणो घर्घरध्वानो यमाकर्ण्याहमेपि प्रलयपविपातमिव मन्वाना सभयं स्थिता ।

सख्यः—अहो विस्मयनीयता स्वप्नस्य । सखि ततस्ततः :

धर्म:—यथाऽस्य श्रवणेन वर्धते मे संतापस्तथा तर्कयामि किमपीदृमस्याहितमेवेति ।

देवी—तदाकर्ण्य ध्वनितमितस्ततो विक्षिप्तचपललोचनमशरणं भयविह्वलस्रस्तसुकुमारगात्रं पर्याकुलमिव क्षणं तन्मृगकन्यकाद्वयमतिष्ठत् ।

सख्यः—हुं ततस्ततः ।

देवी— ततो यावत्तद्द्रुतपदं पलायते तावदुपनिपतितः कोपि मूर्त इवान्तकोऽचिरास्वादितदीनश्वापदरुधिरलोहितायमानलोलजिह्वो दंष्ट्रान्तरावसक्तनव्यमृगमांसखण्डविगलच्छोणितबिन्दुपाटलीकृतमार्गो विवृतवदनव्यक्तसंदृश्यमानकण्ठरन्ध्रो निश्चलोन्नमितश्रवणयुगलः परुषतरनखरभयङ्करचरणः समुत्पतञ्छार्दूलः ।

धर्मः—हा धिक् प्रत्यासन्नः किलानर्थः ।

सख्यः— ( सभयम् ) ततस्ततः ।

देवी— ततो यावदितस्ततो नयनं विकीर्य शरणमवलोक्य च स्वेदसलिलस्नातं भयनीमीलितलोचनं परिम्लानमृणालशिथिलगात्रं मोहमुपगत्य धरातले पतितं तत्स दुरात्माऽऽजिघ्रति तावदहं प्रबुद्धा ।

सख्यः—शान्तं पापम् । सखि युज्यते ते संतापः ।

धर्मः—अहो प्रतिकूलता मे भागधेयानाम् । एषा किल स्वप्नकथा सानुजां वत्सां श्रद्धामेव लक्षयति । सर्वथा निरवलम्बोऽस्मि दुर्भागः ।

प्रथमा—सखि पल्लविके न किल युक्तमिदानीमस्य स्वप्नस्य शान्तिमविरचय्य स्थातुम् । तद्गच्छ त्वं तत्र भवत्या मीमांसायाः समीपम् । तस्याश्चादेशमवाप्य यथोचितं करिष्यामः । हला मकरन्दिके त्वमपि गत्वा उपाध्यायं निवेदय शान्तिरस्य करणीयेति ।

उभे—सखि माधविके एवं कुर्वः । ( इति निष्क्रान्ते )

देवी— हला माधविके ततः प्रभृति पावकार्पितमिव मे मानसं न मनागपि शान्तिमङ्गीकुरुते । तत्कदा नु वत्सां सानुजां श्रद्धामवलोकयेयं । ( इति रोदिति )

माधविका—सखि धीरा भव । अचिरेणैव भवती श्रद्धामवलोकिष्यते ।

धर्मः—अवश्यमिदानीमाश्वासनीया देवी। तत्पर्यवस्थाप्यात्मानमुपसर्पाम्येनाम् ( इति पटान्तेन वदनं प्रमृज्य सानन्द इवोपसर्पति। )

माधविका—अये देवः। स्वागतं देवस्य ( इत्युत्तिष्ठति। श्रुतिशीलना बाष्पपर्याकुलमुख्येव प्रत्युत्तिष्ठति। )

धर्मः—( सप्रणयं श्रुतिशीलनां करे गृहीत्वाऽऽसन उपवेश्य च। ) सुन्दरि किमिति निष्कारणं रुद्यते।

( श्रुतिशीलना द्विगुणितशोका बाष्पमुत्सृजति )

माधविका—देव कियान्किल कालो देवपरिचरणाय प्रस्थितायाः वत्साया भक्त्यनुगतायाः श्रद्धायाः। तस्याश्चाद्यावध्यपरिचितेन विरहेण बलवद्बाध्यमानाऽनिमित्तोपचितोद्वेगा पर्याकुला देवी नानाविधमनिष्टमाशङ्कमाना रोदिति। भूयः परिसांत्व्यमानापि च नोज्झति शोकम्। (क्रमशः)

# प्राचीनानां वृष्टिपरिमापनयन्त्रम्।



यानि किल पाश्चात्यैः प्रकाशितानि यन्त्राणि तत्र कानिचिद्रीत्यन्तरवर्तीनि भारतवर्षीयैरपि प्रागेव विनिर्मितानीति प्रोक्तपूर्वमस्माभिः। सांप्रतं च प्राचीनानां वृष्टिमापनयन्त्रस्य प्रकारं प्राचीनग्रन्थादुद्धृत्य ग्राहकेभ्य उपहरामः। पाश्चात्यास्तदनुयायिनो भारतीया वा समदेशे कामपि कूपीं निधाय तस्यां च लिखितजलप्रमाणाङ्कां काचनलिकां निवेश्य कूपीमुखे स्थूलमुखं सूक्ष्ममूलं मूले रन्ध्रवच्च पात्रं विन्यस्य तत्र पतितैः कूपीसंचितैर्जलबिन्दुभिर्वृष्टिं परिमिमतेऽस्मिन्दिन इयती वृष्टिः संजातेति तत्संमतं चांशादिकं प्रमाणमन्यतो ज्ञेयम्। प्राचीनानां तु वृष्टिपरिमाणरीतिरिदानीं विलुप्तप्राया। केवलं तु वत्सरस्यारम्भदिवसे ज्योतिर्विदा कथ्यमाने पञ्जिका ( पञ्चाङ्ग ) फले श्रूयतेऽमुकाढकोऽस्मिन्वत्सरे पर्जन्यस्तत्र चैतावाड्गिरिष्वियाञ्जलधावेतत्परिमाणश्च क्षित्यामित्यादि। किं तु तत् श्रुत्वैव यत्किमप्यसौ प्रलपति दैवज्ञ इत्यविशङ्कितमभिधीयते। उप-

हस्यते च पञ्जिकाकर्ता अहो चातुर्यमेतस्य यदनेन धान्यमानेनैव प्रस्थाऽऽढकादिना वृष्टिः परिमीयत इति । किं तु सकृदपि बृहत्संहितायां कृतेऽवलोकनानुग्रहे सोयमुपहासो नाम परिहासकस्यैवान्यतमो मूर्खतायाः प्रकार इति स्फुटीभवति । तत्र हि प्रोक्तम्—

**हस्तविशालं कुण्डकमधिकृत्याम्बुप्रमाणनिर्देशः ।**
**पञ्चाशत्पलमाढकमनेन मिनुयाज्जलं पतितम् ॥इति॥**

एकहस्तदीर्घं वृतं किमपि पात्रं सुलभवर्षे प्रदेशे निधाय तत्र पतितं जलं मिनुयात् । तत्प्रमाणं च तोलकचतुष्टयेनैकं पलं पञ्चाशता च पलैरेक आढकश्चतुर्भिश्चाढकैरेको द्रोण इति भावः । इति ।

---

# मणिकुण्डलोपाख्यानम् ।



( पञ्चमखण्डस्याष्टमसंख्यातोऽनुवृत्तम् )

हा भगवन्नारायण हा दयानिधे हा अशेषभुवनसृष्टिस्थितिप्रलयनिदान हा समस्तपरिचरशरण्य हा विपदन्धतमसनिराकरणैकसहस्रकर भगवन्कमलापते किं मयाऽनुष्ठितं दुरितं यस्यैवेदमसदृशं फलमनुभावयसि । प्रभो केनास्मि सर्वतः प्रलिप्ताङ्गोऽहं पापेन येन सुरसहस्राभिलषितेन वामेनाप्यग्रचरणेन मां स्प्रष्टुं नोदेति ते चेतस्यभिलाषः । भगवन् गायन्ति भवदीयं स्तोत्रमशेषा अपि श्रुतयोऽशेषदुरितधामभूतमपि सकृदपि भवच्चरणं स्मरन्तमुद्धरसि तत्कालमेव महीयसो दुःखाब्धेरिति । न जाने पुनः किमिति मय्येव समवलम्बसे औदासीन्यमिति । विभो किमु समवासिता ते करुणा येन मामुद्धर्तुं लेशतोऽपि सा नोदेति। अथवा नैवायं मे वृत्तान्तस्ते नयनपदवीमुपयातः । किं वा कोऽप्ययं क्षुद्र इति मत्वैव मामवधीरयसि । सुरासुरनायक कथं नाम घटतामेतत् । त्वं किल विश्वतश्चक्षुरसि करुणासमुद्रोऽसि । प्रभो किमु पितुरपि मानसेऽयं क्षुद्रोऽयं न क्षुद्र

इति समुदेति मतिः सुतानां विषये । अथवा ममैव भाग्यदोषोऽयं य एवं पश्यन्तमपि भवन्तं न मामुद्धर्तुं प्रवर्तयति । भगवन् सर्वथाऽशरणोऽस्मीदानीम् । परिपालय माम् । अस्मिन्नप्यवसरे यदि न मां सकरुणमवलोकसे तदा क्व गच्छामि का मे गतिः कः शरणं कमालपामि कस्याग्रे रोदिमि भगवन्नास्ति मेऽन्यः समवलम्बस्तद्विधेहि यदिदानीं सांप्रतम् । इति दीर्घतरमाक्रन्दन्विमुक्तकण्ठं प्रारोदीत् ।

एवमुच्चैस्तरं साश्रुगद्गदं विलपतोऽस्याक्रन्दितं तत्क्षणमेव भगवतो योगेश्वरनाम्नो महेश्वरस्याभ्यर्हणायानतिदूरवर्ति मन्दिरमुपायातः प्रशान्त मनसामग्रणीर्बिभीषणः शुश्राव । निशम्य च तत्कालमेव वज्रपाताभिहत इव निकामव्याकुलः स महाभागो रुदितध्वनेरनुसारेण गच्छन्नपसृत्य च विच्छिन्नकरचरणं विपद्गतमार्तस्वरेण पाषाणमपि प्रस्यन्दयन्तं धर्मैकनिष्ठमशरणं मणिकुण्डलमद्राक्षीत् । दृष्ट्वा च सपदि दुःखव्याकुलान्तःकरणस्तदीयविपत्परिमार्जनमीहमानो बिभीषणः पप्रच्छ । वत्स कस्त्वमस्मिन्नमानुषसञ्चारे कानने नानाविधहिंस्रपशुसमावृते मूर्तिमतीव भये वर्तसे । केन च दुरात्मना शिरीषकुसुमसुकुमार उत्तप्तकनकावदातः काममप्यपत्रपयन्नेवंविधामननुभवनीयां दुःखमयीमवस्थामापादित आत्मा भवदीयः । हा धिक्कष्टमेवंविधानामप्याकृतिविशेषाणां दुःखानुभव इति नूनमनुल्लङ्घनीयो विलासो दैवस्येति ।

तेन चादितः प्रभृत्यशेषमपि स्वकीयं वृत्तान्तमावेदितो बिभीषणः सत्वरमात्मनः पुत्रमाहूय वत्स ! आनीयतां शीघ्रं महौषधिमन्दिरायमाणः शैल इति समादिक्षत् । तेन च वेगातिशयावधीरितमारुतप्रसरेण समुपनीते महीधरे समुत्थायात्मनः समीहितामौषधिं मार्गयामास । अन्विष्य च दिव्यां छिन्नमपि शरीरं पुनः प्ररोपयितुं प्रभवन्तीं समुत्क्रान्तानपि प्राणान्प्रत्याहर्तुमीश्वरीं विकृतमपि च गात्रं पुनः प्रकृतिमापादयन्तीमौषधिं संजीवनीं नाम छित्वा च तस्याः काष्ठं कस्याश्चन लताया गुणेन

समाबध्य शरीरवत इव मदनस्य मणिकुण्डलस्य कण्ठे निदबन्ध। तत्क्षणं च दावाग्निदग्धशाखापटल इव भूरुहा दिवामृतवर्षेण पुनः पल्लवनिकरः समुच्चयौ बालातपमनोहरो गात्रनिकरो मणिकुण्डलशरीरात्। तदानीमेव च मणिकुण्डलः समुदवहत्पूर्वतोऽपि मनोहरां कान्तिम्। प्ररूढकरचरणपल्लवश्च विस्मयस्य परां काष्ठामधिरूढो मणिकुण्डलः प्रमोदप्रविकासितलोचनयुगलः साश्रुगद्गदं बिभीषणं स्तुवन्नुपसृत्य च क्षितितलविलोलचूडामणिना मौलिना साष्टाङ्गं प्रणम्य भगवन्परमनुगृहीतोऽस्मि। केन पुनः कर्मणास्य श्रीमत उपकारस्य प्रत्युपकृती भवेयम्। इत्यभिदधानो बाष्पप्रसरप्रतिरुद्धकण्ठः किमपि न शशाकान्यद्वक्तुम्। बिभीषणस्तु वत्स चिरं जीव। परिहीयते भगवतोऽभ्यर्चनावसरः। तिष्ठ साधयाम्यहामिति सप्रणयं मणिकुण्डलस्य पृष्ठे करपल्लवं परिवर्त्य तेन कथञ्चिदनुज्ञातः प्रययौ। ( क्रमशः )

## विज्ञप्तिः।

अस्यां चन्द्रिकासंख्यायां मलपृष्ठे संस्कृतांग्रेजीभाषाभ्यां महाभागस्य विद्याव्यसानिनः परोपचिकीर्षाशीलस्य कल्याणाभिनिवेशिन उदारमतेः खेतडीराजधानीनिवासिनः श्रीमदम्बिकादत्तसूनोः श्रीगुरुदत्तशर्ममहाशयस्य बिज्ञापनं प्रकाशितं तदवश्यमवलोकनीयं संस्कृतचंद्रिकाया ग्राहकमहाशयैः। अनुष्ठाय च तदुक्तं प्रोत्साह्यतां संपादकः प्रकाशकश्च सफलमनोरथः क्रियतां च श्रीगुरुदत्तशर्मा संपाद्यतां च सुमनोहर उपहार आरोप्यतां चाभ्युदयं संस्कृतचन्द्रिकेति।

# सूर्यग्रहणम्।

अत्यन्तभीषणरणो दिशि पश्चिमायाम्
हृत्कम्पकारि महिकम्पनमेव पूर्वे।

याम्ये तथा मनुजमारकरोगपीडा
प्रादुर्बभूव नितरां युगपद्यदैव ॥ १ ॥
वेदेषु खण्डशशि ( १९५४ ) सूचितवैक्रमीये
संवत्सरे जनपदेऽत्र तदैव येयम् ।
दृष्टा जनैर्नभसि संघटनाद्भुता ताम्
मित्रानुरोधवशतो ननु वर्णयामि ॥ २ ॥
शीतर्तुमध्यगतमञ्जुलमाघमासे
मध्ये दिनं दिनकरस्य तनूममायाम् ।
आच्छादयिष्यति शशी नियतं निजेन
बिम्बेन तूर्णमिति पूर्णतया निरूप्य ॥ ३ ॥
तद्दर्शनाय विदुषामवलिः समन्ताद्
द्वीपान्तरादपि चचाल विलङ्घ्य सिन्धून् ।
नानाविधानि परिगृह्य बुधस्तुतानि
यन्त्राणि सूर्यविधुबिम्बपरीक्षकाणि ॥ ४ ॥
विज्ञानशास्त्रकुशला विबुधा अनेका
उच्चोच्चराजपुरुषा अपि गौरकायाः ।
सिद्धिं विधाय रविवीक्षणसाधनानाम्
तस्थुर्यदा वसनवेश्मनि बक्सरादौ ॥ ५ ॥
पूर्णोपरागमथ पङ्कजबान्धवस्य
ज्ञात्वा तदा भुवि चिरेण भविष्यमाणम् ।
लोकैरकारि कृतभारतवर्षवासै-
र्यद्यद्वदामि तदहं नियतैर्वचोभिः ॥ ६ ॥
युद्धं भविष्यति नृपेषु परस्परेषु
लोकं गमिष्यति यमस्य रुजा प्रजा च ।
धान्यं धनं बहु हरिष्यति चौरवर्ग

इत्यादि कैश्चिदिह सूरिभिरवन्भावि ॥ ७ ॥
तत्तन्निशम्य सहसा मनुजाः सशङ्कम्
पञ्चाङ्गवाचकजनानभिवन्द्य केचित् ।
दैवज्ञराज वद राशिफलं मदीय
मेवं विरक्तमनसाञ्जलिबन्धमूचुः ॥ ८ ॥
अन्नांशुकद्रविणदानविधानमाशु
दोषक्षयाय परिपृच्छ्य बुधांश्च केचित् ।
उद्योगिनः समभवन्खलु तत्तदाप्तौ
नास्त्यालये तदपि देयमवश्यमेव ॥ ९
दैवज्ञमेव शरणं शिरसा नतेन
केचित्फलानि भयदानि निशम्य जग्मुः ।
केनापि पण्डितपते परिपाहि नस्त्वं
यत्नेन वाक्यमिति दीनतमं न्यवेदि ॥ १० ॥
भानूपरागकृतभाविमहर्घतायाः
संचिन्तनेन विवशाः कतिचिद्बभूवुः ।
अन्नं विनास्मदसवः कथमीश हा हा
स्थास्यन्ति दुर्विलसिता इति संविलप्य ॥ ११ ॥
तत्तत्स्थलस्थितमहीसुरवल्लभानां
गेहेषु दत्तधनमाशु निवेषणाय ।
काशीप्रयागमथुराकुरुपुष्करादि
तीर्थानि चेलुरति भक्तिभरेण केचित् ॥ १२ ॥
कश्चित्तथा सुनयना सुरनिम्नगादि-
स्नानच्छलेन युवकैः सह सङ्गमाय ।
ईयुर्मनोरथशतं हृदि धारयन्त्यः
सङ्केतितस्थलमनङ्गनिपीडिताङ्ग्यः ॥ १३ ॥

केचिद्वधूवदनचन्द्रविलोकनाय
केचिद्धनस्य हरणाय परस्य केचित् ।
कूले ययुर्ग्रहण दुष्परिणामदुःख-
नाशाय सन्निकटवर्तिजलाशयस्य ॥ १४ ॥
येऽस्माद्द्विधा विधिवशान्ननु किञ्चिदन्यत्
शक्ता न कर्तुमथ ते स्वकरे गृहीत्वा ।
काचस्य कज्जलितपृष्ठतलस्य खण्ड-
मुच्चस्थले बहुभिरात्मजनैर्विरेजुः ॥ १५ ॥
यस्मिन्क्षणे चपलतातिशयेन चन्द्र
उत्प्लुत्य मेघवदधःस्थलतश्चकार ।
स्पर्शं प्रमाणितदिने दिवसेशबिम्ब-
स्तस्मिन्बभूव जनताक्षिशतैकलक्ष्यः ॥ १६ ॥
दृश्यं विलोक्य तदिदं किल कोऽपि नादः
संश्रूयते स्म भुवि लोककृतः समन्तात् ।
स्नाने जपे हरिहरस्मरणे च दाने
सर्वेऽभवन्रुचिविचित्रतया निमग्नाः ॥ १७ ॥
हंहो ग्रसत्यरुणमण्डलमेष राहुः
पौराणिकैः खलु पुनः पुनरित्यभाणि ।
वैज्ञानिकैरपरबुद्धिविचक्षणैस्तु
सर्वैरमानि शशिचण्डकराभियोगः ॥ १८ ॥
धर्मं प्रभो कुरु कुरु ग्रहणं प्रसक्तम्
त्वं देहि देहि वसनञ्च धनञ्च धान्यम् ।
इत्यादि दीनवचनानि च याचकानाम्
केषां न कर्णकुहरे पतितानि तानि ॥ १९ ॥
छायां करोति वियति स्म यदा यदेन्दुः

श्यामप्रभां वितनुते स्म तदा तदार्कः ।
आपत्सु दैवविनियोगकृतागमासु
धीरोऽपि याति वदने किल कालिमानम् ॥ २० ॥
कालक्रमेण शशिना निजनीलमूर्त्या
संच्छादनं कृतमियद्रविमण्डलस्य ।
येनेह रत्नगिरिबक्सरशाहडोल-
ग्रामेषु तस्य समलोकि समस्तलोपः ॥ २१ ॥
शुभ्रप्रकाशरहिते जगतीतलेऽस्मिन्
यत्लोहितातपरुचिर्ददृशे मनुष्यैः ।
तत्किं पुराणलिखितारुणराहुयुद्धे
जाते विधुन्तुदशिरोऽस्त्रनिपातजन्मा ॥ २२ ॥
ग्रासं गते नभसि पूर्णतयार्कबिम्बे
स्पष्टीबभूव भुवि कोऽपि तमिस्रपुञ्जः ।
आलोक्य कष्टमभितो महतां मलीनाः
स्वान्ते सदा समधिकां मुदमावहन्ति ॥ २३ ॥
संध्याजगाम सहसा किमुतेत्यकाण्डे
वासेच्छुकं खगकुलं विकृतिं ततान ।
गावोऽपि गेहगमनोत्सुकतां दधानाः
पुच्छं प्रसार्य परितश्चलिताः सशब्दम् ॥ २४ ॥
स्वग्रासतामभजतार्क इति प्रदातुं
साक्ष्यं किमेष भगवानुशना मनुष्यान् ।
तस्मिन्क्षणे समुदियाय नभोन्तराले
यन्त्रं विनैव यदयं सकलैर्व्यलोकि ॥ २५ ॥
एवं गते मयि महाविषमामवस्थाम्
कुर्वन्ति किं जगति सर्वजना इतीव ।

द्रष्टुं रविः पिहितबिम्बतटाभिजात-
ज्योतिश्छटाक्षिनिकरं विभराम्बभूव ॥ २६ ॥
देदीप्यमानदहनोपमभास्करस्य
साहाय्यमापदि विधातुमहो किमेषः ।
वेगेन पश्चिमहरिद्वदनावलम्बी
वायुः क्षणं प्रवहति स्म तदा रुषेव ॥ २७ ॥
पूर्णग्रहस्य समये कतिचित्पलानि
विश्वो विशेषकपिशीकृत ईक्ष्यते स्म ।
औदास्यभावमभजञ्जनतामुखानि
संस्तब्धतातिशयपूरितसर्वदिक्षु ॥ २८ ॥
चन्द्रस्ततो लघुतया निजया दिनेशात्
कक्षान्तरेषु गमनेन तदीयरोधम् ।
कालक्रमेण विजहौ तदनन्तरं स
सूर्यो जगाम भुवि नेत्रपथं जनानाम् ॥ २९ ॥
खग्रासमाप खलु यः स दिवाकरोऽयं
स्वच्छे नभस्यतितरां महसा चकासे ।
संपद्विपद्युगमिदं हि नितान्तलोलं
कुत्रापि नैव भजते स्थिरतां चिराय ॥ ३० ॥
लोकद्वये भवति यावदिदं समस्तं
विज्ञानशास्त्रपटुभिः समुपादितानि ।
तावत्क्रमागतरविग्रहणस्य यन्त्रै-
श्चित्राणि चित्रफलकानि मनोहराणि ॥ ३१ ॥
आदित्यमोक्षमनुलक्ष्य ततो मनुष्याः
स्नानं विधाय विधिवद्गृहमागताः स्मः ।
एतस्य च ग्रहणवर्णनगुम्फितस्य
काव्यस्य पूर्तिरधुना क्रियते मयाऽत्र ॥ ३२

एतानि पद्यकुसुमानि मयार्पितानि
सन्त्येव यद्यपि गुणै रहितानि मित्र ।
भक्तिं विलोक्य मम तावदिमां तथापि
त्वं स्वीकुरुष्व बुधपूजितपादृ तानि ॥ ॥३३॥ इति ।

महावीर प्रसाद द्विवेदिनः (झांसी.)

## समालोचना ।

(पूर्वतोऽनुवृत्ता ।)

(४) लिखितपुस्तकान्त उपलभ्यमानं भर्तृहरिप्रणीतं विज्ञानशतकमितिवचनमपि विज्ञानशतकस्य भर्तृहरिविरचितत्वमेव बोधयति न तु शतकत्रयसमाकर्तृत्वम् । स हि भिन्नो भर्तृहरिः शतकत्रयकर्तुयेन विज्ञानशतकं प्राणायि । स्पष्टं चेदमुपरितनेन कल्पनाप्रपञ्चेन । अतो यथा कालिदासानामेवं भर्तृहरीणां बहुत्वं स्वीकरणीयमेवेति ।

(५) इदं पुनर्न मनागपि युज्यते वक्तुं यथा भर्तृहरिनिर्वेद इवात्रापि विज्ञानशतके भर्तृहरिर्भार्यां प्रति बालाशब्देन व्यवहरतीति शतकत्रयप्रणेतैवास्य कर्तेति । निसर्गो ह्ययं कवीनां यत्प्रायेण कान्तासु प्रयुञ्जते बालाशब्दम् । दृश्यते हि बाले नाथ विमुञ्च मानिनि रुषमिति बाले बालमरालमञ्जुगमन इत्यादौ च भार्यां प्रति बालाशब्दस्य प्रयोगः । अतो महीयसाऽपि प्रयासेन साध्यमानं न सिद्ध्यति शतकत्रयविज्ञानशतकयोः समानकर्तृत्वमित्येवानन्यगत्या स्वीकुर्मः ।

एवं विचारिता अस्माभिः श्रीकृष्णशास्त्रिणोपन्यस्ता हेतवः । हेत्वन्तरैरपि नास्य शतकत्रयकर्तृभर्तृहरिविरचितत्वं पर्यवस्यति । तथाहि । प्रथमं तावदियं बलवत्याशङ्का यथा येन यदेकदा ये नार्थेनानुगतं पद्यं विरच्यते न किल तेनैव तादृशं तद्विरुद्धार्थं कदाचिदप्युपनिबध्यते । दृश्यते च शतकत्रयानुपलब्धं **तथापि भक्तिस्तरुणेन्दुशेखर** इत्यादिभिः पद्यैर्भर्तृहरेर-

नभिमतत्वेन ज्ञायमानं च शतशः प्रत्यक्षीक्रियमाणं विज्ञानशतके श्रीरङ्गादिपदोपानिबद्धं भर्तृहरेः श्रीविष्णौ प्रेम न च विष्णोः परब्रह्मत्वाद्वैराग्योत्तरमेव तत्र प्रवृत्तिरेतस्येति वक्तव्यम् । यो हि तस्य परब्रह्मतामवगच्छेत्स ब्रह्मवर्णनप्रस्तावेऽवश्यं तथोपनिबध्नीयान्न तु तत्तथा क्वचिदपि लीये परब्रह्मणीत्यादौ दृष्टमतो न विज्ञानशतकं शतकत्रयकर्तुरितिप्रतिभाति।

किं च यान्येव वैराग्यशतके वैराग्यमयानि पद्यानि दृश्यन्ते तान्येवानुवादसरणिमनुसृतानि विज्ञानशतकेऽपि । एतच्चैककर्तृकत्वे न सम्भवति । वैराग्यशतके किल वैराग्यस्यैव विशेषतः प्रतिपादनीयत्वाद्युज्यत एव तादृशानामेव पद्यानामुपनिबन्धः। किं तु न विज्ञानशतकेऽपि वैराग्यमेवभूयिष्ठमुपवर्णयितुं युक्तम् । तत्र हि विज्ञानमेव प्रतिपाद्यं विशेषेण । विज्ञानशतके त्वेतद्विरुद्धमेवावलोक्यते प्रायेण अतोऽप्युपरितनमेवास्मन्मतं स्थिरीभवति ।

अपि च । काव्यद्वयस्य भावसादृश्येऽपि नास्त्येव रचनासाम्यम् । शतकत्रये हि प्रायेण द्राक्षापाको निरर्थकपदशून्यत्वं सङ्क्षेपि बहुलार्थत्वं मनोहरशय्याशालित्वं प्रसादभास्वरत्वं च भूयिष्ठं प्रत्यक्षीक्रियते । अत्र च विज्ञानशतके नैतद्विशेषतो दृष्टमित्यपि प्रागुक्तमेव मतं स्थिरीकुरुत इत्यलं विस्तरेण ।

एव च नेदं विज्ञानशतकं शतकत्रयकर्त्रा भर्तृहरिणा प्रणीतमपि तु तद्भिन्नेनैवेति संसिद्धम् । अत्रापि सन्ति मनोहराणि कियन्ति पद्यानि तानि च विज्ञानशतकेऽवश्यं दृश्यन्तां रासिकैः विस्तरभयात्तु नात्रोदाहर्तुं शक्यन्ते । इदं किल नव्यं काव्यमवश्यं सङ्ग्राह्यम् । एतच्च प्रकाशयता बहूपकृतं श्रीकृष्णशास्त्रिणा लोकानामिति सप्रमोदं ब्रूमः । प्रणन्दामश्चैवं विधेनास्य महाशयस्य संस्कृतभाषाप्रेम्णा । आशास्महे साफल्यमेतस्य महाभागस्य प्रयत्नमचिरादेवोपस्थेयादिति। यच्च सम्पादकानां धर्ममनुसरतः किमपि न्यूनाधिकं मद्वदनतो निरसरत्तत्र यदि किमप्यनुचितमेव भासेत तदा क्षम्यतामिति शिवम् ।

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

श्रीगणेशाय नमः ।

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

॥ भासावतरणिका ॥

पुरा तपे क्षीणजलाः किलापगाः *
प्रसस्वनुर्दृप्ततमा इवावनौ ।
नभस्यमूः पूर्णजला न तु स्वनं
वितन्वते क्षुद्रतमो हि जल्पति ॥ ४ ॥

॥ उद्भटश्लोकाः ॥

अधरकिसलये कान्तदन्तक्षते
हरिणशिशुदृशां नृत्यति भ्रूयुगम् ।
ध्रुवमुचितमिदं यद्विपत्तौ सता-
मतिकुटिलगतेः स्यान्महानुत्सवः ॥ ८ ॥

परमर्मनिरीक्षणानुरक्तं
स्वयमत्यन्तनिगूढचित्तवृत्तिम् ।
अनवस्थितमर्थलुब्धमारा-
दौपच्छन्दसिकं जहीहि मित्रम् ॥ ९ ॥

अतिदारुणा द्विजिह्वा परस्य मर्मानुसारिणी कुटिला ।
दूरात्परिहरणीया मैत्री नागीव सज्जनैरसताम् ॥ १० ॥

---

* तपो ग्रीष्मर्तुः १ आपगा नदी । ३ नभाः श्रावणः २ स्वच्छन्दवर्तीति यावत् ।

# श्रीमदप्पयदीक्षितः ।

( पूर्वतोऽनुवृत्तः )

इतरश्च प्रबन्धः श्रीदीक्षितप्रणीतो वृत्तिवार्तिकं नाम । अत्र किलाभिधालक्षणाव्यञ्जनाख्यानां तिसृणामपि वृत्तीनां लक्षणानि सोदाहरणानि तद्भेदाश्च सविस्तरं प्रतिपादिताः । अस्य च प्रबन्धस्य च परिच्छेदद्वयमेवोपलभ्यते । तत्र च प्रथमेऽभिधाया द्वितीये च लक्षणाया निरूपणमतिमात्रमनोहरमवश्यद्रष्टव्यं चास्ति । अस्य च प्रबन्धस्य वृत्तिविषयकत्वाद्वृत्तीनां च त्रित्वात्तिसृणामपि पृथक्प्रतिपादकाः परिच्छेदास्त्रय एवेति सर्वेऽपि प्रतिपद्येरन् । किंतु तत्राद्यवृत्तिद्वयप्रतिपादक एव प्रबन्ध इदानीं परिच्छेदद्वयात्मक एव प्रबन्ध इदानीमुपलब्धः । मन्यामहे चान्यो विद्यत एव किंतु नाद्याप्युपलब्ध इति । अनुसंधीयमानश्च स यदि समाधिगम्येत तदाऽवश्यं तं वा तद्विषये वा कमप्यात्मन आशयं प्रकाशयिष्यामः । न केवल त्रयोऽस्य परिच्छेदा इत्यनुमानं किंत्वस्ति तत्र दीक्षितानां वचनमपि तच्च तृतीयसंख्यायां ( षष्ठखण्डस्य ) पञ्चाशपृष्ठे समुदाहृतमस्माभिः ।

वृत्तीनां च त्रयं प्रोक्तं दीक्षितैर्वृत्तिवार्तिके । यथा—

**वृत्तयः काव्यसरणावलङ्कारप्रबन्धृभिः ।**
**अभिधा लक्षणा व्यक्तिरिति तिस्रो निरूपिताः ॥**

तत्राभिधा नाम शक्त्या प्रतिपादकत्वम् । सा त्रिधा योगो रूढिर्योगरूढिश्चेति । एतषां लक्षणान्यपि दीक्षितैः प्रोक्तानि ग्राहकेभ्य उपह्रियन्ते । यथा—**तत्राखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढिः ।** यत्र शब्दे धातुप्रत्ययाद्यवयवशक्तिर्नाङ्गीक्रियते नापि संगच्छते किंतु समुदितस्यैव विशिष्टोर्थो बोध्यते तत्र रूढिरित्यर्थः । यथा—

१ व्यंजना । २ कोशव्याकरणादीनां संकेतः शक्तिः । ईश्वरसंकेत इति तु विवादास्पदत्वान्नोक्तम् ।

यत्ते पदाम्बुरुहमम्बुरुहासनेड्यं
धन्याः प्रपद्य सकृदीश भवन्ति मुक्ताः ।
नित्यं तदेव भजतामतिमुक्तलक्ष्मी-
र्युक्तैव देव मणिनूपुरमौक्तिकानाम् ॥ इति ॥

यदि सकृदपि चरणौ प्रपन्नाः पुरुषा मुक्ता भवन्ति तदा ये संततमेवेश्वरस्य चरणयोः संनिहितास्तेषां नूपुरमौक्तिकानां साहजिकमेवातिमुक्तलक्ष्मीवत्त्वमिति भावः। मौक्तिकानामतिमुक्तकुसुमानां च सादृश्यमुपजीव्येयमुक्तिः । तत्र प्रौण्ड्र¹कवाच्यतिमुक्तशब्दो मणिनूपुरशब्दौ चाखण्डशैव शक्त्या बोध्यन्ते न त्ववयवशक्त्या । तत्र मुक्तानतिक्रान्ता इत्याद्यवयवशक्तेरनुपयुक्तप्रायत्वात्समुदायशक्तिरेवाङ्गीक्रियते ।

**अवयवशक्तिमात्रसापेक्षत्वं पदस्यैकार्थप्रतिपादकत्वं योगः॥**

यदि पदेनावयवशक्त्यैवैकोऽर्थः प्रतिपाद्यते तदा योग इत्यर्थः । यथा—

ऊर्ध्वं विरिञ्चिभवनात्तव नाभिपद्मा-
द्रोमावलीपदजुषस्तमसः परस्तात् ॥ इति ॥

अत्र विरिञ्चिभवननाभिपद्मरोमावलीशब्दानां योगः ।

**अवयवसमुदायोभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योगरूढिः ।**

यथा मेरौ सुरालयशब्दः । तत्र हि सुरा निवसन्तीति मेरौ सुराणामालयो निवासस्थानमित्यवयवार्थेन रत्नसानुः सुरालय इति समुदायार्थेन चैकस्यैवावबोधः। यथा वा कमले पङ्कजशब्दः। अत्र हि पङ्काज्जायत इत्यवयवे पङ्कजमिति समुदायेन चैकस्यैव कमलरूपार्थस्य बोधाद्योगरूढिः ।

त्रिविधाप्येषाऽनेकार्थानां शब्दानां स्थाने संयोगाद्यैर्नियम्यते । संयोगादयश्च यथा—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥

---

१ मोगरा इति भाषा ।

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इति॥

अर्थः प्रयोजनम्। प्रकरणं वक्तृश्रोतृबुद्धिस्थता। लिङ्गं प्रयुक्तानां नानार्थपदार्थानामर्थान्तरव्यावर्तको धर्मः। शब्दस्यान्यस्य संनिधिर्नानार्थस्य पदस्य विशिष्टार्थसंसर्गिणोऽर्थान्तरवाचकस्य पदस्य संनिधिः। सामर्थ्यं कारणत्वम्। औचिती योग्यता। व्यक्तिः पुंस्त्रीनपुंसकान्यतमत्वम्। स्वरा उदात्तानुदात्तादयो वेदादौ प्रसिद्धाः। एतेषां चोदाहरणानि तत्र संयोगस्योदाहरणं यथा सशङ्खचक्रो हरिरिति। अत्र हि हरिपदस्य केसरितुरङ्गकपिप्रभृतिष्विन्द्रादिषु च वर्तमानत्वेऽप्यत्र शङ्खचक्रसांनिध्याद्धरिर्नाम भगवान्विष्णुरेवेति बोध्यते। न ह्येतस्मादन्यत्र शङ्खचक्रसंयोगसंभव इति। विप्रयोगो यथा। अशङ्खचक्रो हरिरिति। अत्र निषेधस्य प्राप्तिपूर्वकत्वनियमाच्छङ्खचक्रयोश्चान्यत्राप्राप्त्या तन्निषेधस्यान्यत्रानुपपत्तेः पूर्वत्र संयोगेनेवात्रापि शङ्खचक्रयोर्वियोगेन स एव विष्णुरूपोऽर्थो बोध्यते। साहचर्यं च सहचरत्वम्। तच्च यथा रामलक्ष्मणौ। अत्र रामशब्दस्य परशुरामबलरामाद्यनेकार्थान्तरसत्त्वेऽपि लक्ष्मणसाहचर्यस्यान्यत्रासंभवाद्रामो दाशरथिरेव। विरोधित्वं यथा रामरावणाविति। रामशब्दस्य पूर्वोक्तानेकार्थसत्त्वेऽपि रावणविरोधविषयत्वस्यान्यत्रासंभवाद्रामोऽत्र दाशरथिरेव। अर्थो यथा मोक्षाय हरिं भजति। मोक्षरूपेण प्रयोजनेनान्यस्य हरेरुपासनाया असंभवादत्र हरिर्भगवानेव। प्रकरणं यथा विवेश रामो दुर्धर्षं तापसाश्रममण्डलमिति। अत्र वक्तुः श्रोतुश्च बुद्धौ रघुवीरकथाया एव स्थित्या रामो रघुवीर एव। लिङ्गं यथा कुपितो भूभृदिति। भूभृच्छब्दस्य पर्वताद्यर्थान्तरवाचकत्वेऽपि कुपितत्वरूपस्य धर्मस्य पर्वतेऽसंभवाद्भूभृदत्र राजैव। कोपो हि भूभृच्छब्दं पर्वतरूपार्थाद्व्यावर्तयन्राज्ञि योजयति। शब्दस्यान्यस्य संनिधिर्यथा निषधं पश्य भूभृतमिति। अत्र पर्वतविशेषवाचिनो निषधशब्दस्य सांनिध्याद्भू-

च्छब्दस्य पर्वत एवार्थः । सामर्थ्यं यथा मधुना मत्तः कोकिल इति । अत्र कोकिलमदजनकत्वसामर्थ्यस्यान्यत्रासंभवान्मधुर्वसन्त एव । औचिती यथा भजत हरिं भवतापखिन्ना इति । अत्र संसारतापखेदहरणौचित्यस्यान्यत्राप्रसिद्ध्याद्धरिर्भगवानेव । क्षीरार्णवे हरिः शेते प्रलये तिष्ठति हरिरित्यत्र क्षीरार्णवप्रलयरूपाभ्यां देशकालाभ्यां हरिर्गरुडध्वज एव । मित्रो भातीत्यत्र पुंव्यक्त्या मित्रः सूर्यः । स्वरोदाहरणं तु तिस्र एव सायाह्नोपसदो द्वादशाहीनस्येति । अत्र श्रुतावहीनपदं मध्योदात्तस्वरेणाह्र्गणसाध्यसुत्याकं द्वादशाख्यं क्रतुविशेषमभिधत्ते । अह्नः क्रतावित्यनुशासनात् ।

एवं यथा वृत्तिवार्तिके श्रीमदप्पयदीक्षितैरभिधा निरूपिता तथा प्रदर्शितमावश्यकत्वात्संक्षेपतोऽस्माभिः ।

द्वितीयपरिच्छेदे तु लक्षणा सविस्तरं प्रतिपादिता । तस्याश्च नात्युपयुक्तत्वान्नात्रोच्यते । व्यञ्जनां तु प्रबन्धान्तरे वर्णयिष्यामः ।

अन्यश्च दीक्षितप्रणीतोऽस्मन्नयनगोचरः प्रबन्धो रत्नत्रयपरीक्षा नाम । तस्यापि तात्पर्यमत्रोपवर्णयितुमिच्छामः ।

अयं किल श्रीमदप्पयदीक्षितप्रणीताष्टपद्यात्मको लघीयानपि बह्वर्थो हृदयङ्गमो युक्तिप्रपञ्चसमुल्लासितोऽवश्यं पठनीयश्च प्रबन्धः । यः किलातिबृहत्तरया व्याख्यया समुद्भासितः समुपजनयति विस्मयं द्रष्टॄणां मनसि । यद्यपि व्याख्येयं केन प्रणीतेति प्रबन्धान्ते नोल्लिखितं तथापि यस्य दीक्षितविरचिताः प्रबन्धाः परिचिताः स विनैवायासं निश्चिनुयाद्दीक्षितप्रणीतैवेयं व्याख्येति । अन्यो हि प्रबन्धमेवंविधं व्याचक्षाणः प्रबन्धान्ते नामाप्यात्मनो व्यलेखिष्यत् । यथा च ब्रह्मतर्कस्तवे नानाविधानां प्रमाणानामुपन्यासो यथा वा कल्पनासमुल्लासो यथा वा वचनशैली तथैव रत्नत्रयपरीक्षाया व्याख्यायां प्रविभाति । अत एवोच्यते व्याख्याप्यस्य श्रीमदप्पयदीक्षितैरेव विरचितेति । किमधिकं व्याख्यां विना केवलाया अष्ट-

पद्या रत्नत्रयपरीक्षात्वमेव न संगच्छते। न हि प्रतिज्ञोपन्यासमात्रस्य परीक्षेति क्वापि श्रूयते नाम । सा हि प्रमाणोपन्यासादिनाऽर्थस्य विचारः। स चात्र व्याख्यायामेवास्तीति व्याख्यासंवलितस्यैवास्य प्रबन्धस्य रत्नत्रयपरीक्षेत्याख्येति युक्तमुत्पश्यामः । व्याख्यान्ते च

**आमथ्य भाष्यदुग्धाब्धिं प्राप्तं रत्नत्रयं ततः ।**
**शंभुर्गौरी हरिश्चेति तच्च सम्यक्परीक्षितम् ॥**

इत्युक्तेर्व्याख्यावसान एव रत्नत्रयपरीक्षायाः परिसमाप्तिरित्यवगम्यते । प्रबन्धस्य चास्याप्पयदीक्षितप्रणीतत्वाद्व्याख्यांशस्यान्यकर्तृकत्वशङ्का निरवलम्बैव ।

यदप्युच्येताष्टमपद्यावसान एवेति श्रीत्यादिदण्डकेन रत्नत्रयपरीक्षायाः समाप्तेरुल्लेखात्तत्रैव तस्याः परिसमाप्तिः ।तस्मिन्नेव दण्डके श्रीमदप्पयदीक्षित नाम्नः समुल्लेखाद्दीक्षितकृतिस्तावत्येव व्याख्या त्वन्यप्रणीतैवेति तन्न समञ्जसम् । उपर्युक्तेन व्याख्यावसानश्लोकेन व्याख्यासंवलितस्यैव प्रबन्धस्य रत्नत्रयपरीक्षेति नाम्नः स्पष्टत्वात् । दण्डकस्य तु व्याख्यान्ते लेख्यस्य पद्यान्ते लेखः प्रामादिक एव । स्याच्च कदाचिद्व्याख्याया अन्यकर्तृत्वं यदि नाम तत्र पद्यगतपदानामर्थौ निर्दिश्येत । न चैतदस्ति। प्रत्युतमूलेऽनवलोक्यमानेभ्यः प्रमाणेभ्योऽतिरिक्तप्रमाणादीनामुपन्यासेन मूले प्रतिज्ञातस्यैवार्थस्य परिपोषणं विस्पष्टयति पद्यसमानकर्तृकैव व्याख्येति । तत्सिद्धमेतावता व्याख्यासंवलित एव प्रबन्धोऽयं रत्नपरीक्षाख्यामर्हतीति तत्सहकृतोयं दीक्षितप्रणीत एवेति । ब्रह्मतर्कस्तवे दृश्यमाना च दीक्षितचरणानां व्याख्यानसरणिरत्रापि प्रकटीभवन्ती द्रढयति नः सिद्धान्तम् ।

पद्यैः सहैव व्याख्यागतस्य युक्तिजालस्य संक्षेपत एवोपन्यासोऽत्र नायुक्तः किंतु प्रबन्धोऽयमचिरादेव स्मार्तमतोत्तेजकसभाद्वारा प्रकाशयिष्यत इति व्याख्यामुपेक्ष्य संक्षेपतः पद्यानि कानिचित्संबन्धप्रदर्शनपूर्वकमुदाह्रियन्ते ।

अत्र च प्रतिपाद्यं रत्नत्रयम् । तच्च धर्मी धर्मौ चेति । तत्र धर्मी श्रीशिवः परब्रह्माख्यः । धर्मस्तु द्विविधो मायोपादानभेदात् । तत्राद्यो गौरी द्वितीयस्तु नारायणश्च पुराणादीनां वचनैस्त्रयाणामप्येषामभेद एव । तत्र धर्मभूतयोर्गौरीनारायणयोः सेवायाः श्रीशिवोपासनायामावश्यकत्वम् । शिवोपासनाच्च तदेकतानतामापद्यानन्दस्वरूपीभावो मोक्ष इति । तत्रा-यमाद्यः श्लोकः ।

**नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकं**
**धर्मोधर्मेति भेदद्वयमयति पृथग्भूयमायावशेन ।**
**धर्मस्तत्रानुभूतिः सकलविषयिणी सर्वकार्यानुकूला**
**शक्तिश्चेच्छादिरूपा भवति गुणगणश्चाश्रयश्चैक एव॥इति॥**

द्वितीये च पद्ये धर्मस्य माहात्म्यं निरूपितम् । तृतीये च धर्मिणो धर्मस्य च कृत्यविभागः प्रदर्शितः ।

**कर्तृत्वं तस्य धर्मी कलयति जगतां पञ्चके* सृष्टिपूर्वे**
**धर्मः पुंरूपमाप्तः सकलजगदुपादानभावं बिभर्ति ।**
**स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्तुः**
**प्रोक्तौ धर्मप्रभेदावपि निगमविदां धर्मिवद्ब्रह्मकोटिः ॥इति॥**

अथ कोयं धर्मी का चास्य महिषी महामाया कश्चोपादानसंज्ञो धर्मस्यांश इति चतुर्थे प्रतिपादितम् । यथा—

**योऽसौ धर्मी स शम्भुः शिव इति च परब्रह्म चेति प्रसिद्धो**
**या चोक्ता धर्मिणोऽस्याविघटितमहिषी साम्बिकोमेति विद्या ।**
**यश्चोपादानभूतः पर इति पुरुषस्त्वेष नारायणोक्त्या**
**ख्यातः कौर्मादिवाक्यैरधिगमितमिदं नारदस्यापि वाक्यैः**
**॥ इति ॥**

---

* सृष्टिपालनसंहारतिरोधानानुग्रहरूपाणि पंचकृत्यानि ।

पञ्चमे तु नारायणस्य महिमानं प्रपञ्च्य श्रीशिवप्राप्तिकामानां प्राक्तदुपासनस्यावश्यकत्वं प्रतिपादितम् ।

**तस्यैवाद्यस्य पुंसः परिणतिरखिलोऽप्यम्बरादिर्विकार-**
**स्तस्यैवांशो विरिञ्चावधिरिह सकलोऽप्येष संसारिवर्गः ।**
**प्राप्यं कृत्वैव तस्य प्रपदनममृतस्याद्यमानन्दमूर्तेः**
**स्थानं भर्गस्य जुष्टं तदमृततनयैर्वेदवेद्यैः पुराणैः ॥ इति ॥**

षष्ठे गौर्या महिमानं प्रकाश्य तस्याः सेवायाः शिवोपासनायां नियतभावः प्रदर्शितः । सप्तमे शिवोपासनायाः साक्षान्मुक्तिहेतुत्वमुक्तम् । अन्ते च पद्यमिदमुपन्यस्तं यथा—

**विद्वांसः शङ्करस्य श्रुतिमतिमहितोपासनावासनाभि-**
**र्लब्धस्वान्तःप्रतिष्ठाः सुदृढमभिधिया तं विलोक्यात्मनैव ।**
**गोलोकस्योर्ध्वभागादपि परमपदाद्वैष्णवादूर्ध्वदेशे**
**भास्वत्कोटिप्रभं यान्त्यपुनरवगमं स्थानमानन्दरूपम् ॥**

एतावता च प्रबन्धेनानेन श्रीमदप्पय्यदीक्षितानां महाशैवत्वं स्फुटीभवति । एवमुदाहृतं संक्षेपतो रत्नत्रयपरीक्षणम् । एषां चान्यः क्षुद्रः प्रबन्धोऽस्माभिरवलोकितो रसपरिप्लुत आर्याजातिमयः शतपद्यात्मको वैराग्यशतकाख्यः । अस्य च नाम्नैव तत्रत्यं प्रतिपाद्यमवगन्तुं शक्यते ।

यश्चापरो महान्प्रबन्धः सिद्धान्तलेशसंग्रहो नाम तस्यापि तात्पर्यं संख्यान्तरे प्रकाशयिष्यामः ।

( क्रमशः । )

## कन्यकाविवाहः ।

—:O:—

हा कालमाहात्म्यम् । हा शिक्षापरिणामम् । येषां खल्वीश्वरकल्पानां सर्वदर्शिनां महर्षीणां मुखोच्छिष्टभूतं व्याकरणं वा धर्मसंहितां

१ तस्य नारायणस्येत्यर्थः ।

वा दर्शनं वा किंचिदपि कथमपि गुरुतोऽधीत्यात्मानं मानवसंख्यासु गणयामः। तानेवेदानीं प्रतिपदं द्राग्दूषयितुं तेषामेव भ्रान्तिं घोषयितुं तेषामेव च स्थूलदर्शितां प्रतिपादयितुं प्रायः प्रयतामहे। तत एव ब्रवीमि हा कालमाहात्म्यं हा शिक्षापरिणाममिति।

येषां खलु पूज्यपादकनिष्ठारजःकणानामेकस्यापि शब्दार्थस्य विभावनायां कुण्ठायते मतिर्मन्दायते हृदयमज्ञायते च मस्तिष्कं तेषामेव शास्त्राण्यनधीत्याप्याद्यन्तमध्यमनवलोक्यापि केवलं भाषान्तरेणानूदितानि पठित्वा द्राक्समालोचयामः। तत एव ब्रवीमि हा कालमाहात्म्यं हा शिक्षापरिणाममिति।

अधुनातना अनेकेऽर्वाचीना नवशिक्षिता झटिति ब्रह्मवादिनः समालोचयन्त्येवं यदार्यशास्त्रेषु बालिकाविवाहः संवादितो नासौ धर्ममूलो वा युक्तियुक्तो वा विज्ञानप्रसूतो वा भवितुमर्हति।

अहो ते खल्वेवं ब्रुवते। तथा हि—अशेषदुःखपापाकरो हि बाल्योद्वाहः। असंपूर्णे वयसि न परिणयो विधेयः। तथा सति ह्यपरिणतबीजोद्भवः शाखिन इव तदुद्भवाः संताना हीनवीर्या निस्तेजस्काश्च भवेयुरिति। पठन्ति च ते तदनुकूलं वचनम्—

**ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।**
**यद्याधत्ते पुमान्गर्भं कुक्षिस्थः स विपद्यते॥**
**जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः।**
**तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्॥**

इति सुश्रुते शारीरस्थाने।

अत एव ते—

**पितृवेश्मनि या नारी रजः प्राप्नोत्यसंस्कृता।**
**सा कन्या वृषली ज्ञेया हरंस्तां न विदुष्यति॥**

इति विष्णुपुराणम् २४ अध्याये ४१ श्लोकः

संप्राप्ते दशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
असंभाष्यो ह्यपाङ्क्तेयः स ज्ञेयो वृषलीपतिः ॥

इति यमवचनम् ( २२।२८ )

अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या तत ऊर्ध्वं रजस्वला ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहोऽष्टमवर्षायाः कन्यायास्तु प्रशस्यते ॥

इति संवर्तवचनं च ६६ । ६८

नैव युक्तिसहं न वा धर्मं प्रवर्तयितुं प्रभवतीति च प्रलपन्ति । अहो रे पाण्डित्यम् । क्व वा बाल्योद्वाहः क्व वा बाल्यगर्भाधानम् । न हि बाल्यविवाह एवाशेषदुःखपापाकरो भवितुमर्हति । विवाहसंस्कारे क्रियमाण एव गर्भ आधीयत इति कुतः प्राप्तं नव्यशिक्षितैः परंतु बालायामजातपुष्पायां रतिरेव दुष्टेति स्मर्यते यथा—

प्राग्रजोदर्शनात्पत्नीं नेयाद्गत्वा पतत्यधः ।
वृथाकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात् ॥

इतिनिर्णयसिंधौ यमः ।

यदपि प्रतिवादिभिर्महाभारतीयमुद्वाहतत्त्वधृतं निर्णयसिन्धुधृतं च षोडशवर्षीया अपि विवाहबोधकं वचनं दर्शयितुं कथंचिद्युज्यते किंतु

तदपि कमलाकरेण निर्णयसिन्धौ तृतीयपरिच्छेदे **दातुरभावे द्वादश-षोडशाब्दे ज्ञेये** इत्यादिनाऽनामतार्तवाया एव षोडशवर्षीयाया विवाहो युक्त इति व्यवस्थापितम्। तथा च तत्रत्यवचनं महाभारते—

**त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देत नग्निकाम्।**
**दशवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥**
**अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत्॥ इति।**

पित्रादीनां सत्त्वे त्वष्टवर्षीया एव विवाहः सर्वथा युक्त॥ इति॥

अतोऽद्य बालिकाविवाहे कापि लौकिकी युक्तिरन्तर्निहिता वर्तत एवेति विचार्यते। किंतु ऋषीणां यौगिकीयुक्तिस्तु नास्मादृशां स्थूलदृशां विषय इति काप्यलौकिकी युक्तिरप्रकाशमानाऽपि राज्ञामिवाज्ञामृषीणाम-प्यपसारयितुं नालमिति तां शिरसा वन्देमहि।

प्रायः सर्वैरवैतद्विदितं संभवेद्यदुक्तं शाक्तानन्दतरङ्गिण्यां प्रथमे पटले **ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति कलेवरे** इति। शरीरमप्येकं क्षुद्र-ब्रह्माण्डमिति। यथा महाब्रह्माण्डे चन्द्रसूर्यादिग्रहा नक्षत्राणि गिरिनदी-वनप्राणिन उद्भिज्जामृतविषाणि च विराजन्ति स्थूलरूपेण तथा तान्यपे-वाऽस्मिन्क्षुद्रब्रह्माण्डे क्षुद्ररूपेण च विराजन्ते।

तथा हि देहेऽस्मिंश्चक्षुषी तिमिरापहरणेनालोकं प्रयच्छतो यथा सूर्याचन्द्रमसौ। रसना सेढकामिता अपि धानाकाः क्लेदयति यथा जलम्। जठरानलो भुक्तमन्नं विकरोति यथा हुतं फलादिकं वन्हिः। त्वचि संतापो-ऽनुभूयते यथा वन्हौ। केशा रोमाणि च शरीरे प्ररोहन्ति यथा भूतले कुशकाशाः। उत्कुणाः शिरोरुहेषु विचरन्ति यथा विपिने मृगाः। ते तत्र मिथुनीभावमापद्यन्ते सन्तानानुत्पादयन्ते संपद्यन्ते विपद्यन्ते च यथा वयं वासभूमौ। इत्थमन्यानि तु पाठकैरूहनीयानि।

यथैव सूर्यादयोऽत्र प्रकारान्तरेण सन्ति तथाऽत्रामृतानि विषविशेषाश्च

ध्रुवं वर्तन्ते। अस्माकं दशनाग्रेषु नखधारासु च विषमस्ति। नृणां द्वादशमला*एव विषाणि। अन्ततो वङ्गदेशीयव्यवहारे दृश्यते। विषस्य विषमौषधमिति तु सिद्धान्तितं शास्त्रम्। यः खलु मर्तुकामो विषमश्नाति तं जीवयितुं नरपुरीषं भक्षयति। यस्य च यूनो मुखनासादिषु व्रणा रोहन्ति तत्र द्विधा त्रिधा च नासाश्लेष्मप्रलेपः प्रदीयते। म्रियन्ते च व्रणा इति बहुधा प्रत्यक्षितम्। यस्य गलपार्श्वे कक्षे वङ्क्षणे वा ब्रध्नः संजातः स तं निष्ठीवितेन द्विधा त्रिधा च विलिम्पति म्रियते च विज्वरितावस्थो ब्रध्नः। यस्य चोपदंशपीडया पुंश्चिह्नं पीड्यते तं स्वमूत्रेण तत्क्षतं धावयितुमुपदिशति भिषक्। यस्य यस्मिन्नङ्गे कश्चिन्निःश्वसिति क्षुतं वा क्षिपति तदङ्गं स बहुधा परिमार्ष्टि कुप्यति च निःश्वसितारं क्षुत्कारकं वा पुरुषम्। तस्मादुपपद्यते नरशरीरे विषविशेषोऽस्तीति।

स च विशेषोऽसाधुशरीरे पापमित्याख्यायते मुनिभिरित्यनुमीयते। स पुनरालापाद्गात्रसंसर्गान्निःश्वासात्सहभोजनात्सहशय्यासनाध्यायाद्यौनादितश्च संसर्गादपरशरीरे सरति। प्रसृतश्च तं विकृतयति रुजत्यायुषा वियोजयति शेषे मारयति च। साधुशरीरेऽपि स विषविशेषोऽणीयाननुल्बणो वर्तमानोऽपि पुण्याख्यया गीयमानेनामृतेनाभिभूयत इति तेषां संसर्गः प्रार्थनीय इति।

एतेन कश्चित्कस्यचित्संसर्गात्पुष्टिमादधाति कश्चिद्वा जीर्यतीत्यायातम्। पूर्वे खलु महर्षयः कस्य तनौ विषं कस्य वा पीयूषं प्रवहतीत्यङ्गप्रत्यङ्गलिङ्गेन परीक्षितुमीशते स्म। तेन च कस्य वा केन संसर्गः सुखाय सोढव्यो भवेत्कस्य केन वा न भवेदिति च ते स्फुटं वक्तुं च शक्नुवन्ति स्म। किंतु जीवनमेव सर्वैरभ्यर्थ्यते न तु मरणमित्यपि स्वीकरणीयमिति।

हा हा अधुना तु वयं मन्दमतयः स्थूलदृशश्च नैव नरशरीरस्थानि

---

* वसा शुक्रमसृङ्मज्जा मूत्रं विट्कर्णविण्नखाः।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः॥ इति स्मृतिः॥

विषपीयूषसूचकानि सूक्ष्मानुसूक्ष्मचिह्नानि कियदपि निश्चयेन वेदितुं नालमिति । तथापि जीवनमेव सर्वैरभ्यर्थ्यते न तु मरणमित्यपि स्वीकरणीयमिति ।

पूर्वकाले विवाहविधौ—उद्वाहतत्त्वम् —

न मूत्रं फेणिलं यस्य विष्ठा वाप्सु निमज्जति ।
मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीबः स उच्यते ॥

इत्यनुशासनाद्वरः परीक्ष्यते स्म । कन्याऽपि च—

त्रीणि यस्याः प्रलम्बानि ललाटमुदरं भगम् ।
क्रमेण भक्षयेन्नारी श्वशुरं देवरं पतिम् ॥

इत्यनुशासनाच्च परीक्षिता स्यात् ।

किं त्वधुना सामाजिकशासनाद्वरस्य कन्यायाश्च का कथा परीक्षायास्तन्नामापि ग्रहीतुं दोषमाशङ्कन्ते । तथापि जीवनमेव सर्वैरभ्यर्थ्यते न तु मरणमित्यपि स्वीकरणीयमिति ।

इत्थं किंवदन्ती जागर्ति । यथा यः श्वा यश्च विषधरः पुनः पुनः प्राणिनो दशति तस्य विषवेगः क्रमशः श्लथीभवति । ततश्च तेन दष्टा अनेके नाक्रम्यन्ते विषेण न वा म्रियन्ते च ।

तथा स्त्रीशरीरेऽपि विषमस्त्येव । तच्च विषं यदा वयो वर्धते यौवनमुद्भिद्यते अङ्गं प्रत्यङ्गं च सम्यगुपचीयते तदा तस्या अपि युवत्याः प्रोच्छलितविषवेगाया अपरीक्षितायाः षोडश्याः परिणीताया आलापाद्गात्रसंस्पर्शात्प्रथमो भर्ता म्रियते । ततः प्रशान्तविषवेगा द्वितीय उपभर्तरि सुखं सा रमते । यथा रामदासकविवल्लभकृते ज्योतिःसारार्णवे पञ्चमतरङ्गे—

भूमिर्न स्पृश्यते यस्या अङ्गुल्या च कनिष्ठया ।
भर्तारं प्रथमं हन्ति द्वितीयं चाभिनन्दति ॥ इति ॥

किमधिकं प्रौढयौवनाया लम्बोदर्याः स्थूलजङ्घायाः स्थूलनासायाश्च शारीरविषं संसर्गात्क्रमश एकं द्वयं त्रयं चतुष्टयं पञ्चमं षष्ठं सप्तममष्टमं च पतिमुपपतिं च विनाश्य श्लथीभूतवेगं नवममुपपतिं न मार-

रजोनिःस्रवे तु युवत्या विषदोषः प्रशाम्यति । तथा च मनुः—

**स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।**
**मासि मासि रजो ह्येषां दुष्कृतान्यपकर्षति ॥ इति ॥**

अत एव रजोदर्शनाद्दिनानि त्रीणि न सा कमपि स्पृशति न केनाप्यालपति न हसति नाभ्यञ्जयति न स्नाति न द्विर्भुङ्क्ते न तैजसपात्रे भुङ्क्ते न खट्वायां साधुशय्यायां च शेते सर्वैरलक्षिता गृहकोणे वसति वस्त्राणि न स्वाङ्गं संयोजयति * दैवाद्योजितानि चेद्रजके—न निर्णेजितानि भवेयुः । दैवात्स्पृष्टश्चेत्कश्चित्तत्क्षणात्सचेलः स्नाति

---

**देवलः**—संलापस्पर्शनिःश्वाससहशय्यासनाशनात् ।
याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम् ॥

**छागलेयः**—आलापाद्गात्रसंस्पर्शान्निःश्वासात्सहभोजनात् ।
सहशय्यासनाध्यायात्पापं संक्रमते नृणाम् ॥ इति च ।

तथा च मदनपारिजाते दक्षः—
अंजनाभ्यंजने स्नानं प्रवासं दन्तधावनम् !
न कुर्यात्सार्तवा नारी ग्रहाणामीक्षणं तथा ।

**अत्रिश्चाह**—वर्जयेन्मधुमांसं च पात्रे खर्वेच भोजनम् ।
गन्धं माल्यं दिवास्वापं ताम्बूलं चास्यशोधनम् ॥
दग्धे शरावे भुंजीत पेयं चांजलिना पिबेत् ।

**याज्ञवल्क्यः**—स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् ।
स्ववाक्यं श्रावयेन्नापि यावत्स्नानान्न शुध्यति ॥

**विष्णुधर्मोत्तरे**—आहारं गोरसानां च पुष्पालंकारधारणम् ।
अंजनं क ् कतं दन्ताः पीठशय्याधिरोहणम् ॥
अग्निसंस्पर्शनं चैव वर्जयेच्च दिनत्रयम् ।

सुश्रुतेऽप्युक्तं —

ऋतौ प्रथमदिवसात्प्रभृति ब्रह्मचारिणी दिवा स्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यंगनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान्परिहरेत् ।

× × × × × × × × ×

दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतममोजिनीं हविष्यं त्र्यहं च भर्तुः संरेक्षत् । इत्यादि ( सुश्रुते शारीरस्थाने ) ।

तुलसीं स्पृशति विष्णोः पादोदकं पिबति ततश्च स विशुध्यति । एभि-रेव लिङ्गैः कथंचिदनुमीयते नारी विषधरीति ।

अत एव च प्रोद्भिन्नयौवनायाः समुच्छलितस्फुटविषाया विवाहो दीर्घं जीवितुकामेन नैव कर्तव्यो नैव कर्तव्य इति । परंतु तथाविधविष-कवलनादात्मानं त्रातुकामेन प्रच्छन्नाङ्कुरितान्तर्विषाया बालिकाया एव विवाहः कर्तव्यः कर्तव्य इति ।

अत एव तत्त्वदर्शिभिर्बहुभिर्मुनिभिः समस्वरमष्टमादिवर्षवयस्कानां बालिकानां विवाहः प्रशस्तत्वेन यदनुमोदितः प्रौढाया दृष्टरजस्कायास्तु विवाहो दुष्टत्वेन च यद्भूयोभूयः शिरःशपथं निषिद्धस्तत्सर्वथैव युक्ति-युक्तं च धर्ममूलं च विज्ञानप्रसूतं चेति सुधीभिश्चिन्तनीयम् । स्वीकरणीयं चेति सर्वं सुव्यवस्थितम् ।

अधुना नव्यशिक्षितैराद्यन्तमध्यमस्य प्रबन्धस्यालोच्य पूर्वोक्तानि **पितृवेश्मनि या नारी रजः प्राप्नोत्यसंस्कृते**त्यादीनि च विष्णवा-दिवचनानि विवाहे साधकानि बाधकानि च साधून्यसाधूनि वा विचा-र्यन्ताम् । मुनयश्च धन्या उच्यन्ताम् । अन्ततो बहिरप्रकटमन्तर्हृण्यतां चेति ।

( क्रमशः । )

## * वाचकस्य प्रतिस्तवः ।

तुष्टस्त्वदीयेन मनोहरेण
स्तवेन पीयूषसहोदरेण ।
सद्भक्त किंचित्प्रतिवक्तुकाम-
स्त्वामागतोऽहं शृणु सावधानः ॥ १ ॥
न भाजनं त्वत्प्रणतेः सखेऽहं

* यद्यपि वाचकशब्दोऽर्थान्तरे रूढस्तथाप्यत्र प्रबन्धे समाचारपत्रिकापाठकपरो-ऽसौबोध्यः ।

न चाप्यहं त्वत्कृतसंस्तवस्य ।
ईशो न नाहं चतुराननोऽपि
न माधवो नापि समश्च तेषाम् ॥ २ ॥
एष प्रभावः खलु पत्रिकायाः
सत्यं समाचारसुबोधिकायाः ।
यदद्य पात्रं प्रणतेः स्तुतेश्च
जातोऽस्म्यनर्होऽपि निकाममस्याः ॥ ३ ॥
तस्याः प्रभावेण नृपाः प्रजाश्च
ज्ञानं सुखं चापि समाप्नुवन्ति ।
जानन्ति भूपा हृदयं प्रजानां
ताश्चापि तेषां चरितं विदन्ति ॥ ४ ॥
तस्याः प्रभावेण गृहे स्थितोऽपि
द्रष्टुं प्रभुः स्याद्भुवनं मनुष्यः ।
आयोधनं वर्षवरोऽपि घोरं
पश्यन्न भीतिं समुपैति कांचित् ॥ ५ ॥
खञ्जोऽपि पृथ्वीं परितः प्रयाति
वचो दवीयोऽपि शृणोत्यकर्णः ।
गरुद्विहीनोऽपि चरत्यसौ खे
अहो प्रभावः खलु पत्रिकायाः ॥ ६ ॥
सेवेत भक्त्या मनुजो य एना-
मयेत संपादकवाच्यतां सः ।
आरूढसंपादकतापदस्य
दोषा लयं यान्ति गुणा महत्त्वम् ॥ ७ ॥
बालोऽपि वृद्धो भवति क्षणेन

मूर्खोऽपि वा गीष्पतितामुपैति ।
हन्त प्रसादात्खलु पत्रिकायाः
संपादकं सर्वगुणा भजन्ते ॥ ८ ॥
संपादको यश्च गुणी निसर्गा-
त्परीक्षते तं विनिपात्य दुःखे ।
नयत्यसौ तीर्णपरीक्षमुच्चै-
रन्यं क्षिपत्येव हठादधस्तात् ॥ ९ ॥
दोषा नृपस्यापि वदत्यशङ्कं
दीनस्य शंसत्यपि सा गुणौघान् ।
तस्या न लिङ्गेषु वयःसु नैव
दीनेषु चेनेषु न पक्षपातः ॥ १० ॥
पुष्टा कृशा चापि लघुश्च दीर्घा
बाला च वृद्धा युवती तथैषा ।
अनेकवर्णा सरसा विचित्रा
जागर्ति मायेव जगत्सु नित्यम् ॥ ११ ॥
संपादकस्यात्ति मुखेन भोज्यं
पेयं पिबत्यापि तदाननेन ।
ग्राह्यं च गृह्णाति करेण तस्य
अग्नेरिवाखण्डलमुख्यदेवाः ॥ १२ ॥
प्रयाति पश्यत्यपि सा परेषां
पादैश्च नेत्रैरिव भूमिपालः ।
शृणोति कर्णैरपि चान्यदीयैः
सा केवलं स्वेन मुखेन वक्ति ॥ १३ ॥
एवंप्रभावानवगम्यरूपा

जयत्यसौ कापि सुखप्रदा या ।
नमोऽस्तु तस्यै मम पत्रिकायै
कृताञ्जलेः संप्रणतस्य चाङ्घ्र्योः ॥ १४ ॥
परं च भो वाचक धन्यधन्य-
स्त्वमेव सत्यं भुवनेषु जातः ।
एवंप्रभावापि निरन्तरं य-
त्संसेवते त्वां बत पत्रिकेयम् ॥ १५ ॥
नित्यं चतुर्थेऽहनि सप्तमे वा
मासे द्विवारं ह्यथवैकवारम् ।
अनुत्वदिच्छामुपतिष्ठते त्वां
दूरस्थितं वापि समीपगं वा ॥ १६ ॥
रम्याः कथा नित्यमनेकरूपा-
स्तत्त्वं च नव्यं बहुशास्त्रजातम् ।
वक्तुं स्वयं त्वामनुयाति भक्त्या
त्वदीयमोदैकपरायणा सा ॥ १७ ॥
सखे परं चित्रमहो विचित्रं
दृष्ट्वापि भो नाद्रियसे यदेनाम् ।
दैवाद्दृशोर्मार्गमुपेयुषीं तां
बहिःकरोष्येव सहात्करेण ॥ १८ ॥
एवं त्वया नित्यमनादृतापि
भ्रातस्त्वदीयं गृहमेति भूयः ।
सति प्रमादे मम दृष्टिदोषा-
द्द्वारेण दण्डेन नियोजयेन्माम् ॥ १९ ॥
क्षुधार्दिता हीनबलातिदीना

भोज्यं चिरं त्वां परियाचमाना ।
बहिष्कृता निष्करुणं त्वयासौ
सेवां निराशा त्यजति त्वदीयाम् ॥ २० ॥
हा पत्रिकासौ मम हन्त हन्त
त्वय्येति दीनत्वममर्षणापि ।
महाप्रभावोऽपि जगत्प्रणाशो
जले प्रशान्तिं समुपैति वह्निः॥ २१ ॥
तस्मात्प्रभो वाचक सर्वशक्ते
नमोऽस्तु तुभ्यं सुकृती त्वमेव ।
भवत्कृपालेशमपेक्षमाणा
जीवत्यनाथा भुवि पत्रिका सा ॥ २२ ॥
त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव पाता च पतिश्च हर्ता
तस्याः सखे सर्वमसि त्वमेव ॥ २३ ॥
कृपाकटाक्षास्तव तां सृजन्ति
त एव सृष्टां परिपालयन्ति ।
रुषः कटाक्षास्तव संहरन्ति
ब्रह्मा च विष्णुश्च शिवस्त्वमेव ॥ २४ ॥
सा पत्रिका मे त्वदधीनजीवा
तन्निघ्नजीवोऽस्मि तदीयभक्तः।
देवश्च तस्मादसि मे त्वमेव
स्तोतुं च नातोऽर्हसि मां त्वमेवम् ॥ २५ ॥
नमाम्यहं वाचक संततं त्वां

प्रसीद नित्यं स्खलितं क्षमस्व ।
गृहाण सेवां मम पत्रिकायाः
समर्घ्य भोज्यं परिपाहि चैनाम् ॥ २६ ॥

---

## प्राप्तिस्वीकारः ।

श्रीशृङ्गगिरिवर्तिजगद्गुरुश्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्सच्चिदानन्दशिवाभिनवनरसिंहभारतिस्वामिपूज्यपादैः प्रणीता **शुद्धाद्वैतब्रह्मविद्याधिगमप्रकारमीमांसा** श्रीशृङ्गगिरिपुरनिवासिना काशीनृसिंहाभिधानेन पण्डितप्रधानेन श्रीमज्जगद्गुर्वाज्ञया प्रणीता **कल्यब्धियानमीमांसा** श्रीमदप्पयदीक्षितान्वयसंजातेन विविधशास्त्रपारदृश्वना कविना शृङ्गेरीपुरस्थितिमता श्रीवैद्यनाथशास्त्रिणा विरचितं **श्रीमच्छङ्करगुणरत्नमालिकास्तोत्रं गणेशस्तोत्रं** चास्मत्करतलमापातितम् । तच्च सानन्दं सभक्त्युन्मेषं साविनयं च शिरसा स्वीक्रियते । एवं पण्डितगोपीनाथपुरोहितप्रेषितं तत्प्रणीतव्याख्यादिसमुल्लासितं भर्तृहरेः शतकत्रयं मनभावन प्रेमलीला चेति पुस्तकत्रयमपि सादरं सानन्दं चाङ्गीक्रियते । नागपुरनिवासिना घुले श्रीकृष्णशास्त्रिणा प्रेषिता च **पतितोद्धारमीमांसा** सानन्दं सोत्साहं चोररीक्रियते । एतेषु च पुस्तकप्रेषयितृषु चिरकृतज्ञोऽहमस्मीति शिवम् ।

# समालोचना ।



**श्रीभर्तृहरिप्रणीतं शतकत्रयम्**—पुस्तकमिदं जयपुरदरबारवकीलपण्डितश्रीगोपीनाथपुरोहित एम्. ए. इत्यनेन महाशयेन प्रकाशितं समालोचनार्थमस्मत्करतलमापातितं च । सविस्तरं चैतत्संख्यान्तरे समालो-

चयिष्यते । सामान्यतस्त्वेतदस्यस्वरूपं यथा—संस्कृतं मूलं तस्याधस्ताद्धिं-दीभाषानुवादस्तस्याधश्चेङ्ग्रेजीभाषानुवादस्तस्याप्यध एतद्देशीयानां विदेशीयानां च कवीनां तादृशा उक्तयः। प्रथमं सविस्तरं विविधपण्डितसंमतं श्रीभर्तृहरेर्जीवनवृत्तमन्ते चेङ्ग्रेजीभाषामय्यर्थबोधिनी टिप्पनी श्लोकानां वर्णानुक्रमश्चेति। एतच्च साम्प्रतं पी.ई.परीक्षार्थिनां मुम्बयीविभागीयानामत्यन्तमुपयुक्तमवश्यसंग्राह्यं च। न खल्वस्मात्परो विशेषोऽस्मिन्पुस्तके कर्तुं शक्यो नापि वा केन कृतो नापि क्रियते मूल्यं त्वस्य रूपकद्वयं प्राप्तिस्थानं च पण्डितगोपीनाथपुरोहितजयपुरदरबारवकीलजयपुरहाउस् आबू ( Abu)इति। तदवश्यं संग्राह्यमिदं रसिकैरिति सामान्यतोऽभिधाय साम्प्रतं विरमामः ।

**मोदमंजूषा**— चतुर्धुरीणप्रहराजोपाधिकश्रीकृष्णचन्द्रदासमहापात्रशर्मणा वङ्गीयविदुषा विरचिता प्रमोदातिशयदायिनी नूनमियं मोदमञ्जूषा। अस्यां च सरसमधुरैः पद्यैः संग्रथितानि वाणीपञ्चकं बालिश्यभञ्जनं वैराग्यपद्या द्वन्द्वाष्टकं श्रीगिरिजास्तोत्रं गुरुः शव उत्कूलां स्वर्णरेखां प्रतिवचनमित्यादीनि खण्डकाव्यान्युपनिबद्धानि । अत्र च द्वित्राणि प्रकाशितान्येव संस्कृतचन्द्रिकायाम् । वैराग्यपद्यां वा शवं वाऽवलोकमानो रसिकस्तत्तद्रसमयेन चेतसा कमपि महान्तमनुभवत्यानन्दमिति प्रत्यक्षमेव संस्कृतचन्द्रिकाया ग्राहकवर्गस्य । प्रमोदयति किलानवरतं नश्चेतः कृतिरियं श्रीकृष्णचन्द्रदेवस्य । इदं चात्र विशेषतः प्रमोदास्पदं यदयं महापात्रः श्रीकृष्णदेवो धनिकप्रवरोऽपि विद्वदग्रेसरः । अनल्पमेव हि व्यञ्जयन्ति सुकृतं पुरुषस्यैकस्मिन्नेवाधिकरणे समकालमेव विहितास्पदानि प्रभुत्वं च विवेकित्वं च विद्वत्त्वं च कवित्वं चेत्यादीनि । एतत्कृतश्चायं प्रबन्धो रसास्वादाभिलाषुकैरवश्यं संग्राह्यः । यत्तु विषदमौक्तिकावल्या इवाभ्यन्तरे सूत्रमत्राति विरलं मृगेशकटिक इत्यादि ग्राम्यं कविः प्रायुङ्क्त न किल तद्रससारविदां वैमनस्यं जनयेत् । एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः । अमूलस्याप्येतस्यानकचतुष्टयं मूल्यम् ।

**सामवेदीयनित्यकर्मदर्पणम्**— रत्नललाम ( रतलाम ) वर्तिश्रीमालवैदिकपाठशालाध्यक्षेण पण्डितश्रीमदनराजश्रीमालिना संगृहीतं

प्रकाशितं चैतत् । नाम्नैवास्य शक्यते ज्ञातुं किमत्र प्रतिपाद्यमिति । अत्र किल ब्राह्मे मुहूर्ते चोत्थाय संस्मरेदिष्टदेवतामित्यादीनि समुचितानि तानि तानि प्रमाणानि प्राणायामादीनां च संक्षेपतो लक्षणान्यभिधाय प्रातःस्मरणमारभ्य सायंसंध्यान्तं सर्वेऽपि विषयः सप्रयोगा उपन्यस्ताः । सामवेदीयानां किल बटूनामयमत्यन्तमुपयुक्तः प्रबन्धः । मूल्यमस्य केवलं सार्धमानकद्वयम् । पण्डितमदनराजश्रीमाली, श्रीमालवैदिकपाठशाला—रतलाम—इत्यतः स्थानाल्लभ्यम् ।

**अनार्यसमाजरहस्यम्**—मिरतनगरनिवासिश्रीभारतधर्ममहामण्डलपुस्तकालयाध्यक्षपण्डितश्रीईश्वरीप्रसादशर्ममहाशयेन प्रकाशितमेतत् । एतच्च प्रकाशयताऽनेन महाभागेन महीयः किलोपकृतं सनातनधर्मानुयायिनां भारतीयानाम् । विदितप्राय एव सर्वेषां दयानन्दः स्वामी यः किल प्राचीनधर्मोध्वंसनायैव प्रवृत्तो वैदिकमार्गप्रवर्तकमात्मानं प्रख्यापयामास । यस्यैव च महानुभावस्य दवदहनसोदर्येण निकाममहीयसा पाण्डित्यप्रभावेण समाक्रान्ता नियन्त्रिता इव श्रुतयस्तत्क्षणमेव अग्निमीळे पुरोहितमित्यादिभ्यः सूक्तेभ्यः स्वप्नेप्यात्मनानवलोकितां बाष्पशकटीमुद्वमन्ति स्म । तस्यैतस्य प्राचीनसनातनधर्मश्रद्धालूनां नयनेषु धूलिजालमुत्क्षिपतो धूर्तप्रवरस्य धौर्त्यं प्रकाशयितुमेव विनिर्मितः प्रबन्धोऽयम् । अत्र च दयानन्दस्य तत्पथानुयायिनां चार्यसमाजपथप्रवृत्तानां मनस्येकं वचस्येकं कृतावन्यदवेक्ष्यत इत्येवंविध आचारः सुविशदतां नीतः । प्रायश्च तेषां रहस्यानि प्रकाश्य प्रमाणोपन्यासपूर्वकं खण्डितानि । हिन्दीभाषामयोऽप्ययं प्रबन्धो मादृशैस्तद्भाषाऽपरिचितैरपि पठ्यमानः सम्यगवबोद्धुं शक्यते । पठितुमारब्धश्चासमाप्ति न शक्यते परित्यक्तुम् । पठितोऽपि पुनः पठनेच्छां जनयति । एतेन च प्रबन्धेनावबुद्धार्यसमाजरहस्याः श्रद्धालवे मतान्तरप्रबन्धैः किञ्चित्कलुषीकृतान्तरा अपि परित्यज्य दुर्मताभिमानं सनातनधर्म एव प्रवर्तेरन् । प्रबन्धोऽयं मिरतनगर उपर्युक्तस्थानाल्लभ्यः । मूल्यं तु द्व्यानकमात्रम् । शिलाक्षरैः प्रकाशितमसुद्रितमिममचिरादेव प्रकाशक आयसाक्षरैः प्रकाशयेदिति किल प्रत्याशास्महे ॥

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

॥ श्रीगणेशाय नमः ॥

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

॥ मासावतरणिका ॥

रुन्धानाः किल कान्तिमच्छशभृतो भाद्रे[1] घना मण्डलं
तत्संसर्गवशाज्जहत्यपि निजां नैसर्गिकीं कृष्णताम् ।
कोपाटोपवशीकृतेन मनसा द्वेषोऽपि सद्भिः समं
नूनं निर्मलयेदनिर्मलमपि द्वेष्टुः क्षणादन्तरम् ॥ ५ ॥

॥ उद्भटश्लोकाः ॥

तत्किं कर्म यदस्तशर्म[2] रसना किं साऽपि याऽरुन्तुदा
किं तत्प्रेम यदस्थिरं स च पुमान्किं नाम यो निर्गुणः ।
सा किं श्रीरुपभोगमर्हति न या सेव्यः स किं योन्तरं
नो जानाति तदस्ति किं विलसितं वेश्यासु यत्कृत्रिमम् ॥
मुक्ताहारनिषेविता अपि न तद्भूयै दिशन्त्यन्तरं
बद्धे गाढविमर्दने न च जहत्यन्योन्यसंपीडनम् ।
उष्णे शीतलतामुपेत्य शिशिरे प्राप्ते भजन्त्युष्णतां
कामान्तःपुरचेटिकाकुचतटीकाठिन्यवन्तः खलाः ॥ *

---

१ भाद्रो भाद्रपदः । २ अस्तं नष्टं शर्म सुखं येन तत् । * मुक्तेति । कामस्य मदनस्यान्तःपुरसंबन्धिनीनां चेटिकानां कुचतटीनां विशालस्तनानामिव काठिन्यमस्त्येषां ते खला दुर्जनाः कर्तृभूताः । मुक्तानां मौक्तिकानां हारैः निषेविताः सेविना

( क्रमशः )

## श्रीमदप्पयदीक्षिताः ।

उक्तपूर्वमस्माभिश्चतुर्थसंख्यायां श्रीदीक्षितप्रणीतस्य सिद्धान्तलेशसंग्रहस्य सारं पाठकेभ्य उपहरिष्याम इति । तदिदानीमारभ्यते ।

सिद्धान्तलेशसंग्रहाख्यः प्रबन्धोयं श्रीमदप्पयदीक्षितैः प्रणीतोऽद्वैतप्रतिपादकः । अस्य चत्वारः परिच्छेदाः । प्रतिपरिच्छेदं च नानाविधानि प्रतिपाद्यानि । नानाविधैर्दार्शनिकैरद्वैतमतावलम्बिभिः कृतानां तत्तत्प्रातिपाद्यसिद्धान्तानामस्त्यत्रोपन्यासः । दुर्बोधस्याप्यद्वैतदर्शनस्य प्रतिपादकः प्रबन्धोऽयं नातिदुर्बोधः । प्रत्युत प्रायशः सुबोध एव तत्त्वमात्रजिज्ञासूनाम् । यदि तु कश्चिन्नैयायिकप्रवरः प्रबन्धमेवंविधमकरिष्यत्तदा नूनमनत्यभ्यस्तन्यायशास्त्राणां विदुषामद्वैततत्त्वजिज्ञासूनां वाऽवच्छिन्नावच्छेदकादिशब्दकान्तारदुष्प्रवेशान्यासेतुहिमाचलविस्ताराणि वाक्यप्रकाण्डजालान्युपन्यस्य व्यामोहयिष्यद्धारणावतीमपि बुद्धिम् । अत्र तु नास्त्येवांशतोऽपि न्यायशास्त्रप्रवेश इति तु न ब्रूमः किंत्वस्त्येव तत्र तत्र तस्य संबन्धः। न पुनस्तेनास्य काठिन्यमंशतोऽप्युपयातम् । किंत्वद्वैतस्य नाम प्रतिपाद्यस्यैव निसर्गदुर्बोधतया तत्प्रतिपादकवाक्यान्यप्यत्रत्यानि नात्यप्रगल्भबुद्धिभिरवबोद्धुं शक्यानीति नैतदाश्चर्यम् ।

---

( पूर्वतोनुवृत्तम् )

अपि विमलमौक्तिकहारयुक्ता अपीत्यर्थः । तेषां मौक्तिकानां वृत्त्यै वर्तनाय सर्वदानिर्मलतयावस्थानरूपाय अन्तरं अवकाशं आत्मनो मनसीति शेषः न दिशन्ति न ददति । शुद्धानां मौक्तिकानां सततं संसर्गेपि तस्य नैर्मल्यगुणं नानुशीलयन्तीत्यर्थः । खलेषु सत्संसर्गो निष्फल इति भावः । गाढविमर्दनेऽत्यन्तमर्दने बद्धे कृतेऽपि अन्योन्यसंपीडनं परस्परपीडां न जहति न त्यजन्ति । दण्डिता अपि परपीडकत्वरूपं स्वभावं न मुञ्चन्तीत्यर्थः । उष्णे स्वापेक्षया तेजस्विनि पुरुषे शीतलतां दीनतामिति यावत् । उपेत्य प्राप्य शिशिरे स्वापेक्षया मन्दतेजसि प्राप्ते सति उष्णतां तेजस्वितां विक्रमामिति यावद्व्रजन्ति । कुचतटीपक्षे तु यथायथं योज्यम् । तत्र च········ तरुणीकुचौ । शीतकाले भवेदुष्णमुष्णकाले च शीतलम् । इत्यनुसंधेयम् ।

अस्य च श्रीमदच्युतकृष्णानन्दतीर्थविरचिता व्याख्याऽपि काचिद्स्तीति श्रूयते । तद्गतानि च कानिचिद्वचनानि काश्यां मुद्रितस्य मूलमात्रस्य सिद्धान्तलेशसंग्रहस्य पृष्ठेष्वधस्ताद्दृश्यन्ते तस्य भूमिकायामप्येवमभिधीयत एव ।

अस्य च प्रबन्धस्य प्रथमपरिच्छेद ऊनविंशतिः प्रतिपाद्यानि । तत्र तावत्प्रथममात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य इत्यादिनाऽधीतसाङ्गवेदस्य वेदान्तैरापाततोऽवगते ब्रह्मणि समुदितजिज्ञासस्य ब्रह्मज्ञानाय वेदान्तश्रवणे प्रतीयमानो विधिः किंविध इति चिन्त्यत इत्यारभ्य विधिभेदान्प्रतिपाद्य तत्र कैर्विद्वद्भिः को वा भेदोऽत्रत्यः स्वीकृत इति प्रतिपादितम् । तत्र विधिभेदानां ज्ञानमत्युपयुक्तमिति तदत्रोपन्स्यते ।

त्रयः किल विधेर्भेदा अपूर्वविधिर्नियमविधिः परिसंख्याविधिश्चेति । *

१ तत्र कालत्रयेऽपि कथमप्यप्राप्तस्य प्राप्तिफलको विधिः प्रथमः । यथा व्रीहीन्प्रोक्षतीति । नात्र व्रीहीणां प्रोक्षणस्य संस्कारकर्मणो विधायकशब्दं विना प्रमाणान्तरेण कथमपि प्राप्तिरस्ति ( अतोयमपूर्वविधिः )।

२ पक्षेप्राप्तस्याप्राप्तांशपरिपूरणो विधिर्द्वितीयः । यथा व्रीहीनवहन्तीति । अत्र विध्यभावेऽपि पुरोडाशद्रव्याणां तण्डुलनिष्पादनस्यावश्यकत्वादवहननस्य प्राप्तिर्भविष्यतीति नायमवहननप्राप्त्यर्थो विधिः किं तु यथाऽवहननस्य यथा साहजिकी प्राप्तिरेवं लोकेषु कारणविशेषानवगमान्नखविदलनादिनाऽपि तण्डुलनिष्पादनस्य प्राप्तिर्भविष्यतीति पक्षेऽवहननाप्राप्तांशसभवात्तत्परिपूरणफलोऽयं व्रीहीनवहन्तीति विधिर्नियमविधिरेव ।

३ द्वयोः शेषिणोरेकस्य शेषस्य नित्यप्राप्तौ शेष्यन्तरनिवृत्तिफलक एकस्मिञ्छेषिणि द्वयोः शेषयोर्नित्यप्राप्तौ शेषान्तरनिवृत्तिफलको वा

* एते च भेदाः संक्षेपतो वेदान्तरहस्ये सम्यक्प्रतिपादिताः । वेदान्तरहस्य तच्चिरादेव चन्द्रिकायां प्रकाशयितुमिच्छामः । अयं च विध्यादिबोधकः श्लोकस्तत्रोपन्यस्तः—विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्या विधीयत इति ।

विधिस्तृतीयः। अत्र शेष उपकार्यकः शेषी तूपकारक इति बोध्यम्। यथाऽग्निचयने इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इत्याद्यस्योदाहरणम्। अग्निचयनेऽश्वरशनाग्रहणं गर्दभरशनाग्रहणं चेतिद्वयमप्यनुष्ठेयम्। तत्राश्वरशनाग्रहण इमामगृभ्णन्निितिमन्त्रो रशनाग्रहणप्रकाशनस्वरूपाल्लिङ्गादेव प्रवर्तत इति नाश्वरशनाग्रहणस्य प्राप्त्यर्थो नाप्यप्राप्तांशपरिपूरणार्थोऽयं विधिः। किं तु अग्निचयनेऽश्वरशनाग्रहणस्येव गर्दभरशनाग्रहणस्याप्यनुष्ठेयत्वेन रशनाग्रहणप्रकाशनरूपलिङ्गाविशेषान्मन्त्रोऽयं गर्दभरशनाग्रहणेऽपि प्राप्नुयादिति तन्निवृत्त्यर्थोयं विधिः। यथा वा चातुर्मास्यान्तर्गत इष्टिविशेष गृहमेधीये आज्यभागौ यजतीति। अत्र गृहमेधीयस्य दर्शपूर्णमासप्रकृतित्वादतिदेशादेवाज्यभागौ नित्यं प्राप्नुत इति न तत्र विधिस्तत्प्राप्त्यर्थस्तन्नियमार्थो वा किंत्वतिदेशात्प्रयाजादिकमपि प्राप्नुयादिति तन्निवृत्त्यर्थ इति॥

अत्रेयं स्वत एव शङ्का समुदेति यथा—को वा नियमपरिसंख्ययोः फले विशेषः। नियमविधौ हि यथा व्रीहीनवहन्तीति नखविदलनादेर्निवृत्तिः फलमेवं परिसंख्यायामपि गर्दभरशनाग्रहणनिवृत्तिरित्युभयोः समानमेव फलमिति। अत्रोच्यते अस्त्यनयोर्भेदः। नियमविधौ हि फलमप्राप्तांशपरिपूरणमेव परिसंख्यायां त्वितरनिवृत्तिरेव संनिकृष्टत्वादिति।

एवं विधेर्विधा उक्ता किंविधोयं वेदान्तश्रवणविधिरिति विस्तरशो विचारितम्। अत्र बहूनां विदुषां नानाविधानि मतान्युपन्यस्तानि। तत्र केचिदिमं श्रवणविधिमपूर्वविधिमपरे नियमविधिमितरे तु परिसंख्याविधिं मन्यन्ते।

अथ ब्रह्मणो लक्षणमुक्तं तत्र च श्रुतिः। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्तीति। अत्र च मतद्वयं प्रादर्शि।

तृतीये च प्रतिपाद्ये ब्रह्मणः कीदृशं जगदुपादानत्वमिति विचारितम्। तच्च विवर्तमानत्वरूपमिति सिद्धान्तं स्थिरीकृत्य विवर्तपरिणामलक्षणान्य-

भ्यधीयन्त। तत्रैकं यथा—वस्तुनस्तत्समसत्ताकोऽन्यथाभावः परिणामस्तदसमसत्ताको विवर्त इति।

चतुर्थे किमु शुद्धं ब्रह्म जगदुपादानमाहोस्विदीश्वररूपमिति विचारितम्। पञ्चमे मायाया जगदुपादानत्वमित्याशङ्का परास्ता। षष्ठे क ईश्वरः कश्च जीव इति निर्णीतम्। अत्र च तत्त्वविवेकमतमुपन्यस्तं यथा—रजस्तमोनाभिभूतशुद्धसत्त्वप्रधाना माया तदभिभूतमलिनसत्त्वाऽविद्येति मायाविद्याभेदः। मायाप्रतिबिम्ब ईश्वरोऽविद्याप्रतिबिम्बो जीव इति। अत्र च भूयान्विस्तरः। सप्तमे जीवस्यैकत्वानेकत्वविचारः। अष्टमे ब्रह्मणः कर्तृत्वस्य स्वरूपं प्रतिपादितम्। नवमे ब्रह्मणः सर्वज्ञत्वं निरूप्यते। दशमे यथेश्वरो वृत्तिमनपेक्ष्यैव घटादीनवभासयति कुतो वा नैवं जीव इति विचार्यते। तत्र च पक्षत्रयमुपन्यस्य तस्यैवैकादशद्वादशत्रयोदशेषु विचारः प्रपञ्च्यते। चतुर्दशे सविस्तरं साक्षिणः स्वरूपं न्यरूपि। पञ्चदशे यथा ज्ञानेन चैतन्यमात्रमाव्रियत एवं साक्षिणोऽप्यावरणावश्यंभावात्कथमावृतेन तेनाऽविद्याहंकारादिभानमिति व्यचारि। षोडशे साक्षिणः साक्ष्यानन्दस्य चानावृतत्वं प्रत्यपादि। सप्तदशे साक्ष्यहंकारानुसन्धानमुपापादि। अष्टादशेऽध्यासः सविस्तरमभ्यधायि। ऊनविंशे साक्षिप्रसादादेव सर्वेषां पदार्थानां प्रकाशोपपत्तेः किंवृत्तेः प्रयोजनमित्याशङ्क्य वृत्तिनिर्गमस्यावश्यकत्वमवाचि। एवमसौ समाप्तः परिच्छेदः। द्वितीयस्तु परिच्छेदो वेदान्तानामद्वैतब्रह्मणि समन्वयं प्रतिपादयितुमेवावतारित इत्यवबोद्धव्यम्। तृतीये तु परिच्छेदे प्रायशो मोक्षसाधनानि कर्मणामुपयोगो विद्याधिकारिणः संन्यासाश्रमस्यावश्यकत्वं निर्गुणोपासनं ब्रह्मसाक्षात्कारश्चेत्यादयो विषयाः। चतुर्थपरिच्छेदे त्वविद्या तन्निवृत्तिस्वरूपं ब्रह्मानन्दस्य प्राप्यत्वं मुक्तस्वरूपं चेत्येतावन्त एव विषयाः। एवमसौ चतुर्भिः परिच्छेदैरवसितो ग्रन्थः। विचारितं किल प्रथममस्माभिरस्य सारोऽत्र रसिकेभ्य उपहर्तव्य

---

१ वृत्तिर्नामान्तःकरणस्य परिणामो येन जीवो घटादीन्प्रकाशयति।

इति । किन्तु तथाविधस्य सारमात्रस्यास्य नात्युपयुक्तत्वात्समग्रस्य सिद्धान्तलेशसंग्रहस्यावलोकनमन्तरा जिज्ञासूनां तर्षस्य प्रशान्तेरसंभवान्न तथाऽनुष्ठितमस्माभिः । अवश्यं चायं प्रबन्धः संग्राह्योऽद्भुतमतासिद्धान्तानवबोद्धुमिच्छद्भिरिति किल ब्रूमः ।

अनेन च सिद्धान्तलेशसंग्रहेण श्रीमदप्पयदीक्षितानामध्यापकादर्शनं भवति तच्च संख्यान्तरे प्रदर्शयितुमिच्छामः । सांप्रतं च श्रीशृङ्गेरिमठनिवासिभिः कैश्चनास्मत्सुहृत्प्रवरैः श्रीमदप्पयदीक्षितवंश्यैः श्रीमदप्पयदीक्षितानां संक्षिप्तचारित्रं तत्कृतग्रन्थानां नामानि च प्रेरितानि । तदवलोकनेन क्वचिदस्माभिः पूर्वं प्रतिपादिते श्रीदीक्षितचरणवृत्तान्ते परिवृत्तिरावश्यिक्केत्यवधारितमस्माभिः । अतो यानि प्रमाणान्युपजीव्य चरितमिदमुल्लिखितमस्माभिस्तेषां च प्रमाणानां कियत्प्रामाण्यमित्यपि संख्यान्तरे विचारयितुमिच्छामः । कीदृशी च प्रथमं दीक्षितचरणानां वृत्तिः कीदृशी च कालान्तरे संवृत्तेत्यपि तत्रैव प्रतिपादयिष्यामः । ( क्रमशः । )

---

## मूर्तिपूजनम् ।

सहृदयाः ! विषयः खल्वयमतिमात्रं जटिलः । नव्याश्चात्र किल केऽप्यनाघ्रातश्रुतिलेशाः स्पेन्सरप्रभृतीनां निसर्गनास्तिकानां विचारपरिप्लुतानि निःसन्देहमभ्यस्य पुस्तकानि वितण्डावलम्बिनोऽत्र भूयोभूयः प्रत्यवतिष्ठन्ते । तेषां च कुतर्कमयतामिवोपगतानां नास्ति किल वचसः सीमा नाम । तन्मतप्रत्याख्यानाय च नालमयमल्पीयान्प्रबन्ध इति परमेश्वरसिद्धिविषये तन्मतप्रत्याख्यानं यथावसरं करिष्याम इति प्रतिज्ञाय सांप्रतं केवलं मूर्तिपूजनमेव प्रतिपादयितुं प्रवृत्ताः स्मः ।

केषांचित्तु प्रथममीश्वरसद्भावसाधनं विना न युज्यते मूर्तिपूजाविचारो न हि विना भित्तिं चित्रमुत्थापयितुं शक्यमिति वदतां सन्तोषायातिसंक्षिप्तं प्राचीनस्य पुष्पदन्तमुनेर्मतमुपन्यस्याभीष्टं विषयमुपपादयि-

ध्यामः । तथा हि यद्यत्सावयवं तत्तज्जन्यं यथा घटादयः । जगदप्येतत्सावयवमतस्तज्जन्यम् । संसारविधिरयं तादृशैरवयववतां प्राणिनामधिष्ठातृपुरुषसाहितः । अधिष्ठाता चास्येश्वर एव तद्भिन्नस्यानुपयोगित्वादित्येतदभिहितं पुष्पदन्तेन यथा—

**अजन्मानो लोकाः किमवयववन्तोऽपि जगता—**
**मधिष्ठातारं किं भवविधिरनादृत्य भवति ।**
**अनीशो वा कुर्याद्भुवनजनने कः परिकरं**
**यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥ इति ॥**

निरर्गलप्रलापिनः खल्वेते नव्यशिक्षिता अश्रद्धेयतमा एवेति नास्ति तेभ्य आस्तिकानां भीतिलेशोऽपि । किं तु चार्वाकप्रतिमूर्तिभिरमीभिस्तालुचूडैर्नव्यशिक्षितव्याधैः प्रसारितेऽस्मिन्पतनभयङ्करेऽतिमात्रविस्तृते पाषण्डमतप्रलापशङ्खध्वानिमये जाले परिपतनेनानुभूय नानाविधं परिभ्रमणपर्याकुलत्वमुपगतायाः संदेहदोलान्दोलिताया आस्तिकमतेर्निर्मलीकरणायैव मूर्तिपूजनं विस्तरशः प्रतिपादयितुमिच्छामः ।

निसर्ग एवायं नव्यशिक्षितधुर्याणां यदेते समुत्थाप्य महान्तं वागाडम्बरं जगद्विलक्षणमात्मनः पाण्डित्यमुद्भावयितुं प्रयतन्ते । तत्र च प्रवृत्ता एते विलक्षणमतयः श्रुतिलेशमप्यनाघ्राय दूरीकृत्य च स्मृतिसङ्घमविगणय्य च पुराणवचनानि धर्मशास्त्रपरिचयशून्या अप्यात्मनोऽशेषश्रुतिवादित्वमखिलस्मृतिपारङ्गमत्वं निःशेषपुराणपारदृश्वतां च निःसंदेहमेव प्रतिभासयन्ति । प्रलपन्ति च निःशङ्कमात्मनः संमतमेवानुमतं वेदस्येति । अहो साहसमेतेषाम् । अथवा युज्यत एतत्तथा चाहुः । निर्विषेणापि सर्पेण कर्तव्या महती फटा । यदि तत्र विषं नास्ति फटाटोपो भयङ्कर इति । अनेन चैषामतिक्रान्तमर्यादेन वचनाडम्बरेण पर्याकुलीभवन्ति केषांचिदनवलोकितवेदानामपि वेदैकप्रमाणानामास्तिकानां चेतांसि । एते च तथाविधमात्मनो व्यवसायमारभमाणा धर्मकञ्चुकं प्रविश्यात्मन एकान्तसंमतमपि

चार्वाकमतमसंमतमिवावभासयन्ति । प्रकाशयन्ति चात्मनः सारमात्रग्राहित्वम् । प्रख्यापयन्ति च धार्मिकप्रवरत्वम् । आविष्कुर्वन्ति च श्रुतिमात्रप्रमाणताम् । एवमेतेषां वचनजालेन सविषेणेव मधुनो निःस्यन्देन साहजिक एवादूरदर्शिनां केषांचिदज्ञप्रायाणामलसमतीनां व्यामोहः । एतेषां च नव्यशिक्षितमहाशयानां पारमार्थिकं स्वरूपमवबोद्धुकामैः सकृदपि पठ्यतां प्रबन्धोऽयं ततश्च श्रूयन्तां नानाविधान्यपि सुधारकमानिनां वचनानि।

महाभागाः ! संचार्यतां सकृदपि तत्र तत्र श्रुतिविभागेषु नयनद्वन्द्वं विलोक्यन्तां स्मृतयः समीक्ष्यन्तां पुराणानि विभाव्यतां चामीषामर्थः । नूनं यदि विधूय चेतस एकतरपक्षपातित्वं समीकृतमानसा विचारयेयुर्भवन्तस्तदाऽवश्यं प्रतिपद्येरन्नासीदेव पूर्वं प्रतिमापूजनं लोकेष्वस्ति च तत्प्रकारादिकं धर्मसंहितासु विद्यते च मूर्तिवर्णनमपि वेदेष्विति । वेदादिषु च यथा प्रतिपादिता मूर्तयो देवानां तथोपरिष्टात्स्फुटीकरिष्यामः ।

प्रथमं तावद्विचार्यते को वा न मूर्तिं पूजयतीति । तत्र तावन्मूर्तिर्नाम प्रस्तरकाष्ठमृत्तिकादिभिर्निर्मिताऽभ्यर्हणीयस्य प्रतिमा वा कुड्यादिष्वालिखितोऽपि वा पूज्यस्याकारः । पूजा च नाम संमाननमेव । सा चास्मदादिभिः पुष्पादिभिरुपचारैरिव यद्यन्यैर्मनसाऽपि संमन्येत्तदा ते मूर्तिपूजका इत्येव समञ्जसः स्वीकुर्यात् । अत एव ब्रूमो भवतु वाऽऽस्तिको वर्ततां वा नास्तिकः सर्वोऽपि किल मूर्तीः पूजयति । दृश्यन्ते हि सर्वेषामपि विहारस्थानेषु तेषां तेषां महाशयानां पितृगुरुप्रभृतीनां प्रतिमूर्तय उपन्यस्ताः । तत्र यदि कश्चिद्दुरात्मा सहसोपसृत्य सुमृदुतमेन समुद्भासितपद्मरागकान्तिना सकृदपि चरणास्पृष्टेन नव्योपात्कुसुमजालेन कल्पयेत्पूजां तदा किमु प्रस्तरसदृशत्वमेवालम्बेत चेतः सुधारकधौरेयस्याहोस्विदङ्गीकृतक्षोभं सपदि नयनद्वयमाघूर्णयत्संचालयच्च द्वित्राङ्गुलपरिमितां तालुनि समुल्लसमुल्लसन्तीं चूडां विडम्बयेत्कुपितकपिचेष्टितानि वदनेन । यदि च कोऽपि समुन्नतंमन्यानां नव्यसुशिक्षितमहाभागानां समाभिमतासु प्रतिमासु कदाचिदेकमात्रमपि पातयेदात्मनो वदनारविन्दान्मकरन्दा-

यमानं मुक्ताफलसमप्रभं सविकारं लालाजलबिन्दुं तदा किमु शान्तिरसानन्दमेवासेवेत चेतः सुधारकधौरेयस्याहो प्रत्यर्पयेदसौ निष्ठीविते तद्व्यापारोचितं पुरस्कारम् । नूनमत्र साधु विचार्यमाणे प्रत्यक्षीकुर्युर्विचक्षणा यन्नास्तिकमानिनो मूर्तिपूजनं तिरस्कुर्वाणा मूर्तिषु पूज्यस्यांशतोऽपि सद्भावस्यासंभवमेव प्रलपन्तोऽपि सुधारकादयो न स्तोकमपि सहन्ते स्वसंमतानां गुर्वादीनां प्रतिमानां क्रियमाणमवमानमिति । यद्येवं तदा तैरप्यवश्यमभ्युपेतव्यं यदस्ति किमपि तत्त्वं मूर्तिषु येन ताः संमानार्हतामुपयान्ति । अन्यथा क्व भूयिष्ठेभ्यो दिवसेभ्यः प्रागेव वह्निसाद्भूता भूगर्तसुखशयनसुखमनुभवन्तो वा गुर्वादयः क्वापि वा जीर्णपत्रादावालिखिता तन्मूर्तिः । न किल सा सचेतना नापि वा तस्यामाविशति भस्मसाद्भूतोऽस्याभीष्टो जनो नापि वा स तन्मयत्वमुपयाति । तत्क इव संमानश्चित्र आलिखितानां तेषाम् । यद्यपि कश्चिन्नराधमो नरात्मा वा पशुहतक आत्मनः समक्षमवहेलितायामपि जनकादेः प्रतिमायां न केवलं जोषमासीत प्रत्युत स्वयमात्मनो धनं व्ययीकृत्य निर्माय च तथाविधानां पूज्यतमानां प्रतिमाः स्वयमेव ता उद्धूलीयात्पूजयेच्च जीर्णाभिर्वृद्धोपीयोपानद्भिर्मन्येत च कृतार्थतममात्मानं * पापस्तथापि न स आत्मनो मूर्तेरवमाननां सहेतेति किल प्रतिभाति । तिष्ठे द्वा तथाकृतेऽपि कदाचित्सुधारकत्वभङ्गभयात्तूष्णीमेव । किं तु यामसौ मनोरमां भणाति यामेव चात्मनः परान्प्राणानभिधत्ते या चास्य परममास्पदं प्रेम्णो यस्या एव करतलचुम्बनेन धन्यमाकलयत्यात्मानं तस्याश्चित्रगताया एवेषदुत्फुल्लपाटलकुसुममनोहरं कपोलतलं संस्पृशेदात्मनो वदनेन कश्चिन्मदनसमानाकारोऽपि युवा तदा तु तत्कालमेव गुञ्जाफलसमानतामाप्नुयान्नयनमेतस्य । तत्कथ्यतां किमेतदिति । किमु जीवन्नपि सोऽयं सुधारकमानी वा तस्य प्राणेश्वरी वा तां प्रतिमां प्रविशति येन प्रतिमाऽव-

---

* बहुभिः किलैतत्प्रत्यक्षीकृतं कोल्हापुरनगरे । अहो भाग्यमस्माकं नगरस्य यदस्मिन्क्षेत्रभूतेऽप्येवंविधा नरपशवः समुद्भासन्ते !

मानोऽन्यात्मन एवेति मन्तुं युज्येत । किं वा विधात्राऽस्यापर एव निर्मित आत्मा यो निश्चेतनेष्वपि पदार्थेषु प्रवेष्टुं प्रभवेत् ।

वदन्तु च दयानन्दीयाः किमेतदिति । एतत्पथानुयायिनो हि न केवलं दयानन्दप्रतिमां दृष्ट्वाऽपि तु नामाप्यस्याकर्ण्य मूर्धानमवनमयन्ति । प्रशान्तात्मानोऽपि न सहन्ते दयानन्दप्रतिमायाश्चरणावताडनव्यापारम् । यदि च नास्तीश्वरस्य प्रतिमायाश्च कोऽपि संबन्ध इत्यस्ति ख्रिस्तीयानामभिमानस्तदा किमिति महाराज्ञ्याः प्रतिमायाः पुरतः संमाननीयानां वा परेषां मूर्तीनां पुरतः समवतार्यन्ते संमानसूचनाय वेतसकुशूलोपमानि शिरोग्रावरणानि । वदन्तु च महम्मदीया यदि नेष्यते प्रतिमायाः पूजनं तदा यत्र कुत्रापि दृष्टेषु महम्मदचैत्येषु किमिति मुच्यन्ते कच्छाः किमिति च स्पृश्यते जानुभ्यां भूमिः किमिति च तत्कालमेव कर्णयोः प्रवेश्याङ्गुलीर्या अल्ला इति तारतरेण स्वरेण दन्ध्वन्यते । यदि च न पावयति मूर्तिस्तदुपासकानामात्मानं तदा किमिति महीयानयं परिश्रमो यूरोपियानां यदेतैर्मृतानां शवपूरणगर्तेषु येशोर्वधस्तम्भा निखायन्ते । किमिति च रोमन्क्याथोलिकैरभिवाद्यन्ते प्रतिमा येशोः । किमिति च ब्रह्मसमाजीयैर्न सह्यते गरुप्रतिमानामपमानः । किमिति चाहूतायां सभायामध्यक्षीक्रियन्ते महाजनप्रतिमाः सभ्यैः । किमिति च प्रार्थनासमाजीया आत्मनः संमाननीयानां प्रतिमानामवहेलनां न सहन्ते । नूनमत्र साधु विचार्यमाणे सर्वेऽपि भङ्ग्यन्तरेण सचेतनैः सह प्रतिमानां कमपि संबन्धमुररीकुर्वन्ति येनैव वशीकृतानां तदवमाननाद्यसहिष्णुत्वमेतेषाम् ।

सहृदयाः न किल पूजनं नाम गन्धाक्षतादिसमर्पणमेवापि तु संभावनाऽपि पूजैव । स हि प्रायः सुरप्रतिमानां संभावनायाः प्रकारो यत्तत्र गन्धाक्षतादिकं समर्प्यते । नापि मूर्तिर्नाम केवलं मृदादिघटिता देवानां प्रतिमाऽपि त्वालिखितापि मान्यानामपि चेति । अत एव सुधारकधुर्यादी-

नामप्यस्त्ययमाचारो योऽयं मूर्तिपूजनाख्यः समाश्रीयते सभक्त्युन्मेषं धर्मिष्ठैः । किं तु देवप्रतिमानां पूजनं नव्यशिक्षितानां सुधारकमानिनां शिरःशूलमुत्पादयति प्रमाणपरतन्त्रास्त्वास्तिकास्तेनैव महान्तं प्रमोदमनुभवन्तीत्येतावानेव भेदः । तदुच्यतां को वा न स्वीकरोति पूजनं मूर्तीनामिति ॥

( क्रमशः । )

---

## बालिकोद्वाहः ।

( पूर्वतोनुवृत्तः । )

यदपि—

**ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।**
**यद्याधत्ते पुमान्गर्भं कुक्षिस्थः स विपद्यते ॥**
**जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः ।**
**तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥**

वचनमेतदुल्लिख्य बालिकाविवाहो न युक्तिसह इति नव्यशिक्षिताः कथयन्ति तन्न मनोरमम् । यतो नैतत्सौश्रुतं वचनं बाल्यविवाहप्रतिषेधकं धर्मप्रवर्तकं वा । किंत्वत्यन्तबालायां गर्भस्य विविधदोषाशङ्कया गर्भाधाननिषेधकमेवेति । अत्रात्यन्तबालापदेन रजःप्रवृत्तिकालतः किंचिन्न्यूनषोडशपञ्चदशचतुर्दशादि वर्षं लक्ष्यते । किं तु तत्र तत्र वर्षेऽपि धृतगर्भाया बलपुष्टिमान्दीर्घजीवी चोत्पद्यते बालक इति बहुभिर्बहुशो दृश्यते प्रत्यक्षत एवातो व्यभिचारि वचनमेतत् । तथापि स्वीकरोमि तर्कानुरोधादूनषोडशवर्षायां गर्भाधानं दुष्टमिति । मा कारि गर्भाधानं किंत्वष्टवर्षादौ बालिकाया विवाहसंस्कारे कः प्रतिबन्धः । तस्मिन्निष्पन्न एव गर्भ आधीयत इति कुतः प्राप्तम् । हा व्यामोह नव्यशिक्षितानाम् ।

पुनरपि तर्कानुरोधात्स्वीकरोम्यत्यन्तबालायां गर्भाधानं तथापि किमत्र विधेयम्——

तत्रात्मा हि स्वयं किंचित्कर्म किंचित्स्वभावतः ।
करोति किंचिदभ्यासाद्धर्माधर्मोभयात्मकम् ॥
व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति ।
यथा तृणजलौकैवं देही कर्मगतिं गतः ॥

इत्यादि याज्ञवल्क्यभागवतादिस्मृतेर्जीवस्य कर्मार्जकत्वं कर्मानुसारतो गतिश्च प्रतिपद्यते । स्वकर्मफलभोगाय च कश्चिज्जीवो गर्भ एव विपद्यते कश्चिन्मृतो जायते कश्चिज्जातमात्रो म्रियते कश्चिद्दशाहाभ्यन्तरे कश्चिदजातदन्तः कश्चिज्जातदन्त एवंरीत्या पञ्चाशदब्दः शताब्दो वा केवलमदृष्टवशान्म्रियत एव । एवं चेत्केनचिज्जीवेनेत्थमेव कर्म प्रारब्धं येन स कुक्षावेव विपद्यते न वाऽऽजीवं जीवेज्जीवेद्वा दुर्बलेन्द्रियो भवेत् । तेन जीवेन किं विधेयम् । किं तत्सौश्रुतं वचनमास्थाय तत्तद्दोषपरिजिहीर्षयाऽप्राप्तपञ्चविंशतौ पितरि शस्यादिना सह न प्रवेष्टव्यं न वोनषोडशवर्षायां मातरि जन्म ग्रहीतव्यम् । यदि गर्भेण पितरि दोषमालोच्य तावत्कालं तूष्णीमास्थाय प्राप्तपञ्चविंशतौ पितरि शस्यादिना प्रविश्यते गृह्यते च जन्म षोडशवर्षायां मातरि तर्ह्येवं कुक्षिस्थितिविपत्तिप्रभृतिदोषसाधकं प्रारब्धं कर्मात्मनो वैफल्यं प्राप्नुयादृते तत्फलभोगम् ।

अथ यदि स्वार्जितकर्मभिराकृष्यमाणेन जीवेन तत्तत्फलभोगाय प्रकृतिनियन्त्रणादप्राप्तपञ्चविंशतौ पितरि शस्यादिभिः प्रविश्येत जन्येत चोनषोडशवर्षायां मातरि तर्हि सुश्रुतोक्ताः कुक्षिस्थितिमरणादयो दोषाः प्राप्यन्त इत्यतः सुश्रुतवचनेन प्रारब्धकर्मणा चोभाभ्यां समाकृष्यमाणेन जीवेनोनषोडशवर्षायां पूर्णषोडशवर्षायां वा मातरि न स्थितिपदं लभ्येत सुतरां त्रिशङ्कुनेवान्तराल एव चिरं स्थीयेत ।

अत एव सुश्रुतवचनं नैवाश्रद्धेयं किं तु वरं विषं भुङ्क्ष्व तथाप्यकार्यं मा चरेत्यादिवज्जीवोपार्जितकर्मफलज्ञापकतयाऽत्यन्तदोषबोधनपरमिति ।

यदर्तुमती भवत्युपरतशोणिता तदैव संभवकाल इत्यादि गोभिलादि-सूत्रेषु—

ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति ।
घोरायां ब्रह्महत्यायां युज्यते नात्र संशयः ॥

इत्यादि गौतमादिवचनेषु च वत्सरादिकमनभिधाय केवलं यदा तदे-त्यनेन शास्त्रानुमोदित ऋतुकाल एव गर्भ आधीयत इति शङ्खनादानु-कारिणा ध्वनिनाऽनुशासितं मुनिभिरिति ।

अपि च यत्तु सुश्रुतेनोनषोडशवर्षेत्यनेनोनषोडशवर्षा निषिद्धा वि-हिता च षोडशवर्षा गर्भस्याधान इति तदपि न धर्मशास्त्रसङ्गतम् । तथा च रघुनन्दनकृतज्योतिस्तत्त्वे गर्भाधानप्रकरणे भुजबलभीमः—

या सुता षोडशे वर्षे तत्र वा धृतगर्भिका ।
मृत्युस्तस्याः सपुत्रायाः पितुश्चापि च संमतः ॥
मांसी प्रियङ्गुरजनी गुग्गुलुर्वंशलोचना ।
तालिशेन तिलालाजा गर्भिण्यास्नानमुत्तमम् ॥
गौरीं संपूज्य तत्पश्चाल्लिङ्कमेच्छिवसंनिधौ ।
छागीं गर्भवती देया दैवज्ञायाथ गोयुगम् ॥
कांस्यपात्रस्थितं चन्द्रं सितवस्त्राजसंयुतम् ।
वस्त्रैः कृष्णैश्च सत्पुष्पैश्चन्दनागुरुधूपकैः ॥
कृत्वाऽपमार्जयेन्नारीं भोजयेद्ब्राह्मणांस्ततः ।

एतेषां प्रणिधानादेतदेव प्रतीयते—यत्षोडशवर्षीया गर्भग्रहणं प्रसवनं च दुर्लक्षणं दोषसूचकं च । यथा रवौ प्रथमरजोदर्शनं वन्ध्यात्वं सोमवारे तु सतीत्वं सूचयति नैतत्कन्यायत्नमपेक्षते परं तु स्वादृष्टमीश्वरेच्छा च तत्र हेतुत्वेनोपादीयते । तथाऽत्रापीति । एतत्तु कालमाहात्म्यं कालवि-द्भिरेव मुनिभिर्निर्णेतुं शक्यते ।

अपि च षोडशवर्षातिक्रान्ताया एव नार्या निर्दुष्टः पुत्र उत्पद्यत इत्येतदपि न सम्यक् । यतो निर्दुष्टपुत्रोत्पत्तौ द्वयोरेव रेतोरजसोर्विशुद्धिः कारणम् । तथा च तत्रैव—

पुमान्विंशतिवर्षश्चेत्पूर्णषोडशवर्षया ।
स्त्रिया संगच्छते गर्भाशये शुद्धे रजस्यपि ॥
अपत्यं जायते भद्रं तयोर्न्यूनेऽधमं स्मृतम् ।

रजःशुद्धिस्तु—

त्र्यंशे शान्तं यच्च रक्तं यवाभं
तद्गर्भार्थं वेदनागन्धहीनम् ॥

इत्यादीनां पूर्वापरपर्यवेक्षणेन ध्रुवमनुमीयते बालिकोद्वाह एव शुभावह इति जितं मुनिमतैर्जितं मुनिमतैरिति शिवम् ।

---

## क्व गच्छामि ॥

भयंकरी पापनिशाचरीयं
दिगङ्गनाङ्ग मलिनत्वहेतुः ।
इतस्ततो भ्राम्यति सर्वदैव
हरे क्व गच्छामि यत क्व शान्तिः ॥ १॥
अस्तुं सुखं नयमिहाशु दीना-
नस्माहशान्सत्वरमाननं तत् ।
प्रसारयामास सुभीषणाभा
हरे क्व गच्छामि यत क्व शान्तिः ॥ २ ॥

एकोऽप्यसौ किं बहुधा विभाति
यतोहि सर्वत्र सदैव वीक्षे
मालिन्यभाजं प्रतिमूर्तिमस्या
हरे क्क गच्छामि ननु क्क शान्तिः ॥ ३ ॥
आश्रित्य पापं ननु पादपं त-
मापल्लुता विस्मृतिमेति नो किम् ।
इयं समाक्रामति माहशांस्ता-
न्हरे क्क गच्छामि ननु क्क शान्तिः ॥ ४ ॥
समाजखड्गः प्रखरश्च कान्तिं
बिभेत्तुमेकत्र चिरं विभाति ।
अन्यत्र तीव्राः करणीयसङ्घा
हरे क्क गच्छामि ननु क्क शान्तिः ॥ ५ ॥
दशन्ति तिग्मं हृदयं विवेक-
सर्पा दशन्त्यत्र सुदीर्घकालम् ।
कथामयो भेषजमत्र नेक्षे
हरे क्क गच्छामि ननु क्क शान्तिः ॥ ६ ॥
न्यायात्मके वर्त्मनि वर्तमानो
योऽसौ समाजः प्रभुतामयासीत् ।
भावः स तस्यास्ति किमद्य हा हा
हरे क्क गच्छामि ननु क्क शान्तिः ॥ ७ ॥
धर्मोऽप्यधर्मः सुकृताऽकृतं वा
सदस्तु वाऽसत्करणीयमेव ।
समाजतिग्माक्षिभयान्न किं स्या-
द्धरे क्क गच्छामि ननु क्क शान्तिः ॥ ८ ॥

ससागरद्वीपवसुन्धरायाः
प्रभोः प्रदण्डोऽपि च सावधिः स्यात् ।
समाजदण्डस्य न सावधित्वं
हरे क्व गच्छामि ननु क्व शान्तिः ॥ ९ ॥

मन्ये यदस्मिन्ननु पापमेव
तदेव नूनं विषमः समाजः ।
आलिङ्गति प्रीतिसहृद्भावै-
र्हरे क्व गच्छामि ननु क्व शान्तिः ॥ १० ॥

विषोपमाद्यामि यतः सुदूर-
महं समाजः श्रयते तदेव ।
पीयूषबुद्ध्या स्वत एव नूनं
हरे क्व गच्छामि ननु क्व शान्तिः ॥ ११ ॥

तुच्छीकृतं यद्यदहं विचिन्त्य
विवेकयोगात्तृणवत्क्षिपामि ।
हा तत्समाजो नयति स्वमङ्कं
हरे क्व गच्छामि ननु क्व शान्तिः ॥ १२ ॥

ह्रिया रुषैवात्र जुगुप्सया च
यतो विरक्तः सततं भवामि ।
तत्रानुरक्तः कुतुकी समाजो
हरे क्व गच्छामि ननु क्व शान्तिः ॥ १३ ॥

विवेकदंशो मनसो दृढत्वं
शास्त्रानुशिष्टिश्च पलायिता स्यात् ।
समाजनेत्राग्निभिया समन्ता-
द्धरे क्व गच्छामि ननु क्व शान्तिः ॥ १४ ॥

त्यजाम्यहं यद्विषपुष्पबुद्ध्या
न किं समाजः सबलं तदेव ।
जानाति पुष्पं हरिचन्दनस्य
हरे क्व गच्छामि ननु क्व शान्तिः ॥ १५ ॥
कीटोपमं यन्नरकस्य वस्तु
मन्ये समाजस्तदलं सुखेन ।
देवभ्रमात्पूजयितुं प्रवृत्तो
हरे क्व गच्छामि ननु क्व शान्तिः ॥ १६ ॥
यदेव नूनं मनसाहमीडे
शृणोमि यस्यैव गुणातिरेकम् ।
उपेक्षते तत्किमु नो समाजो
हरे क्व गच्छामि ननु क्व शान्तिः ॥ १७ ॥
दुर्भिक्षदावानलतीव्रतेजः-
शिखा ज्वलन्ती सततं प्रदग्धुम् ।
अस्मादृशान्नूनमहो प्रवृत्ता
हरे क्व गच्छामि ननु क्व शान्तिः ॥ १८ ॥
न कां दिशं गच्छति तीव्रशक्ति-
र्भयङ्करी प्राणहराऽपि काम्या ।
पापस्य हालाहलशक्तिकल्पा
हरे क्व गच्छामि ननु क्व शान्तिः ॥ १९ ॥
भक्ष्याणि पेयान्युदरं न वेत्ति
तिष्ठत्यमुष्मिन्हृदये बलं नो ।
गन्तुं ग्रहीतुं च न शक्तिरस्ति
हरे क्व गच्छामि ननु क्व शान्तिः ॥ २० ॥

अनावृतं गात्रमिदं हिमेन
प्रकम्पते शुष्यति देश एषः ।
पथ्यं न किंचित्परिचीयतेऽत्र
हरे क्व गच्छामि ननु क्व शान्तिः ॥ २१ ॥
आच्छादनं नैकमपीह हा हा
छिन्नांशुकैरावरयन्ति गात्रम् ।
प्रिया बुभुक्षास्तु हरन्ति शान्तिं
हरे क्व गच्छामि ननु क्व शान्तिः ॥ २२ ॥
चेतः सदाऽस्मिन्नुपतापदग्धं
क्षमावसादेन हतं शरीरम् ।
तथाऽपि किंचिन्न हि वक्तुमीशो
हरे क्व गच्छामि ननु क्व शान्तिः ॥ २३ ॥
गृहादृते वृक्षतलाधिवासी
हा हन्त चन्द्रातपमन्तरेण ।
इहावलम्बेऽम्बरनिर्मलान्तं
हरे क्व गच्छामि बत क्व शान्तिः ॥ २४ ॥
आर्तस्य हाहाध्वनिरत्र कर्ण-
मयःशलाकेव विशत्यजस्रम् ।
विषण्णमेव स्वजनास्यमीक्षे
हरे क्व गच्छामि ननु क्व शान्तिः ॥ २५ ॥
आकर्ण्यते कातरमित्रतार-
चीत्कार उच्चैः परिदेवनोत्थः ।
शोकावसन्नस्य कराहतिश्च
हरे क्व गच्छामि बत क्व शान्तिः ॥ २६ ॥

अनन्तसंसारसमुद्रतार-
तरङ्गसङ्गो बलवत्सदैव ।
इतस्ततश्चालयतीह नूनं
हरे क्व गच्छामि ननु क्व शान्तिः ॥ २७ ॥

समन्ततः पापभुजङ्गसार्थाः
सुभेषजेनाप्यनिवारणीयाः ।
मर्माणि चित्तस्य दशन्ति कष्टं
हरे क्व गच्छामि ननु क्व शान्तिः ॥ २८ ॥

निरन्तरं यः खलु पूज्यते स्म
रम्यप्रभैरान्तरभक्तिपुष्पैः ।
तमद्य पश्यामि नितान्तभक्तं
हरे क्व गच्छामि ननु क्व शान्तिः ॥ २९ ॥

सत्यव्रतं सत्यपरं यमेव
जज्ञौ निरीहं च स एव नूनम् ।
दस्युर्भवत्यत्र कलिप्रभावा-
द्धरे क्व गच्छामि ननु क्व शान्तिः ॥ ३० ॥

अकृत्रिमा शान्तिरहो किमु स्या-
दकृत्रिमं प्रेम गतं चिराय ।
अकृत्रिमं सत्यमिदं किमस्ति
हरे क्व गच्छामि ननु क्व शान्तिः ॥ ३१ ॥

कामः प्रमादो बलवान्प्रमादः
शेषोऽभिमानो विषमा च हिंसा ।
क्रामन्ति किं नो सततं समन्ता-
द्धरे क्व गच्छामि ननु क्व शान्तिः ॥ ३२ ॥

अनाथनाथो ह्यगतेर्गतिस्त्वं
सदावलम्बोऽनवलम्बनस्य ।
उपायहीनस्य महानुपायो
नश्येद्विपत्त्वच्चरणाश्रितानाम् ॥ ३३ ॥

जगदरितिमिरालित्रासविध्वंसहेतो
निखिलभुवननाथ क्लान्तिनाशैकबीज ।
अनुगतमनुजानां मादृशानां शरण्य
विपदमपहरेर्मे सर्वशान्त्येकबन्धो ॥३४॥

श्रीनारायणार्पणमस्तु ॥

श्रीअन्नदाचरणतर्कचूडामणेः ।
नोयाखाली, सोमपाडा । बेंगाल ।

---

# श्रीशिवराजविजयः* ।

( उपन्यासः )

## प्रथमो निश्वासः ।



विष्णोर्माया भगवती यया संमोहितं जगत् ।
हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद्विमुच्यते ॥

भागवते ।

अरुण एष प्रकाशः पूर्वस्यां भगवतो मरीचिमालिनः[1] । एष भगवान्मणिराकाशमण्डलस्य चक्रवर्ती खेचरचक्रस्य[2] कुण्डलमाखण्डलदिशो[3]

---

* अस्मद्देशोद्धारकस्यालौकिकक्षात्रतेजःसमुद्भासिताशेषभारतवर्षस्य छत्रपतेः श्रीशिवाजीमहाराजस्य जीवनवृत्तमधिकृत्य विरचितोऽयं मनोहर उपन्यासो भारतरत्नश्रीमदम्बिकादत्तसाहित्याचार्येण नाम छत्रनगरवासिना पण्डितप्रवरेण ।

१ मरीचिमाली सूर्यः । २ खेचरा ग्रहाः । ३ आखण्डलदिक् पूर्वदिशा ।

दीपको ब्रह्माण्डभाण्डस्य प्रेयान्पुण्डरीक[1]पटलस्य शोकविमोकः[2] कोकलोकस्यावलम्बो रोलम्बकदम्बस्य[3] सूत्रधारः सर्वव्यवहारस्येनश्च[4] दिनस्य । अयमेवाहोरात्रं जनयत्ययमेव वत्सरं द्वादशसु भागेषु भुनक्त्ययमेव कारणं षण्णामृतूनामेष एवाङ्गीकरोत्युत्तरं दक्षिणं चायनमेनेनैव संपादिता युगभेदा एनेनैव कृताः कल्पभेदा एनमेवाश्रित्य भवति परमेष्ठिनः[5] परार्धसंख्याऽसावेव चर्करीति[6] बर्भर्ति[7] जर्हर्ति[8] च जगदेतदेतस्यैव बन्दिनो गायन्त्यमुमेव गायति ब्रह्मनिष्ठा ब्राह्मणा अमुमेवाहरहरुपतिष्ठन्ते । धन्य एष कुलमूलं श्रीरामचन्द्रस्य प्रणम्य एष विश्वेषामित्युदेष्यन्तं भास्वन्तं[9] प्रणमन्निजपर्णकुटीरा[10]न्निश्चक्राम कश्चिद्गुरुसेवनचतुरोऽभिनवबटुः ।

अहो चिररात्राय[11] सुप्तोऽस्मि स्वप्नजालपरतन्त्रेणैवातिपुण्यमयः समयोऽतिवाहितः सन्ध्योपासनसमयोऽयमस्मद्गुरुचरणानां तत्सपद्यवचिनोमि कुसुमानीति चिन्तयन्कदलीदलमेकमाकुञ्च्य तृणशकलैः संधाय पुटकं विधाय पुष्पावचयं कर्तुमारेभे ।

बटुरेष आकृत्या सुन्दरो वर्णेन गौरो जटाभिर्ब्रह्मचारी वयसा षोडशवर्षदेशीयः कम्बुकण्ठ आयतललाटः सुबाहुर्विशाललोचनश्चासीत् ।

कदलीदलकुञ्जायितस्यैतत्कुटीरस्य परितः पुष्पवाटिका पूर्वतः परमपवित्रपानीयं परःसहस्रपुण्डरीकपटलपरिलसितं[12] पतत्त्रिकुल[13]कूजितपूजितं पयःपूरपूरितं सर आसीत् । दक्षिणतश्चैको निर्झरझर्झरध्वनितदिगन्तरः फलपटलास्वादचपलितचञ्चुपतङ्गकुल[14]क्रमणाधिकविनतशाखशाखि[15]कदम्बव्याप्तः सुन्दरकन्दरः पर्वतखण्ड आसीत् ।

यावदेष ब्रह्मचारी बटुरलिपुञ्जमुद्धूय कुसुमकोरका[16]नवचिनोति ताव-

---

१ पुण्डरीकं श्वेतकमलम् । २ विमोको मोक्षः । ३ रोलम्बा भ्रमराः । ४ इनः स्वामी । ५ परमेष्ठी ब्रह्मा । ६ चर्करीति अतिशयेन करोति एवम् । ७ बर्भर्ति बिभर्ति पालयतीत्यर्थः । ८ जर्हर्ति हरति संहरतीत्यर्थः । ९ भास्वान् सूर्यः । १० कुटीरः अल्पकुटी ( झोंपडी ) ११ चिररात्राय चिरम् । १२ परिलसितं भूषितम् । १३ पतत्त्रिणः पक्षिणः । १४ पतङ्गाः पक्षिणः । १५ शाखिनो वृक्षाः । १६ कोरकः कलिका ।

तस्यैव सतीर्थ्यो[१]ऽपरस्तत्समानवयाः कस्तूरिकारेणुरूषित इव श्यामश्चन्दनचर्चितभालः कर्पूरागुरुक्षोदच्छुरितवक्षोबाहुदण्डः सुगन्धपटलैरुन्निद्रयाञ्चविनिद्रामन्थराणि कोरकनिकुरम्ब[२]कान्तरालसुप्तानि मिलिन्दवृन्दा[३]नि झटिति समुपगत्य निवारयन्गौरबटुमेवमवादीत् ।

अलं भो अलं मयैव पूर्वमवचितानि कुसुमानि त्वं तु चिरं रात्रावजागरिरि[४]ति क्षिप्रं नोत्थापितः । गुरुचरणा अत्र तडागतटे संध्यामुपासते । संस्थापिता मया निखिला सामग्री तेषां समीपे । यां च सप्तवर्षकल्पां यवनत्रासेन निःशब्दं रुदतीं परमसुन्दरीं कलितमानवदेहामिव सरस्वतीं सान्त्वयन्मरन्द[५]मधुरा अपः पाययन्कन्दखण्डानि भोजयंस्त्वं त्रियामा[६]त्रयमनयः सेयमधुना स्वपित्युद्बुध्य च पुनस्तथैव रोदिष्यति । तत्परिमार्गणीयावस्याः पितरौ गृहं च । इति संश्रुत्योष्णं निःश्वस्य यावत्सोऽपि किंचिद्वक्तुमियेष तावदकस्मात्पर्वतशिखरं निपपातोभयोर्दृष्टिः । (क्रमशः)

---

## सविनया विज्ञप्तिः ।

सहृदयवाचकाः ! विज्ञापितपूर्वमेवास्माभिस्तृतीयसंख्यायां सत्वरमेव प्रेर्यतां मूल्यं संस्कृतचन्द्रिकाया इति । महात्मना श्रीगुरुदासशर्ममहाशयेन तु चन्द्रिकायाः कल्याणं कामयमानेनैकमासाभ्यन्तरे मूल्य प्रेषयितृभ्य उपहारोऽपि प्रत्यश्रावि । आसीच्चास्माकं प्रत्याशा भूयोभिरेव ग्राहकमहाशयैः संभाव्येत मूल्यप्रदानेन तपस्विन्येषेति । अस्याश्च यादृशीदानीमवस्था तथा निवेदितैव भूयोभूयः पूर्वमस्माभिः । विदितवृत्तान्ता अपि पुनर्ग्राहकमहाशया अत्यावश्यकस्याप्यत्यन्तन्यूनस्याप्यस्या मूल्यस्य प्रदाने मनो न कुर्वन्तीत्यहो दुर्भाग्यमेतस्याः ।

एतच्च प्रायो महाभागानां विदितमेव यथा संवादपत्रिकामासिकपत्रि-

---

१ सतीर्थ्यः सहाध्यायी । २ निकुरम्बं समूहः । ३ मिलिन्दा भ्रमराः । ४ अजागरो जागरं कृतवान्निद्रां न लब्धवानित्यर्थः । ५ मरन्दो मकरन्दः । ६ त्रियामा रात्रिः ।

कादीनां कृते पत्रप्रापणाधिकरणे कोऽपि नव्यो नियमः संवृत्तो येन परिवर्तने देयान्यपि पुस्तकानि न हि शुल्कपत्रमन्तरा दातुं शक्यन्ते । पुरा त्वग्रिममेव त्रैमासिकं शुल्कं दीयेत तदा मासत्रयं यावत्पत्रिका यथास्थानं प्रापयन्ति स्माधिकरणिकाः । सांप्रतं पुनः प्रतिमासं प्रतिपत्रिकं च शुल्कपत्रप्रदानमत्यन्तमावश्यकम् । तच्च न हि विना द्रव्येण विधातुं शक्यम् । द्रव्यमपि च न हि ग्राहकमहाशयानां कृपाकटाक्षमन्तरा संस्कृतचन्द्रिकायाः सुलभम् । अतः प्रार्थ्यते **पत्रिकामेतां प्राप्यैकमासाभ्यन्तर एव प्रेर्यतां समग्रं षष्ठवार्षिकं चन्द्रिकामूल्यं कृपयेति** । यदि तु मूल्यमवसरेऽस्मिन्न प्रेर्येत तदा न जाने कथं चन्द्रिका प्रेरयितुं शक्येतेति । महीयान्हि संवृत्तोऽन्तरायः पत्रप्रापणानियमाख्यः ।

यदि तु धनप्रापणाद्वारा मूल्यं न प्रेरयितुं शक्यते तदाऽऽदिश्यतां व्ही. पी. द्वारा चन्द्रिकां प्रेरयितुम् । आदेशादृते तु व्ही. पी. द्वारा न शक्यते चन्द्रिका प्रेषयितुम् । गते हि वत्सरे विप्रलब्धाः स्मो व्ही. पी. परावर्तनश्रेयःसंपादकैर्द्विशतग्राहकमहाशयैः । एकादशसंख्या निःशब्दमङ्गीकृत्य समुपनते मूल्यप्रदानावसरे व्ही. पी. परावर्तनं नामेदमतिप्रशंसनीयमेवाचरणं महोदाराणामित्यत्र नास्त्येव विवादोऽस्माकम् । परं न वयं धनिका येन विनाऽपि मूल्यं चन्द्रिकां वितरीतुं प्रभवेमेति न विस्मरणीयम् । **तत्सत्वरं विधीयतां मूल्यप्रदानानुग्रह इति सविनयं भूयोभूयः प्रार्थ्य** प्रत्याशास्य च नैव ग्राहकमहाशयाश्चन्द्रिकामुपवासव्रते नियुञ्जीरन्निति सांप्रतं विरम्यते ।

---

## सानन्दमङ्गीकारः ।

नेपालाभिजनेन श्रीकाशीक्षेत्रनिवासिना श्रीमच्छबिलालसूरिणा प्रणीतो वृत्तालङ्कारः श्रीयुक्तजगन्नाथवर्मक्षात्रियेण प्रकाशितं तेनैव काश्याः प्रहितं **संकेतनिधिः सारमञ्जरी** चेति पुस्तकद्वयं लष्करग्वालियरवर्तिन्याः संस्कृतकाव्यकादम्बिनीसभायाः समस्यापूर्तेर्द्वितीयखण्डस्य द्वितीयसंख्या श्रीमत्पण्डितगोविन्दरायोपाध्यायप्रणीतसमन्वयाख्यभाष्यसंवालितायाः **श्री-**

मद्भगवद्गीतायाः प्रथमखण्डं चेति पुस्तकपञ्चकं समालोचनार्थमस्मत्स-विधमुपागतम् । एतत्प्रेरकाणां चानुग्रहं शिरसा श्लाघमानो यथावसरम-चिराद्वैतानि समालोचयिष्यामीति प्रतिज्ञाय सांप्रतं विरमामि ।

---

**मलपृष्ठे प्रकाशिता सूचनाऽवश्यमवलोक्यतां ग्राहकमहाशयैरि-त्यभ्यर्थ्यते ।**

---

## समालोचना ।

**गुप्ताशुद्धिप्रदर्शनम्**—छपानिवासिना भारतरत्नश्रीमदम्बिकादत्त-व्याससाहित्याचार्येण प्रणीतं समालोचनार्थमस्मत्करतलमापतितं च । इंग्रेजीभाषाध्यायिनो विद्यार्थिनः परीक्षावसरे प्रायेण परीक्षकैः कानिचि-द्वाक्यानि पद्यानि वा संशोधयितुमादिश्यन्ते । तत्र च विषये प्रावीण्यमा-सादयितुमत्युपकारकोयं प्रबन्धः । अत्र १११ एकादशोत्तरैकशतमितानि गद्यवाक्यानि दश च पद्यान्यशुद्धानि विद्यन्ते । विना सूक्ष्मावलोकनमत्र-त्यानि कानिचिद्वाक्यानि न शक्येरन्विद्यार्थिभिरशुद्धानीत्यवगन्तुम् । मूल्यमस्य केवलमर्धानकमात्रम् ।

निम्नलिखितानि पुस्तकानि मिरतनगरे सदरबाजारवीथ्यां विद्यमा-नस्य संस्कृतपुस्तकालयस्याध्यक्षेण पण्डितश्रीईश्वरीप्रसादशर्मणः सका-शात्प्राप्तानि तत एव लभ्यन्ते ।

**क्षत्रियवर्गकोषः** (प्रथमभागः)— अत्र अआदिवर्णविन्यासादिपूर्वकं क्रमशः पञ्चमपाठात्परं क्षत्रियवर्गे( अमरकोशादौ ) पठ्यमानानां शब्दानां हिन्दीभाषायामर्थाः सम्यक्प्रतिपादिताः । संस्कृतशब्दस्तल्लिङ्गमर्थः क्वचि-द्दर्षवरव्यूहादीनां लक्षणान्यपि विन्यस्तानि । क्षात्रधर्मजिज्ञासूनामय-मत्यन्तोपयुक्तः पण्डितहरदयालुनाम्ना विदुषा प्रणीतः । अवश्यं संग्राह्यो जिज्ञासुभिः । अस्यापि मूल्यं नावगतम् ।

७।१०।८९.

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

॥ श्रीगणेशाय नमः ॥

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## ॥ मासावतरणिका ॥

केदारेषु मनोहराः सुरभयः सन्मञ्जरीमञ्जुलाः
शालिस्तम्बगणाः शिरांसि धरणौ नम्राणि सन्तन्वते ।
फुल्लत्पद्मकदम्बकेऽपि मधुपास्तन्वन्ति गुञ्जांमिषे
जायन्ते विनयप्रमोदविषये नूनं सतां सम्पदः ॥ ६ ॥

## ॥ उद्भटश्लोकाः ॥

कालश्चेत्करुणापरः कलियुगं यद्यद्य धर्मप्रियं
निस्त्रिंशो यदि पेशलो विषधरः सन्तोषदायी यदि ।
अग्निश्चेदतिशीतलः खलजनः सर्वोपकारी स चे-
दायुष्यं यदि वा भविष्यति विषं वेश्याऽपि तद्रागिणी ॥
कामं लिखतु संस्थानं कश्चिद्रूपं च भास्वतः ।
अभित्तिविहितालम्बमालोकं विलिखेत्कथम् ॥*

---

तथाऽऽचरेदह्नि यथा रजन्यां
न स्यात्सुषुप्सोर्विरतिः कथञ्चित् ।
अथ क्षपायां तदिवानुतिष्ठे-
न्न लज्जते येन मनः प्रभाते ॥

श्रीपद्मनाथभट्टाचार्यस्य ( सिलहट—आसाम )

---

१ गुञ्जां गुञ्जारवं । इष आश्विने । *अप्रस्तुतप्रशंसेयम् । परेषां वेषभाषादिकं बाह्यस्वरूपमनुकर्तुं शक्यं न पुनः कथंचिदपि तत्प्रकृतिसिद्धा गुणाः शक्यन्त आसादयितुमिति भावः ।

# श्रीमदप्पयदीक्षिताः ।

[ पूर्वतोऽनुवृत्तिः ]

गतसंख्यायां यावदुल्लिखितमस्माभिस्तावदेव प्रायः श्रीमदप्पयदीक्षितानामुपलभ्यमानं चरितम् । तच्च लिखद्भिरस्माभिः काव्यमाला भारतवर्षीयार्वाचीनकोश इतरे च कैश्चिदस्मद्देशीयैर्विरचिताः प्रबन्धाः संख्यावद्वदनगताश्चाख्यायिकाः प्रमाणीकृताः । किन्तु स्वभाव एव मनुष्याणां यत्प्रमादबाहुल्यम् । अतः क्वचित्काव्यमालायां क्वचिच्च कोशेऽपि प्रमादा उपलब्धा इति नात्रावसर आश्चर्यस्य । श्रीनीलकण्ठदीक्षितविरचितप्रबन्धैरनुमाय यदस्माभिर्दीक्षितानां जननविषये प्रोक्तं तदेव मनाक्सत्यतां भजते । एतच्च चरितं लिखद्भिरेवास्माभिर्मद्रविभागीयेभ्यः स्वसुहृद्भ्यः श्रीमदप्पयदीक्षितानामेव वंशे लब्धजन्मभ्यः श्रद्धेयतमं दीक्षितचरणानां वृत्तमासादितम् । प्रबन्धान्तरेभ्यश्चान्यदपि किञ्चिदधिगतम् । तदिदानीं ग्राहकेभ्य उपहर्तुमिच्छामः ।

अत्र श्रीमदप्पयदीक्षितवंश्यैः श्रीशृङ्गेरिपुरनिवासिभिः
पण्डितैः श्रीवैद्यनाथशास्त्रिभिः प्रेरितं पत्रम् ।

इमे खलु दीक्षितेन्द्राः ( श्रीमदप्पयदीक्षिताः ) श्रीमति काञ्चीप्रदेशे श्रीकाञ्चीनगरपरिसरविराजमाने अडयप्पलाख्येऽग्रहारे गतेषु चतुःपञ्चाशदुत्तरषट्शताधिकचतुःसहस्रमितेषु ( ४६५४ ) कल्यब्देषु तथा हूणाब्देषु १५५२ संख्याकेषु [ अर्थात् १४७३ संख्याकेषु श्रीशालिवाहनाब्देषु ] श्रीमद्भारद्वाजकुलजलधिकौस्तुभमणेः श्रीरङ्गराजाध्वरीन्द्रतो

लब्धजन्मानो* विरचितचतुरधिकशतप्रबन्धा विजितवैतण्डिकनिकुरुम्बाः प्रख्यातचरित्राश्चेति सार्वजनीनमेतत् । तेषां जन्मवत्सरादिकं तद्वंश्यैः श्रीशिवानन्दयोगीन्द्रैस्तच्चरिते$ सम्यङ्निरूपितम् । तेषां किल त्रिसप्ततिर्वयसः परमावधिरित्यभियुक्ताः । तेषां चेयं सूक्तिश्चरमा श्रीमति चिदम्बरक्षेत्रे यथा—

**चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं**
**सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित्कृताः ।**
**वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा**
**न किञ्चिदहमर्थये शिवपदं दिदृक्षेपरम्** ॥ इति ॥

तेषां [ श्रीदीक्षितानाम् ] विद्याग्रहणं पितुरेव। यतस्त एव सिद्धान्तलेशसंग्रहाख्ये ग्रन्थे

× × × × × **सिद्धान्तलेशान्धियः**
**शुध्यै संकलयामि तातचरणव्याख्यावचः ख्यापितान्** ॥

इति निरबध्नन् । तथा शिखरिणीमालाव्याख्याने । शिवतत्वविवेकेऽपि—

**सर्वविद्यालतोपघ्नपारिजातमहीरुहान् ।**
**महागुरून्नमस्यामि सादरं सर्ववेदसः** [ ? ]॥

इत्युपक्रमे तथा समाप्तावपि

**श्रीरङ्गराजमखिनः श्रितचन्द्रमौलि-**
**रस्त्यप्पदीक्षित इति प्रथितस्तनूजः** ॥ इति ॥

---

* सिद्धान्तलेशसङ्ग्रहे तु दीक्षितानां पितामहस्यापि **श्रीसर्वतोमुखमहाव्रतयाजी**तिनामोपलभ्यते यथा—

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
**श्रीसर्वतोमुखमहाव्रतयाजि** सूनोः ।
श्रीरंगराजमखिनः श्रितचन्द्रमौलि-
रस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥ इति ॥

$ एतच्चरितमधिगन्तुं प्रयतामहे । लब्धे च तस्मिन्यथावसरं दीक्षितचरणानां चरितगतं विशेषं प्रतिपादयिष्यामः ।

तत्कृताः कृतयः संख्यया चतुरधिकं शतमिति तदीयविरुदलेखनक्रम-गतेन चतुरधिकशतप्रबन्धनिर्वाहकपदेन ज्ञायते । इदानीमप्युपलभ्यन्ते पञ्चाशदधिका ग्रन्थाः । तत्रेदानीमपि प्रचारे विद्यमानाः श्रीमदद्वैतसिद्धान्तावलम्बिनो निर्गुणवस्तुप्रतिपादनधुरीणाः—[ १ ] श्रीपरिमलः*[ २ ] सिद्धान्तलेशसंग्रहः [ ३ ] वेदान्तनक्षत्रवादावलिः [ ४ ] मध्वतन्त्रमुखमर्दनम् [ ५ ] मध्वमतविध्वंसनम् [ ६ ] न्यायरक्षामणिश्चेति षट् । [ १ ] सगुणनिष्ठा [ २ ] शिखरिणीमाला [ ३ ] शिवतत्वविवेकः [ ४ ] ब्रह्मतर्कस्तवः [ ५ ] लघुविवरणम् [ ६ ] आदित्यस्तवरत्नं [ ७ ] तद्व्याख्या [ ८ ] शिवाद्वैतविनिर्णयः [ ९ ] शिवध्यानपद्धतिः [ १० ] पञ्चरत्नं [ ११ ] तद्व्याख्या [ १२ ] आत्मार्पणम् [ १३ ] मानसोल्लासः [ १४ ] शिवकर्णामृतम् [ १५ ] आनन्दलहरी [ १६ ] चन्द्रिका [ १७ ] शिवमहिमकलिकास्तुतिः [ १८ ] रत्नत्रयपरीक्षा [ १९ ] तद्व्याख्या [ २० ] अरुणाचलेश्वरस्तुतिः [ २१ ] अपीतकुचाम्बास्तवः [ २२ ] चन्द्रकलास्तवः [ २३ ] शिवार्कमणिदीपिका [ २४ ] शिवार्चनचन्द्रिका [ २५ ] शिवपूजाविधिः [ २६ ] नयमणिमाला [ २७ ] तद्व्याख्या चेति शिवोत्कर्षवादपराः षड्विंशतिः ॥ तथा श्रीरामानुजीय-

---

* परिमलाख्यग्रन्थकरणे त्वित्यनुश्रूयते । पूर्वं श्रीमदप्पयदीक्षिताः शिवार्कमणिदीपिकाख्यं श्रीकण्ठाचार्यप्रणीतशिवोत्कर्षप्रबन्धव्याख्यानं विरचय्यात्मनः स्वमतप्रख्यापनेऽप्रतिहतां शक्तिं व्यञ्जयामासुः । तदाकर्ण्य श्रीमदद्वैताचार्याः श्रीनृसिंहस्वामिनो दीक्षितसमीपमुपेत्योपदिश्य च तस्मान्मार्गात्तं निवर्तयामासुः । अथ दीक्षिता अद्वैतमतानुयायिनः संवृत्ताः । ततश्च तमेव मार्गमवलम्ब्याद्वैताचार्यत्वमधिजग्मुरिति । तथाहि श्रीमदीशानस्तुतौ—

वैकुण्ठे शुण्ठ कोलाहलमयकलहोल्लुण्ठनेऽकुण्ठशक्तिः
श्रीकण्ठाचार्यकण्ठोदितनयसरणेर्व्याकृतौ कुण्ठितो न ।
इत्येवं शिक्षितश्चाद्वयनयगुरुभिर्दक्षिणामूर्तिरूपै-
र्दक्षोऽभूद्दीक्षितोऽसौ परिमलकृतितः शङ्कराचार्यपक्षः ॥ इति ॥

[ स० सम्पादकः ]

मतानुसारिणः—[ १ ] नखमयूखमालिका [ २ ] तद्व्याख्या [ ३ ] श्रीवेदान्तदेशिकविरचितयादवाभ्युदयव्याख्या [ ४ ] तथा तत्कृतपादुकासहस्रव्याख्या [ ५ ] वरदराजस्तवश्चेति पञ्च ॥ श्रीमदानन्दतीर्थीयसिद्धान्तानुसारिणौ [ १ ] न्यायरत्नमाला [ २ ] तद्व्याख्या चेति द्वावेव ॥ तथा पूर्वमीमांसायाम्—[ १ ] नक्षत्रवादावलिः [ २ ] विधिरसायनं चेति द्वौ ॥ तथा व्याकरणे—[ १ ] नक्षत्रवादावलिः । अलङ्कारशास्त्रे—[ १ ] कुवलयानन्दः [ २ ] चित्रमीमांसा चेति द्वौ । [ वृत्तिवार्तिकं त्वसमग्रमिति नोल्लिखितं स्यादिति । ( स० सम्पादकः ) ] एवं मिलित्वा पञ्चचत्वारिंशत् । अन्ये च बहवो ग्रन्थास्तत्कृता उपलभ्यन्ते । न तु समग्राः । इति ।

यत्तु काव्यमालाकारैः कुवलयानन्दाख्यस्यालङ्कारशास्त्रप्रबन्धस्यव्याख्याया रसिकरञ्जिन्याख्याया अपि श्रीमदप्पयदीक्षितप्रणीतत्वमेव प्राकाशि तद्रसिकरञ्जिन्यनवलोकनमूलं स्खलितमेव । सम्प्रति कुम्भकोणनगरे किल मुद्रितासौ रसिकरञ्जिनी । तस्याश्च प्रणेता श्रीमद्गङ्गाधरवाजपेयी नाम श्रीमदप्पयदीक्षितान्वयसंभवः पण्डितप्रवरः । तस्य सङ्क्षिप्तस्येतिवृत्तस्यात्रोपनिबन्धनं नानुचितमित्याकलय्य तदत्रोपहर्तुमिच्छामः । यथा—

कविरयं गङ्गाधरवाजपेयी कस्मिन्काले बभूवेति न सम्यग्ज्ञायते । श्रीमदप्पयदीक्षितकालस्यैतत्कालस्य च मध्यकालः शतवत्सराः स्युरिति प्रतिभाति । यतोऽयं रसिकरञ्जन्या नाम कुवलयानन्दव्याख्याया उपक्रमे—

**अस्मत्पितामहसहोदरदेशिकेन्द्र-**
**मप्पय्ययज्वतिलकं प्रणमामि मूर्ध्ना ।**
**यस्यानवद्यकृतिभिः शतशोऽधिकाभि-**
**र्वैपश्चिती बुधततेः प्रसरीसरीति ॥**

इति पद्यमुपन्यबध्नात् । रसिकरञ्जिनीकारस्य पितामहः समरपुङ्गवदीक्षित इति व्यवहरन्ति पूर्ववृत्तविदो वृद्धाः । पितामहसहोदरस्य देशिकेन्द्र इत्युक्त्या कियानेवानयोर्मध्यकाल इति ज्ञायते ।

अयं चन्नपुरीसमीपवर्तिमोशूर्तिरुवालङ्गाडुनामकाग्रहाराभिजनः । पिताऽस्य श्रीमद्वाधूलवंशमुक्ताफलायितः श्रीदेवनरसिंहभट्टः । अयं श्रीकाश्यां श्रीविश्वरूपयतीन्द्रतः सर्वास्वपि विद्यासु वैशारद्यमधिजगाम । श्रीतञ्जासंस्थानमहाराजश्रीशाहाजीभूपतेः प्रतिगृहीतग्रामसमूहोऽयं तत्रैव मरुद्वृद्धातीरे न्यवसत् । निजनिवासग्रामस्य च **तिरुवालंगाडु** इत्यभिधानं चक्रे । आप्तजनप्रथितश्च वृत्तान्तोऽयम् ।

साम्प्रतमप्यनुभूयते तत्प्रतिगृहीतगृहारामादिकं तद्वंश्यैः । एतद्विरचिताः प्रबन्धास्तु भूयांसः । तथापि तेष्विदानीमुपलभ्यमानाः काणादतन्त्रे **सिद्धान्तचन्द्रिकाख्यं** प्रकरणरत्नं विस्तृता च तद्व्याख्या **सिद्धान्तचन्द्रिकाप्रसादाभिख्या**ऽलङ्कारशास्त्रे कुवलयानन्दव्याख्या **रसिकरञ्जिनी** चेति । एतद्ग्रन्थपरिशीलनेनास्य सर्वेष्वपि शास्त्रेषु प्रबन्धृत्वमस्तीत्यनुमीयते । इति ।

एवं च रसिकरञ्जिन्याः श्रीमदप्पयदीक्षितप्रणीतत्वं कथञ्चिदपि न वक्तुं शक्यम् ।

यद्यपि श्रीमदीशानस्तुतिगतेन पूर्वं टिप्पन्यामुदाहृतेन पद्येन श्रीमदप्पयदीक्षितानां श्रीमच्छिवपदसरोजैकनिष्ठत्वं प्रति सन्दिग्धे मानसे तथाप्यस्मिन्विषये निधनप्रत्यासन्नेऽवसरे श्रीमद्दीक्षितवदनारविन्दाद्विनिःसृतस्य चिदम्बरमिदं पुरमित्यादि पद्यस्यापेक्षया न तद्वचनस्य प्रामाण्यमङ्गीकर्तुं युक्तमिति समवगच्छेयुरेव विद्वांसः ।

पण्डितरायश्रीजगन्नाथस्य श्रीदीक्षितचरणानां च मध्यवर्तिनः कालस्य शताधिकवत्सरात्मकत्वेऽपि न जानीमः किमिति प्ररूढ एतैः सहास्य द्वेष इति । पण्डितरायस्तु पण्डितराय एवेति नास्ति सन्देहस्तथापि तस्य श्रीदीक्षितप्रणीतानां ग्रन्थानामुपरि प्रद्वेषपक्षपातित्वं महीयांसं विस्मयमुत्पादयति । यथा चास्याकारणविद्वेषित्वं तथा चित्रमीमांसाखण्डनरसगङ्गाधर-

योस्तद्व्याख्ययोश्च नागेशभट्टप्रणीतयोर्विलोकनेन स्फुटीभवति । न चैतावता श्रीमद्दीक्षितविरचितानां प्रबन्धानां सर्वथा निर्दोषत्वमित्यस्माकमभिमान इति बोद्धव्यम् । तथापि युक्तिवादमात्रमनवलम्ब्य केवलं द्रविडशिशुप्रभृतीनां ग्राम्यजनमात्रप्रयोज्यानां शब्दानां पण्तिरायसदृशेन पण्डितकुलमण्डनेन निःशेषशास्त्रपारदृश्वसु श्रीदीक्षितचरणेषु प्रयोगः कथङ्कारं युज्यत इति वदन्तु पण्डिता एव । भवतु न चिरादेव श्रीजगन्नाथजीवनवृत्ते सविस्तरमेतद्विचारयिष्यामः ।

एवमेष यावल्लाभमुपन्यस्तः श्रीदीक्षितचरणानां जीवनवृत्तान्तो रसिकेभ्य इति शिवम् ।

---

# मूर्तिपूजनम् ।

[ पूर्वतोऽनुवृत्तम् ]

अत्रैवं केचन संशयीरन्—न किल गुरुप्रतिमाया ईश्वरप्रतिमायाश्च सादृश्यं कथंचिदप्यापादयितुं शक्यम् । गुरुप्रभृतयो हि प्रत्यक्षीकृता इति शक्यते निश्चेतुं तेषामेवेयं प्रतिमेति । अभिज्ञातायां च तत्प्रतिमायां साहजिक एवादरोन्मेषः । कथं पुनरतीन्द्रियस्यापीश्वरस्यैवेयं प्रतिमेत्यवबोद्धव्यम् । अनभिज्ञातायां च तस्यां कथं वा समुद्यतामादर इति । अत्रोच्यते । अवितथं किलैतदायुष्मता प्रोक्तं परं यान्भवान् जन्मनः प्रभृति सकृदपि नावेक्षितवांस्तेषामेव प्रबन्धमात्रेणावगतगुणानां केषाञ्चिद्भवद्भूदेवानां यूरोपीयानां प्रतिमासु किमिति भवानादरातिशयमाविष्कुरुते । किं च विदेशीयानां तेषामेवेयं प्रतिमेति निर्णेतुमस्ति साधनं भवतः । सन्तु नाम ते ये खल्विदानीं गतेन श्रीमता विलोकितुं शक्याः । ये पुनः शतशोऽपि वत्सरेभ्यः प्रागेव समुद्भूता न शक्यन्ते कथंचिदपीदानीं प्रत्यक्षीकर्तुं तेषां तु प्रतिमानामभिज्ञाने किंवा प्रमाणं भवानङ्गीकुर्यात् । यदि तु तत्राप्तानां वचनं प्रबन्धा वा प्रमाणमिति ब्रूषे तदा ब्रूहि किमपराद्धं वेदेन यदयं परमेश्वरस्य प्रतिमां व्याचक्षाणोऽपि न

प्रमाणीक्रियते। यो हि यज्जानाति स एव तत्र प्रमाणीकर्तव्य: अत एवातीन्द्रियेष्वर्थेषु येषां न प्रसरति वैभवं बुद्धेर्न किल तेषां वचनानि प्रतिमापूजनसदृशेषु जटिलतमेषु विषयेषु प्रमाणपदवीमारोपयितुमर्हन्ति। तत्र त्वनादित्वादीश्वरप्रणीतत्वाद्वा वेदा एव प्रमाणं वेदकल्पानि वा मनुप्रभृतीनामाप्तानां[1] वचनानि। तथा चाहु: सांख्या:—

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात्।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम्** ॥ इति ॥

वेदस्य च यथाऽपौरुषेयत्वमीश्वरप्रणीतत्वं वा तथा प्रतिपादितमेव सर्वेष्वपि दर्शनशास्त्रेषु। तच्चात्र न प्रासङ्गिकमित्युपेक्ष्यते। तस्य च सार: श्रीमद्भगवत्पूज्यपादाचार्यै: प्रावोचि

**वेदोऽनादितया वा यद्वा परमेश्वरप्रणीततया।**
**भवति हि परं प्रमाणम्** + + + ॥ इति ॥

तद्वेदवचनै: स्फुटीकृता वा तन्मूलकस्मृतिभि: प्रतिपादिता वा पुराणवचनैस्तथाविधैरुपदिष्टा वा भगवतो मूर्तीर्निर्माय निर्माप्य वा तत्पूजनं नाशास्त्रीयं न वाऽसामञ्जस्यविलसितं प्रत्युतात्मन: कर्तव्यस्यैवानुष्ठानमित्याकलयाम:। यदि तु स्मृत्यादिप्रतिपादितानां मूर्तीनां नासाद्येत मूलं वेदवचनं तथापि तत्रानुमितश्रुतिवचनमवश्यमभ्युपेतव्यम्। तथा चोक्तं मीमांसादर्शने जैमिनिना **विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानमिति**। यदि श्रुतिस्मृत्योर्विरोधो दृश्येत तदा स्मार्तं वचनमनादरणीयम्। यदि तु तत्र वेदवचनमेव नोपलभ्येत तदा तदनुमातव्यं न तु निर्मूलेति स्मृतिरुपेक्षणीयेत्यर्थ:। स्मृतिवदेव व्यवस्था पुराणानाम्।

---

१ आप्तलक्षणं तु गौडपादाचार्या: प्राहु:—

आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदु:।
क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसंभवात्। इत्यारभ्य ॥
स्वकर्मण्यभियुक्तो य: सङ्गद्वेषविवर्जित:।
पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेय: स तादृश: ॥ इति ॥

ननु न क्वाऽपि दृश्यते वर्णनं मूर्तीनां तत्किमिति निर्मूलो मूर्तिपूजनाचारः स्वीकरणीय इति न वक्तव्यम् । न ह्ययं वेदादिवचनानां दोषो यदेतानि भवतो नयनगोचरतां नापद्यन्ते । दोषस्त्वयमनाघ्रातवेदादिवचनस्य नूनं भवत एवेति ब्रूमः । विलसितं वा तदेतद्भवतो विशालतमायाः प्रज्ञायाः । अन्धस्यैव ह्ययं दोषो यदस्य वस्तुजातानि न दृग्गोचरतामुपयान्ति न पुनः पदार्थजातस्य । एवमेवेदम् । ननु कानि तानि श्रुत्यादिवचनानि येषु देवानां मूर्तयः प्रतिपाद्यन्त इति चेच्छ्रूयताम् कथयामि ।

अत्र त्वेतदत्रबोद्धव्यं यदल्पमतयो वयं न किल शक्नुमः सर्वानपि वेदान्पठितुमतो यावद्दृष्टं केषांचिद्वचनानामुपन्यासं कर्तुमिच्छामः । एतावताऽपि स्थालीपुलाकन्यायेनापरेषामपि देवानां मूर्तिवर्णनं वेदेऽनुमातव्यम् । तत्र तावच्छ्रीशिवस्य प्रतिमोपवर्णिता वेदे । यथा—( ऋ० मं० १ अ० १६ सू० ११४ )

**इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । १**

अत्र सायनभाष्यतात्पर्यम्——तस्मै रुद्राय इमा मतीः स्तुतीः प्रभरामहे प्रकर्षेण निष्पादयामः । कीदृशाय तवसे प्रवृद्धाय कपर्दिने जटिलाय क्षयद्वीराय क्षयन्तः प्राप्तैश्वर्या वीरा मरुद्गणाः पुत्रा यस्य तस्मै । इति । तथा तत्रैव ७।३।४६

**इमा रुद्राय स्थिरधन्वने क्षिप्रेषवे देवाय स्वधाव्ने ।**
**अषाह्ळाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥२**

( सा० भा० ता० ) हे अस्मदीयाः स्तोतारः यूयं इमा गिरः स्तुतीः रुद्राय एतन्नामकदेवाय भरत धारयत । कीदृशाय । स्थिरधन्वने दृढधनुष्काय क्षिप्रेषवे शीघ्रगामिशराणाय स्वधाव्ने अन्नवते अषाह्ळाय केनाऽप्यनभिभूताय सहमानाय शत्रूणामभिभावित्रे वेधसे विधात्रे तिग्मायुधाय तीक्ष्णायुधाय । स च रुद्रः नः अस्मदीयाः स्तुतीः शृणोतु ।

एवं यजुष्यपि रुद्राध्याये नीलग्रीवो विलोहित ॥ इति ॥ ३

**याते रुद्र शिवा तनूरघोरा पापकाशिनी** ॥ इति ॥ ४

**नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः** ॥ ५

अत्र प्रथमस्यामृचि भगवतो रुद्रस्य कपर्दित्वं तृतीयस्यां नीलग्रीवत्वं चतुर्थ्यां मङ्गलमूर्तिमत्वं पञ्चम्यां बाहुशालित्वं च प्रतिपाद्यमानं विस्पष्टयति प्रतिमां भगवतस्तस्य। किं च यो धनुर्धारयति यस्य च क्षिप्रगामिनो बाणा इत्याख्यायते तस्यैव नास्ति मूर्तिरिति को वा मनस्वी स्वीकुर्यात्। लोकेऽपि भगवतो महादेवस्य नीलग्रीवत्वं जटावत्वं चोपवर्ण्यत एव। अत एव न किल जानीमः कथं वा नास्ति वेदे मूर्तिप्रतिपादनमिति वचः श्रद्धेयतामापद्यत इति।

एवं भगवतो विष्णोरपि प्रतिमा श्रूयते वेदे। यथा——

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।**
**समूह्ळमस्य पांसुरे** ॥

( सा० भा० ता० ) विष्णुस्त्रिविक्रमावतारधारी इदं जगदुद्दिश्य विचक्रमे विशेषेण पादक्रमणं कृतवान्। त्रिधा त्रिभिः प्रकारैः पादं निदधे स्वकीयं पादं स्थापितवान्। अस्य विष्णोः पांसुरे धूलियुक्तेपादस्थाने समूह्ळं इदं सर्वं जगदन्तर्भूतम्।

एकेनाप्येतेन वचनेन सिध्यति भगवतो मूर्तिमत्वं विष्णोः पदयुक्तः पदानि निदधानश्च यः स किल नैव मूर्तिमानिति कथं कश्च वा स्वीकुर्यात्। किं चास्येन्द्रेण सह सख्यमपि तत्रैव प्रतिपाद्यते **इन्द्रस्य युज्यःसखा** इति। एवं **विष्णुर्गोपा अदाभ्यः** इति सकलजगत्पालकत्वमनभिभवनीयत्वं चोच्यते। न चाप्येवमुपवर्णितस्य मूर्तिशून्यत्वं कथंचिदपि सिद्धान्तयितुं शक्यम्। तदवश्यं स्वीकार्यमस्ति विष्णोरपि मूर्तिमत्ववचनं वेद इति।

प्रतिपाद्यते च भगवतः सूर्यस्यापि मूर्तिराम्नाये । यथा च लोके स सप्ताश्वरथारूढ इत्युच्यते यथा च तदीयानामश्वानां हरिद्वर्णत्वमाख्यायत एवमेव श्रूयते वेदे । तथाहि—( ऋ. मं १ अ. ९ सू. ५० )

अयुक्त सप्तशुन्ध्युवः सूरो रथस्य नप्त्यः
ताभिर्याति स्वयुक्तिभिः ॥ ॥ इति ॥

( सा. भा. ता. ) सूरः सूर्यः शुन्ध्युवः शोधिकाः अश्वस्त्रियः तादृशीः सप्त सप्तसंख्याकाः ।अयुक्त स्वरथे योजितवान् । कीदृश्यः । रथस्य नप्त्यः न पातयित्र्यः । याभिर्युक्ताभिः रथो याति न पतति तादृशीभिः ॥ इति ॥

रवेरश्वानां हरिद्वर्णत्वं तु भद्रा अश्वा हरितः सूर्यस्येति सौरसूक्ते स्पष्टम् । सप्त त्वा हरितो रथे वहन्ति देव सूर्य इत्यन्यत्र च श्रूयते । तत्सिध्यत्येव भगवतो भानोर्मूर्तिमत्त्वं वेदानुसारेणेति प्रमाणमेव वचः केषांचिदभियुक्तानाम् । अत एव सप्ताश्वरथमारूढ इति ध्यायते भगवान्भानुर्वैदिकमतानुयायिभिः ।

क्रमशः ।

---

# कृतज्ञता ।

सहृदयग्राहकाः विरलाः खलु महाशया आत्मानमिव परानपि पश्यन्ति विरला एव च सनातनं धर्ममुद्धर्तुं प्रयतमानास्तत्रात्मनो हानिमपि संवृत्तां न गणयन्ति विरलाश्च जनपदसमुद्धरणाय निबद्धपरिकराः समुपनतं दैवदुर्विपाकान्महीयांसमपि दुःखमनुभूय न त्यजन्ति क्षणमप्यात्मनो व्यवसायम् । एवं विधैश्च महाभागैः संघटितः क्षणमपि संसर्गो भूयिष्ठं भावयति भव्यं भुवने । किं पुनश्चिरायाशिथिलं च संघटितः ।

ये खल्वत्र विरला इत्यस्मन्मतं तेष्वेवान्तर्भवितुमर्हति तत्रभवान्कल्याणभाजनममन्दव्यवसायो विविधविद्याविलासिनीविहारवैभवविभूषितः श्रीमान्मोदवृत्तयन्त्रालयाध्यक्ष आर्यधर्मरहस्यार्यधर्मदर्पणमोदवृत्तादीनां सम्पादकः काशीनाथशास्त्रिमहाशयः। विदितमेवेदं संस्कृतचन्द्रिकाग्राहकाणां यत्कोल्हापुरमुपागता संस्कृतचन्द्रिका वाईक्षेत्रे श्रीकाशिनाथशास्त्रिणः प्रशस्यतमं संश्रयमाप्तवतीति। तथाभूतायाश्चैतस्याः पञ्चमास्युत्तर एको वत्सरः समतीतः। कं वा नाजीजन्मोदमेतद्वृत्तं यत्संश्रितः संस्कृतचन्द्रिकया मोदवृत्ताध्यक्ष इति। केन वा ततःप्रभृति नास्यामुद्रणसौष्ठवमवर्णि। सर्वथा मोदवृत्तसम्पादकमवलम्ब्य प्रकाशमाना खल्वेषा कामप्यावहदक्षरविभूतिम्। नूनं तत्र मुद्यमाणायामेतस्यामात्मनःप्रियतमेभ्योपि व्यवसायेभ्यः समधिकतरं व्यधासीत्स्नेहं सम्पादको मोदवृत्तस्य।

किन्तु दूरतरं कोल्हापुराद्वाईक्षेत्रमतः संभवत्यामात्मनः सामक्ष्ये मुद्रणव्यवस्थायां न परोक्षे तस्या निष्पादनं युक्तमिति विभाव्याकलय्य चास्याः कुतोऽपि केषांचिन्महोदाराणां ग्राहकमहाभागानां करुणानिबन्धनं दैवविपाकं गत्यन्तराभावात्सांप्रतं कोल्हापुर एव श्रीसमर्थप्रसादनाम्नि यन्त्रालये मुद्रयितुमुपाक्रमे। नूनमेष सुदुःसहो मोदवृत्तविरहः संस्कृतचन्द्रिकायाः। किन्त्वाशास्महे समर्थाश्रयमुपागतेयं कथञ्चिदपि समुत्तरिष्यति गुरुतरमपि सद्वियोगदुःखमिति।

**अतःपरं कोल्हापुर एव सर्वैरपि ग्राहकैर्मूल्यादिकं प्रेष्यम्।** मोदवृत्तसम्पादकसमीपे प्रेरिते हि तस्मिन्नतः परं निरर्थको धनप्रापणाशुल्कव्ययः सम्पद्येतेति प्राथ्र्यते। अन्ते च श्रीकाशिनाथशास्त्रिमहाशयेभ्यः सहस्रशो धन्यवादानुद्घोष्य महाभागाः समेधतामनुदिनमधिकाधिकं चन्द्रिकायां प्रेम यथा चायमतिदुःसहो भवद्भिरहो नैनां व्याकुलीकुर्यात्तथा संस्मर्यतां सम्भाव्यतां च तपस्विन्येषेति च सविनयाञ्जलिबन्धं सानुरागोन्मेषं च तान्सम्प्राथ्र्यते। सर्वथा हि चिरकृतज्ञाः स्म एतेषु। इति शिवम्।

---

# श्रीशिवराजविजयः ।

( पूर्वतोनुवृत्तः )

तस्मिन्पर्वते आसीदेको महान्कन्दरस्तस्मिन्नेव महामुनिरेकः समाधौ तिष्ठतिस्म । कदा स समाधिमङ्गीकृतवानिति कोऽपि न वेत्ति । ग्रामणीग्रामीणग्रामाः[1] समागत्य मध्ये तं पूजयन्ति प्रणमन्ति स्तुवन्ति च । तं केचित्कपिल इत्यपरे लोमश इतीतरे जैगीषव्य इत्यन्ये च मार्कण्डेय इति विश्वसन्ति स्म। स एवायमधुना शिखरादवतरन्ब्रह्मचारिबटुभ्यां दृष्टः ।

अहो प्रबुद्धो मुनिः प्रबुद्धो मुनिरित एवागच्छति सत्कार्योऽयं सत्कार्योऽयमिति तौ सम्भ्रान्तौ बभूवतुः ।

अथ समापितसन्ध्यावन्दनादिक्रिये समायाते गुरौ तदाज्ञया नित्यनियमसम्पादनाय प्रयाते गौरबटौ छात्रगणसहकारेण प्रस्तुतासु च स्वागतसामग्रीषु इत आगम्यतां सनाथ्यतामेष आश्रम इति सप्रणाममभिगम्य वदत्सु निखिलेषु योगिराज आगत्य तन्निर्दिष्टकाष्ठपीठं भास्वानिवोदयगिरिमारुरोह उपाविशच्च ।

तस्मिन्पूज्यमाने योगिराडुत्थित इत्यायात इति चाकर्ण्य कर्णपरम्परया बहवो जनाः परितः स्थिताः सुघटितं शरीरं सान्द्रां जटां विशालान्यङ्गान्यङ्गारप्रतिमे नयने मधुरां गम्भीरां च वाचं वर्णयन्तश्चकिता इव संजाताः ।

अथ योगिराजं सम्पूज्य यावदीहितं किमप्यालपितुं तावत्कुटीरादश्रूयत तस्या एव बालिकायाः करुणरोदनम् ।

ततः किमिति कुत इति कयामिति च पृच्छापरवशे योगिराजे ब्रह्मचारिगुरुणा बालिकां सान्त्वयितुं श्यामबटुमादिश्य कथितम् ।

---

१ ग्रामाधिपानां ग्रामनिवासिनां जनानां च समूहाः ।

भगवन् श्रूयतां यदि कुतूहलम् । ह्यः सम्पादितसायन्तनकृत्येऽत्रैव कुशास्तरणमधिष्ठिते मयि परितः समासीनेषु च्छात्रवर्गेषु धीरसमीरस्पर्शेन मन्दंमन्दमान्दोल्यमानासु व्रततीषु[1] समुदिते यामिनीकामिनीचन्दनबिन्दाविन्दौ कौमुदीकपटेन[2] सुधाधारामिव वर्षति गगनेऽस्मन्नीतिवार्तां शुश्रूषुष्विव मौनमाकलयत्सु पतगकुलेषु कैरव[3]विकाशहर्षप्रकाशमुखरेषु चञ्चरीकेषु[4] अस्पष्टाक्षरं कम्पमाननिश्वासं श्लथत्कण्ठं घर्घरितस्वनं चत्किारमात्रं दीनतामयमत्यवधानश्रव्यत्वादनुमितदाविष्ठतं क्रन्दमश्रौषम् ।

तत्क्षणमेव च कुत इदं किमिदमिति दृश्यतां ज्ञायतामित्यादिश्य च्छात्रेषु विसृष्टेषु क्षणानन्तरं छात्रेणैकेन भयभीता सवेगमत्युष्णं दीर्घं च निःश्वसन्ती मृगीव व्याघ्राघ्राताऽश्रुप्रवाहैः स्नाता कन्यकैकाङ्के निधाय समानीता ।

चिरान्वेषणेनापि तस्याः सहचरी सहचरो वा न प्राप्तः । तां चन्द्रकलयेव निर्मितां नवनीतेनेव रचितां मृणालगौरीं कुन्ददतीं सक्षोभं रुदतीमवलोक्यास्माभिरपि न पारितं निरोद्धुं नयनबाष्पाणि ।

अथ कन्यके मा भैषीः पुत्रि त्वां मातुः समीपे प्रापयिष्यामः दुहितः खेदं मा वह भगवति भुङ्क्ष्व किंचित् पिब पयः एते तव भ्रातरो यत्कथयिष्यसि तदेव करिष्यामो मा रोदनैः प्राणान्संशयपदवीमारोपय मा स्म कोमलमिदं शरीरं शोकज्वालावलीढं कार्षीरिति सहस्रधा बोधेन कथमपि संबुद्धा किंचिद्दुग्धं पीतवती ।

ततश्च मया क्रोडे[5] उपवेश्य बालिके कथय क्व ते पितरौ कथमस्मिन्नाश्रमप्रान्ते समायाता किन्ते कष्टं कथमरोदीः किं वाञ्छसि किं कुर्म इति पृष्टा मुग्धतयाऽपरिकलितवाक्पाटवा भयेन विशिथिलवचनविन्यासा लज्जयाऽतिमन्दस्वरा शोकेन रुद्धकण्ठा चकितचकितेव कथंकथमप्यबोध-

---

१ लतासु । २ मिषेण । ३ कमलविशेषाः कैरवाख्याः । ४ भ्रमरेषु ।
५ क्रोडः स्त्रीं सूकरे ना न पुमानंकरक्षसोरिती मेदिनी ।

यदस्मान्यदेषाऽस्मिन्नेदीयस्येव ग्रामे वसतः कस्यापि ब्राह्मणस्य* तनयास्ति। एनां च सुन्दरीमाकलय्य कोऽपि यवनतनयो नदीतटान्मातु‡र्हस्तादाच्छिद्य क्रन्दन्तीं नीत्वाऽपससार। ततः कञ्चिदध्वानमतिक्रम्य यावदसिधेनु[2]कां सन्दर्श्य विभीषिकयाऽस्याः क्रन्दनकोलाहलं शमयितुमियेष तावदकस्मात्कोऽपि कालकम्बल इव भल्लूको वनान्तादुपाजगाम। दृष्ट्वैव यवनतनयोऽसौ तत्रैव त्यक्त्वा कन्यकामिमां शाल्मलितरुमेकमारुरोह विप्रतनया चेयं पलाशप[3]लाशिश्रेण्यांप्रविश्य घुणाक्षरन्यायेनेत एव समायाता यावद्भयेन पुना रोदितुमारब्धवती तावदस्मच्छात्रणैवानीतेति।

तदाकर्ण्य कोपज्वालाज्वलित इव योगी प्रोवाच विक्रमराज्येऽपि कथमेष पातकमयो दुराचाराणामुपद्रव इति। ततः स उवाच महात्मन्काधुना विक्रमराज्यम्। वीरविक्रमस्य तु भारतभुवं विरहय्य गतस्य वर्षाणां सप्तदशशतकानि व्यतीतानि। काधुना मन्दिरे मन्दिरे जयध्वनिः क सम्प्रति तीर्थे तीर्थे घण्टाघोषः क्वापि मठे मठे वेदाध्ययनम्। अद्य हि वेदा विच्छिद्य वीथिषु विक्षिप्यन्ते धर्मशास्त्राण्युद्धूय धूमध्वजे[4]षु ध्मायन्ते पुण्यानि पिष्ट्वा पानीयेषु पात्यन्ते भाष्याणि च भ्रंशयित्वा भ्राष्ट्रे[5]षु भर्ज्यन्ते। क्वचिन्मन्दिराणि भिद्यन्ते क्वचित्तुलसीवनानि च्छिद्यन्ते क्वचिद्दारा अपह्रियन्ते क्वचिद्धनानि लुण्ठ्यन्ते क्वचिदार्तनादाः क्वचिद्रुधिरधाराः क्वचिदग्निदाहः क्वचिद्गृहनिपात इत्येव श्रूयतेऽवलोक्यते च परितः।

तदाकर्ण्य दुःखितश्चकितश्च योगिराडुवाच—कथमेतत् ह्य एव पार्वतीयाञ्छकान्विनिर्जित्य महता जयघोषेण स्वराजधानीमायातः श्रीमानादित्यपदलाञ्छनो वीरविक्रमः। अद्यापि तद्विजयपताका मम चक्षुषोरग्रत इव समुद्धूयन्तेऽधुनापि तेषां पटहानक गोमुखानां निनादः कर्णशष्कुलीं पूरयतीव तत्कथं कथयथ वर्षाणां सप्तदशशतकानि व्यतीतानीति।

---

*वस्तुतस्तु न ब्राह्मणतनया किन्तु ब्राह्मणमेव पितरं जानती तदग्रे स्फुटीभविष्यति

‡वस्तुत एषा मातृविहीना किन्तु यां मातेति जानाति तद्धस्तादिति तात्पर्यम्।

२ खंजीर इति लोके। ३ पलाशी वृक्षः। ४ अग्निषु। ५ भर्जनपात्रेषु

ततः सर्वेषु स्तब्धेषु चकितेषु च ब्रह्मचारिगुरुणा प्रणम्य कथितं भगवन्न-द्धसिद्धासनैर्निरुद्धनिःश्वासैः प्रबोधितकुण्डलिनीकैर्विजितदशेन्द्रियैरनाहत-नादतन्तुमवलम्ब्याज्ञाचक्रं संस्पृश्य चन्द्रमण्डलं भित्वा तेजःपुञ्जमाविग-णय्य सहस्रदलकमलस्यान्तः प्रविश्य परमात्मानं साक्षात्कृत्य तत्रैव रममाणैर्मृत्युञ्जयैरानन्दमात्रस्वरूपैर्ध्यानावस्थितैर्न ज्ञायते कालवेगः। तस्मिन्समये भवता ये पुरुषा अवलोकितास्तेषां पञ्चाशत्तमोऽपि पुरुषोऽधुना नावलोकयिष्यते। अद्य न तानि स्रोतांसि नदीनां न सा संस्था नगराणां न साऽऽकृतिर्गिरीणां न सा सान्द्रता विपिनानाम्। किमधिकं कथयामो भारतवर्षमधुनाऽन्यादृशमेव सम्पन्नम्।

इदमाकर्ण्य किंचित्स्मित्वेव परितोऽवलोक्य च योगी जगाद—सत्यं न लक्षितो मया समयवेगः। यौधिष्ठिरे समये समाहितोऽहं वैक्रमे समय उदस्थां पुनश्च वैक्रमे समये समाधिमाकलय्यास्मिन्दुराचारमये समये समुत्थितोऽस्मि। अहं पुनर्गत्वा समाधिमेव कलयिष्यामि किन्तु तावत्सं-क्षिप्य कथ्यतां का दशा भारतवर्षस्येति।

तत्संश्रुत्य भारतवर्षीयदशासंस्मरणजातशोको हृदयस्थप्रसादसंभारो-द्विरणश्रमेणेवातिमन्थरेण स्वरेण मास्म धर्मध्वंसनघोषणैर्योगिराजस्य धैर्य-मवधीरयेति कण्ठं रुन्धतो बाष्पानविगणय्य नेत्रे प्रमृज्योष्णं निःश्वस्य कातराभ्यामिव नयनाभ्यां परितोऽवलोक्य च ब्रह्मचारिगुरुः प्रवक्तुमारभत। भगवन्दम्भोलिघटितेयं रसना या दारुणदानवोदन्तोदीरणैर्न दीर्यते। लोह-सारमयं हृदयं यत्संस्मृत्य यावनान्परःसहस्रान्दुराचाराञ्छतधा न भिद्यते भस्मसाच्च न भवति। धिगस्मान्येऽद्यापि जीवामः श्वसिमो विचराम आत्मन आर्यवंश्यांश्चाभिमन्यामहे।

उपक्रममिममाकर्ण्यावलोक्य च मुनेर्विमनायमानं हरिद्राद्रवक्षालितमिव वदनं निपतद्वारिबिन्दुनी नयने अञ्चितरोमकञ्चुकं शरीरं कम्पमानमधरं भज्यमानं च स्वरमवागच्छत् सकलानर्थमयः सकलपापमयः सकलवञ्चना-

# कान्यकुब्जलीलामृतम्

सदैव शुक्लारुणपीतवर्ण-
पाटीरपङ्काह्वतसर्वभाल ।
आभूतलालम्बिदुकूलधारि-
न्हे कान्यकुब्ज द्विज ते नमोऽस्तु ॥१॥

बहूनि गायन्ति यशस्त्वदीयं
पत्राणि* ते वंशधरैः कृतानि ।
एकस्य तन्मे मितभाषिणस्त्व-
मिदं क्षमस्व स्तवचञ्चलत्वम् ॥२॥

भवन्ति ते धन्यतमा द्विजा ये
त्वदीयसम्बन्धमवाप्नुवन्ति ।
व्रजन्ति ते ब्रह्मपदं तथान्ते
त एव वंशं निजमुन्नयन्ति ॥३॥

अहो दयालुस्त्वमतः परं किं
यथेहितं यद्द्रविणं गृहीत्वा ।
निन्द्यानपि त्वं विमलीकरोषि
तदीयकन्याकरपीडनेन ॥४

स्वगोलजानेव यदा सदा त्वं
किं धाकरै†स्तैरिति धिक्करोषि ।
तदाऽन्यजातीयजनास्त्वदीयाः
के नाम वन्द्यैरपि वन्दनीयाः ॥५

शास्त्रीयवार्तासु भवत्यहो ते
मुखे रसज्ञा किल कीलितेव ।

---

* समाचारपत्राणि † धाकरैः प्राकृतसंज्ञाविशेषैः ।

स्थिते तु वैवाहिकभाषणे त्व-
माविष्करोष्यद्भुतवाक्पटुत्वम् ॥६
शेषस्तदा किं रसनासहस्रं
स्वीयं महीदेव ददाति तुभ्यम् ।
येन त्वदुक्तिप्रखरप्रवाहै-
स्तिरस्क्रियन्ते बहु वाग्मिनोऽपि ॥७
मन्ये तदैव त्वयि वासवोऽपि
न्यासीकरोत्यक्षिचयं स्वकीयम् ।
न चेन्निमेषेण कथं परेषां
दोषानसंख्यांश्च समीक्षसे त्वम् ॥ ८
कन्याविवाहे समुपस्थिते त्व-
मृणं गृहाभूषणविक्रयं च ।
कृत्वा कृतार्थं मनुषे नृजन्म
विलक्षणौदार्यमिदं त्वदीयम् ॥९
पुनः पुनः पुत्रवधूपितुश्च
धनानि हृत्वाऽपि धरासुरेन्द्र ।
निरन्तरं तस्य कदर्थनायां
न शोभते ते रसनोपयोगः ॥१०
गुणान्वितं द्रव्ययुतं विहाय
हा भूसुर त्वं कुलपक्षपातिन् ।
मूर्खाय निःस्वाय वराय कन्यां
प्रदाय तज्जन्म वृथाकरोषि ॥११
किं विद्यया किं तव कर्षणेन
व्यापारवृत्त्या किमु चापि भृत्या ।
जयत्यहो स श्वशुरालयस्ते
त्वं कल्पवृक्षीयसि यं सदैव ॥१२
निःशेषनिन्द्यव्यसनेषु नित्यं
शनैः शनैर्नाशितवित्तजातः ।

त्चिरेण जागर्षि चमत्कृतः सन्
विद्राव्य दीर्घालसघोरनिद्राम् ॥१३

यत्नेन केनापि तदा कथंचित्
करोपि कष्टेन वयोऽतिपातम् ।
तथापि हाहा न जहासि शुष्कं
गभीरगर्वं वरवंशजातम् ॥१४

अलं विवाहादिविधिस्तवेन
हे कान्यकुब्जावनिदेव देव ।
अतः परं पश्य निजान्यलीलां
श्रुतिस्मृतिस्थापितधर्मशीलाम् ॥१५

ते वाजपेयादिसवाः कृतास्तै-
रेकद्विवारं तव पूर्वजैस्तु ।
पारावतच्छागलमत्स्यमेधा
मखा गृहे ते प्रभवन्त्यनेकाः ॥१६

स्वभ्रातृगेहेऽपि यदाऽप्रसन्नः
पानीयपानेऽपि शिरो धुनोषि ।
वेश्याजनस्याप्यधरामृतेन
कृतार्थतां यासि यदाऽसि तुष्टः ॥१७

समाजमुख्यास्तव ये सभासु
तेषां चरित्रं भुवनातिशायि ।
विहाय कांश्चिद्गणयन्ति नान्यां-
स्ते कान्यकुब्जद्विजनामयोग्यान् ॥१८

विशिष्टविद्यापरिशीलनेन
बुद्धेर्विकाशो भवतीति नीतिः ।
एषामहो त्वद्विदुषामुदार-
भावः परं सङ्कुचतीव भाति ॥१९

नैवं करिष्यामि वृथाऽन्ननाशं
नैवं ग्रहिष्यामि धनं विवाहे ।
उच्चैरिति त्वं परिषत्सु नित्यं
करोषि भूदेव दृढां प्रतिज्ञाम् ॥२०

परन्तु तत्तान्नियमावलीनां
निवेश्य पत्रं गृहपेटिकायाम् ।
उपस्थिते विप्र विवाहकाले
सर्वं क्षणाद्विस्मरसीति चित्रम् ॥२१

अध्यक्षतां किं बहुना त्वदीयां
गृह्णन्ति ये तेऽपि तदा पलाय्य ।
स्वलम्बिलाङ्गूलमितस्ततश्च
गूहन्ति भीता इव भो द्विजेन्द्र ॥२२

अपव्ययस्ते भवति द्विजेश
किं नातिनिन्द्यव्यसनेषु नित्यम् ।
परं स्थिते सर्वसमाजकार्ये
पुरस्त्वमङ्गुष्ठशिरः करोषि ॥२३

त्वयि प्रसन्ने च तथाऽप्रसन्ने
हानिः समाना भवति द्विजानाम् ।
तुष्टः समाकर्षसि वित्तराशिं
रुष्टो व्यथां त्वं हृदये ददासि ॥२४

मृगेन्द्रतां यल्लभते बलेन
सिंहो वने तत्तु यथार्थमेव ।
कुतस्तदा विप्र वदत्वमेव
महीसुरेन्द्रत्वमिदं त्वयाप्तम् ॥२५

का नाम सन्ध्या प्रणवोऽपि सम्यङ्-
नोच्चार्यते ते स्वजनैरनेकैः ।

महीसुरश्रेष्ठ बलात्तथापि
स्वश्रेष्ठतां त्वं विजहासि नैव ॥२६
तदस्ति किं त्वं कथय द्विजेन्द्र
मूर्खोऽपि सन्स्थापयसीह येन ।
निजोच्चतामन्यमहीसुरेभ्यः
स्वगोत्रजेभ्योऽपि विवाहकाले ॥२७
यशः पवित्रं निजपूर्वजानां
विभाव्यते किं भवता सगर्वम् ।
निवेदय त्वं शपथेन तेषां
के के गुणा आत्मनि संगृहीताः ॥२८
त्वं नाममात्रग्रहणेन तेषां
श्रीहर्षमिश्रादिमहाजनानाम् ।
समीहसे पूज्यपदं ग्रहीतु-
महो विमोहस्य विजृम्भणं ते ॥२९
आस्ते यथोक्तैव दशा त्वदीया
तथापि केचिद्भुवि कान्यकुब्जाः ।
सन्त्येव शुद्धाचरणाश्च येषां
सन्दर्शनं पुण्यकरं नराणाम् ॥३०
आस्तामिदं तत्तव लीलयाऽलं
पारं व्रजेत्कः कथनेन तस्याः ।
अतोऽधुना साञ्जलिबन्धमेत-
द्यदुच्यते तच्छृणु भूसुरेन्द्र ॥३१
दिनानि ते तानि गतानि नातः
शुष्काभिमानेन सुवंशजेन ।
भविष्यति त्वत्कुशलं कदापि
विचिन्तयान्तःकरणे त्वमेव ॥३२
त्यजालसं शीलय विप्र विद्यां
विधेहि दुष्टव्यवहारनाशम् ।

उदारतां बन्धुषु दर्शय त्वं
कुरुष्व कार्यं सुजनादृतं च ॥३३

महत्वमायाति हि मानवेषु
सुविद्ययैवात्र मनुः प्रमाणम् ।
मन्दादरस्तद्वचने यदि त्वं
तदा न किं हन्त हतः स्वधर्मः ॥३४

मत्संमुखेऽसौ किल कः पदार्थो
विभावनेयं भवतश्च माऽभूत् ।
यदस्ति किञ्चिद्वदने मदीये
ग्राह्यं गृहाण त्यज सर्वमन्यत् ॥३५

त्वत्कीर्तिगाने चरितामृतस्य
पाने रता विप्र पुराविदोऽपि ।
जानन्ति के नो तव सप्रमाणं
यशः पुराणादिषु वर्ण्यमानम् ॥३६

न विस्मरातश्चरितं पवित्रं
शाण्डिल्यकात्यायनकाश्यपानाम् ।
अद्यापि विद्याविभवेन येषां
विभूष्यते भारतभूमिखण्डः ॥३७

किं विस्तरेण बहुनेति हृदि प्रधार्य
हे कान्यकुब्जमहिदेव नमस्करोमि ।
स्वस्यैव मामपि कुलस्य करीररूपं*
जानीहि सादरमयं विनयो मदीयः ॥३८

इति

महावीरप्रसादद्विवेदिनः ( झांशी. )

---

* वंशाङ्कुररूपमित्यर्थः ।

### सानन्दमङ्गीकारः ।

पण्डितलक्ष्मीनारायणशिवप्रसादेन जयपुरात् प्रेरितं **वसन्तशतकं** प्राप्तम् । तत्सानन्दमङ्गीक्रियते । अचिरादेवैतच्चन्द्रिकायां समालोचयिष्यामः । **विद्योदयाख्यस्य** संस्कृतमासिकपत्रस्यापि सप्तविंशतिवत्सरस्य दशमसंख्या प्राप्ता सप्रमोदमुररीक्रियते ।

---

## समालोचना ।

**प्रबुद्धभारतम्** [ Awakened India ] इंग्रेजीभाषामयं मासिकपत्रमेतत् । अहो भाग्यमद्वैतविद्याया यदाधुनिका नव्यशिक्षिता अप्येतामनुशीलयन्त्युपदिशन्ति च परेभ्यो नयन्ति च ब्रह्मानन्दमयत्वमन्तराणि विदेशीयानाम् । इंग्रेजीभाषया च प्रतिपाद्य भारतवर्षीयाणां विद्यारहस्यानि प्रकाश्य च तानि मासिकपत्रादिभिरपनयन्ति गाढं तमोऽज्ञानप्रभवम् । प्रबुद्धभारतमप्येतदेवंविधमेव । अनेन चायासमन्तरैवावबुध्येत भारतवर्षीयाणां प्रबुद्धत्वं विदेशीयैः । यथा रमणीनां सौन्दर्यं च कुलीनत्वं च सौशील्यं चैकत्र समुदितमतिमात्रमानन्दयति मनो भर्तुरुत्पादयति चाविनश्वरां प्रीतिमेवं मासिकपत्रिकाणामपि पत्राणां मनोहरत्वमक्षराणां हृदयङ्गमत्वं भाषायाश्च सौकुमार्यमिव प्रसन्नत्वं विषयाणां च प्रगल्भत्वं सत्सम्पादकजन्यत्वं चेत्यादि । प्रकृतं तु मासिकपत्रं पूर्वं सर्वथैवमेवासीत् । साम्प्रतं तु तस्याकृतिरक्षरविन्यासः पत्राणि च परिवृत्तानि । युक्तं चैतद्यदाह कालिदासः **नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेणेति** । प्राचीनो ह्यस्य सम्पादको ब्रह्मभूयं प्राप्तस्तेन चास्य महती हानिः संवृत्ता । यदेतत्पुरा मद्रविभागे प्राकाश्यत तत्सम्प्रति पश्चिमोत्तरप्रदेशे प्रकाश्यते । तदस्य साम्प्रतं दूरगमनपरिश्रान्तस्येव म्लानिः कियन्तं कालमनुरूपैव । पूर्वमेतत्परस्यैव मुद्रायन्त्रेऽमुद्यत सम्प्रति प्रबुद्धभारतं नाम मुद्रायन्त्रमेव

निर्मितम्। अतः खलु बलीयसी प्रत्याशा यत्पत्रिकेयमचिरादेव बाह्यांगसौन्दर्येणापि प्रमोदयेद्रसिकानां मनांसीति। श्रीविवेकानन्दस्वामिप्रभृतयश्चास्याः सम्पादका इत्येतावतैवास्या विषयविन्यासादिष्वतिमनोहरत्वमनुमातुं शक्यम्। तथाऽप्यचिरादेवेयमात्मनः पूर्ववैभवमवाप्यानन्दयताद्ग्राहकाणां चेतांसीत्याशंसामहे। एतच्च ग्रहीतुमभिलष्यद्भिः पश्चिमोत्तर प्रदेशे [ N. W. P. ] अलमोडा [ Almora ] नगरे प्रबुद्धभारतकार्याध्यक्षः पत्रेणज्ञाप्यः। अन्तरङ्गं त्वस्य पूर्ववन्मनोहरतममेव। सम्भाव्यते चातोऽधिकां मनोहरतां तदुपयास्यतीति॥

---

**श्रीमद्भगवद्गीतायाः समन्वयभाष्यम्**--भाष्यमिदं कलिकातानिवासिन्या नवविधानमण्डल्या उपाध्यायेन श्रीगौरगोविन्दशर्मणा पण्डितप्रवरेण प्रणीय खण्डश उद्भास्यते। उपनतमस्मत्सविधेस्य खण्डद्वयम्। पुस्तकेऽस्मिन्स्थूलाक्षरैः श्रीमद्भगवद्गीतापद्यानि सूक्ष्माक्षरैश्च भाष्यं मुद्रितम्। प्राचीनाः किल तत्तन्मताचार्याः स्वस्वमतानुरोधेनेदं गीताशास्त्रं व्याचख्युः। तेन खलु पारमार्थिकोऽस्यार्थो दुरवबोधः संवृत्त इत्याकलय्य श्रीगौरगोविन्दरायमहाशयः कमपि सरलं पन्थानमवलम्ब्य शास्त्रमेतद्व्याचख्यौ। भाषासरणिरेतस्यातीव सरला सुबोधा सुमधुरा च। एतद्भाष्यावलोकनेन च प्रणेतुः सकलशास्त्रपारङ्गमत्वं वेदाब्धिपारदृश्वत्वं च पदे पदे स्फुटीभवति। एतत्परं प्रमोदस्थानं यदाधुनिकैरपि शास्त्रिभिर्गीतासदृशानां सकल शास्त्ररहस्यभूतानामाम्नायकल्पानां प्रबन्धानां विवरणे प्रयासः क्रियते। अस्य चायं प्रयासः प्रायेण सफलीभूत इति ब्रूमः। अधुनातनेष्वेवंविधं भाष्यं निर्मातुं सुविरला एव प्रभवेयुः। क्वचित्तु श्रीशङ्करभगवत्पूज्यपादाचार्यैः सहोद्भावितो विरोधो नैवास्माकं मनः प्रीणयति। विशेषतस्तु भाष्यमिदं चरमसंख्याप्राप्त्युत्तरं समालोचयिष्यामः। मनोहरं खल्वेतदवश्यं संप्राप्यं जिज्ञासुभिरिति ब्रूमः। मूल्यादिकं चन्द्रिकाया मलपृष्ठे द्रष्टव्यम्।

---

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

॥ श्रीगणेशाय नमः ॥

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

॥ मासावतरणिका ॥

विकासयति पङ्कजं वितनुते च शीतोद्गमं
करोति विमलं जलं हरति च क्लमं कामिनाम् ।
निरासयति नीरदाञ्जयति विस्तरं चन्द्रिकां
विरावयति षट्पदानपि समागतः कार्तिकः ॥

---

उद्भटश्लोकाः ।

उत्पत्तिर्जलधौ तुषारशिशिरा कान्तिः क्लमच्छेदिनी
वासो जह्नुसुताङ्गसङ्गशुचिनि स्थाणोर्जटाजूटके ।
एतस्मिंस्त्रितये तथापि न गतः सम्पूर्णतां चन्द्रमाः
पुंसां सत्यमिदं न जन्म न गुणा नोपाश्रयः सम्पदे ॥

ब्रह्मण्योऽपि ब्रह्मवित्तापहारी
स्त्रीयुक्तोऽपि प्रायशो विप्रयुक्तः ।
सद्वेषोऽपि द्वेषनिर्मुक्तचित्तो
धन्यो लोके जायते क्वापि कश्चित् ॥ *

---

* ब्रह्मण्यो ब्राह्मणेभ्यो हितः । अपिर्विरोधे । ब्रह्मवित्तस्य ब्राह्मणद्रव्यस्य अपहारी चौर इति विरोधः । तस्य च ब्रह्मवित् तापहारीति पदच्छेदे परिहारः । विप्रयुक्तो विरहीति विरोधो विप्रैर्युक्त इति परिहारः । सद्वेषो द्वेषेण सहित इति विरोधे सन् वेषो यस्येति परिहारः । विरोधाभासः ।

# श्रीमदप्पयदीक्षिताः ।

## प्रथमं परिशिष्टम् ।

( श्रीशृङ्गेरिमठाधीशश्रीमज्जगद्गुरुचरणानां प्रियशिष्येण श्रीवैद्यनाथशास्त्रिणा प्रेरितं पत्रम् )

श्रीकालहस्तिशरणशिवानन्दकर्मन्दि[1]विरचिते आत्मार्पणस्तुतेः सप्तमश्लोकव्याख्याने वक्ष्यमाणं श्रीमदप्पयदीक्षितानां जननचरितं दृश्यते ।

उक्तं च श्रीनीलकण्ठमखिना

कृतदीक्षोऽघोरमखे कुलकूटस्थो भरद्वाजः ।
विद्येश्वरेषु कश्चन पितामहो न इति विस्रम्भः ॥ इति ॥
श्रीकण्ठोऽवततार यस्य वपुषा कल्क्यात्मनेवाऽच्युतः
श्रीमानप्पयदीक्षितः स जयति श्रीकण्ठविद्यागुरुः ॥ इति च॥

ज्योतिर्विदस्त्वेवमाहुः—

वीणातत्वज्ञसंख्यालसितकलिसमाभाक्प्रमाती च वर्षे
कन्यामासे तु कृष्णप्रथमतिथियुतेऽप्युत्तरप्रोष्ठपार्क्षे ।
कन्यालग्नेऽद्रिकन्यापतिरमितदयाशेवधिर्वैदिकेषु
श्रीगौर्यै प्राग्यथाहस्म समजनि विरिञ्चीशपुर्यां कलेशः ॥

**अस्यार्थः**—वीणातत्वज्ञेति पञ्चाक्षराणि तत्र ज्ञकारोऽनर्थकः । प्रातिलोम्येन तयुक्तवकारस्य चतुःसहस्रसंख्या । केवलतकारस्य षट्शतम् । णा इत्यस्य पञ्चाशत् । वी इत्यस्य चतुःसंख्या । आहत्य चतुःपञ्चाशत्संयुतषट्शतोत्तरचतुःसहस्रसंख्याके ( ४६५४ ) कल्यब्दे प्रमाती च वर्षे कन्यामासे कृष्णपक्षे प्रथमातिथौ उत्तरप्रोष्ठपदनक्षत्रे कन्यालग्ने **श्रीकलेशः** श्रीशिवावरणस्थाष्टविद्येश्वराणां मध्ये सप्तमस्थानाधिपः श्रीकण्ठविद्येश्वर इत्यर्थः । प्राक् कल्पान्तरे श्रीपरमेश्वरो वैदिकेषु अमिततदयाशेवधिः सन् श्रीगौरीदेव्यै यथाऽऽहस्म अवादीत् तथैव विरिञ्चीशपुर्यां श्रीविरिञ्चिपुरे समजनि संजात इत्यर्थः । यद्यपि श्रीमद्दीक्षितचरणस्य पितृपितामहपरम्परायाः वासस्थानं आरणिसमीपवर्त्यडयप्पलमित्यग्रहार एव तथाप्यस्य

---

[1] कर्मन्दी सन्यासी.

विरिञ्चिपुरे मातुलमन्दिरमासीदिति किंवदन्त्यवगम्यते । जननमपि तत्रै-वासीदिति च श्रूयते । श्रीशिवोपदेशसूक्तिरुत्तरत्र विवरिष्यते ।

तेषां जन्मलग्नस्थितिस्तु—

लग्नेऽर्यमेन्दुसुतयोर्मकरे च मान्दौ (?)
मीने शशिन्यथ वृषे रविजे च राहौ ।
चापे गुरौ क्षितिसुते मिथुने तुलायां
शुक्रे शिखिन्यलिगते शुभलग्न एवम् ॥

एवं भूते शुभलग्ने श्रीकण्ठविग्रेशः उक्तरीत्या विरिञ्चिपुरे मातुलगृहे समजनीति पूर्वेण सम्बध्यते.

श्रीशिवसूक्तिस्तु शिवरहस्ये नवमांशेऽष्टमाध्याये कलिविशेषकथने श्रीभगवत्पादाद्यवतारसूक्तिर्यथा—

म्लेच्छाचारपराः सर्वे दरिद्राश्च द्विजातयः ।
भविष्यन्त्यल्पमतयो यतिस्तत्र भविष्यति ॥
शिवे मदंशसंभूतः शंकरः शांकरोत्तमः ।
चतुर्भिः सह शिष्यैश्च कलावप्यवतरिष्यति ॥
तस्मैचोपनिषद्विद्या मया दत्ता महेश्वरि ।
भूमौ पाषण्डषण्डानां खण्डनं स करिष्यति ॥
कलावेव महादेवि हरदत्ताभिधो द्विजः ।
अत्रैव दण्डनार्थाय भविष्यति महीतले ॥
दीक्षितोऽपि भवेत्कश्चिन्मदंशो भूसुरोऽम्बिके ।
भासुराचारनिरतः शैवच्छन्दोगवंशजः ॥
शैवशास्त्रं तदा भूमौ कुर्व विस्तारयिष्यति ।

इत्यादि प्रपञ्च्यते ।

इति ।

---

उपरितनैः श्रीवैद्यनाथशास्त्रिणो वचनैः श्रीमदप्पयदीक्षितानां जननावसरो निःसन्देहः समवगम्यते । स च कलेश्चतुःपञ्चाशदुत्तरषट्शताधिकचतुःसहस्रतमात्परोवत्सर एव । संप्रति च नवनवत्युत्तरनवशताधिकचतुःसहस्रतमः कल्यब्दः तत्रोपरितनवत्सराणां व्यवकलनायां पञ्चचत्वारिंशदुत्तरं

शतत्रयमवशिष्यते। तस्मिंश्च वर्तमानेषु शकाब्देषु विंशत्यधिकाष्टादशशतमितेपूर्णाङ्केन शिष्टाः पञ्चसप्तत्युत्तरचतुर्दशशतमिता वत्सराः। स एव श्रीमदप्पयदीक्षितानां जननकालः। यस्तु षष्ठ्यां संख्यायां हूणाब्दादिनिर्देशः सप्रमादिक एव।

नासीत्खलु पूर्वमस्माकं प्रत्याशा यद्दीक्षितचरणानां जन्मलग्नादिकमप्युपलभेमहीति किन्तु साम्प्रतं श्रीवैद्यनाथशास्त्रिमहाशयेन कृतार्थीकृताः स्मः सर्वमप्येतन्निवेदयता। यथा महात्मनांजीवनचरितमेवं तेषां जन्मलग्नादिकमप्यवश्यमवगन्तव्यम्। तेन हि कुतोऽस्यैवंविधं माहात्म्यमित्यवबोद्धुं शक्यते*। ज्यौतिषिकास्त्वेतदवगमनेन महान्तं लाभमधिगच्छेयुः शक्नुयुश्च ग्रहाणां माहात्म्यं प्राकृतानवबोधयितुम्।

यदप्यन्यद्दीक्षितचरणानां किञ्चिद्वृत्तं कदाचिदवगम्येत तत्सर्वं निवेदयिष्यामः। आगामिन्यां तु संख्यायां पण्डितराजस्य श्रीजगन्नाथस्य चरितमुपवर्णयिष्यते।

---

## मूर्तिपूजनम्।

( पूर्वतोऽनुवृत्तम् )

एवमन्येषामपि देवानामिन्द्रादीनां मूर्तयः श्रुतिभिरनुमीयन्ते। तत्रेन्द्रस्य यथा [ ऋ. १ मं. ३२ ऋ.९.]

---

* श्रीमद्दीक्षितचरणानां जन्मलग्नकुण्डली.

७ शु.
५
जन्मलग्नम्.
८ के.
र. ६ बु.
४
९ गु.
३ मं.
१०
१२ चं.
श. २ रा.
११
१

**अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन।**

[ सा. भा. ता. ] अयमिन्द्रो वज्रेण सम्पादितो यो महान् वधस्तेन वज्रेण वृत्रतरं वृत्रैरावरणैः सर्वाञ्शत्रूंस्तरति तं वृत्रमेतन्नामकमसुरं व्यंसं च्छिन्नबाहुर्यथा भवति तथा अहन् हतवान्।

अत्रेन्द्रस्य वज्रेण वृत्रहननोक्त्या तस्य करशालित्वमवश्यमभ्युपगन्तव्यम्। तेन चेन्द्रस्य मूर्तिमत्वमर्थादायातम्।

एवं तत्रैव पञ्चमो मन्त्रः

**अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत्।**

हे इन्द्र जघ्नुषो वृत्रं हतवतस्तवहृदि यदि भीरगच्छत्। न हतवानस्मीति बुध्या भयं प्राप्नुयात्। तर्हि अहेर्वृत्रस्य यातारं हन्तारं कमपश्यः त्वत्तोऽन्यं कं दृष्टवानसि। अत्रापीन्द्रस्य हृदयसत्वमभिधीयते। तेन चास्य मूर्तिमत्वमनुमातुं शक्यम्।

किमधिकं यदि वैश्वदेवस्यानुष्ठाता शिशुरपि निपुणं विचारयेत्तदा ब्रूयादस्त्येव मूर्तिवर्णनं वेद इति। तत्र हि भगवतो वन्हेः प्रतिपाद्यते मूर्तिः

**चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।** इति

अस्य चार्थस्तत्रैव स्मृतिवचनेन निर्दिष्टः

**सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः**
**त्रिपात्प्रसन्नवदन** इति।

एतच्च संक्षेपतः प्रोक्तम्। यदितु देवप्रतिमावर्णनस्य वेदेऽभावमाचक्षाणा विशालप्रज्ञाः सकृदप्येकमपि वेदमापाततोऽपि भाष्यानुसारेणालोचयेयुस्तदा नूनं न प्रलपेयुरनाचारोऽयं मूर्तिपूजनाचारः श्रुतिष्वनुपलब्धत्वादिति। किन्तु कुत एतावद्भागधेयं भगवतो वेदस्य येनायमेवंविधानां विशङ्कटमतीनां नयनमार्गमधिरोहेत्।

यद्येवमेषां देवतानां मूर्तिमत्वं वेदवचनैः पर्यवस्यत्येव तदा क्वेदानीं नास्ति वेदे मूर्तिवर्णनं नास्ति वेदे मूर्तिवर्णनमिति साभिमानं सानन्दं च समुन्नटन्ती नास्तिकतमानां नासा। सर्वथा विप्रलम्भकाः खल्वेते यत्किमपि

वा प्रतिपाद्य महीयसाऽऽडम्बरेण प्रतारयन्त्यज्ञान्। अहो विलास: पापीयस: कलिकालस्य। यदत्र लुप्यन्त आचारा: सन्त्यपि वस्तूनि च नास्तिभावमुपयान्ति।

स्मृतिषु तु सहस्रशो दृश्यते मूर्तिपूजनविधि: । तत्र मनुरायजे पितेति मनुर्वैयत्किञ्चिदवदादित्यादिभिश्च श्रुतिवचनै: स्फुटीकृतमाहात्म्येन प्रोक्तं भगवता मनुना यथा—( २।१७६ )

नित्यं स्नात्वा तत: कुर्याद्देवर्षिपितृतर्पणम्।
देवताभ्यर्चनं चैव समिदाधानमेव च ॥ इति ॥

अत्र देवतार्चनं विधीयते। तच्च नाम गन्धाद्युपचारैरभीष्टदेवताया: संभावनमेव। तच्च न हि प्रतिमां विना घटते। नचात्र निराकारोपासनमभिमतं मनोरिति भ्रमितव्यम्। प्रमाणाभावात्। अनधिकारिण्युपदेशस्यानर्हत्वाच्च। निराकारोपासनायां त्वधिकारी योग्येव। प्रकरणवशाच्चावगम्यते नैषा योगिनं प्रत्युक्तिरिति। तदवश्यमभ्युपेतव्यं मनोर्वचने देवतार्चनपदस्य मूर्तिसम्भावनापरत्वमेवेति। मनुसंहितागतानां च सर्वेषामप्यर्थानां वेदगतत्वस्य स्मृत्यारम्भे प्रतिज्ञानान्मूर्तिपूजनस्य वेदविहितत्वमनुमातुं शक्यमित्यपि विचक्षणा जानीयु: ।

एवं देवालये देवप्रतिमानां स्थापनं तासांच पूजनादिभि: केषांचिदुपजीवनमनादिकालात्प्रभृति प्रचलितमित्यपि मनुस्मृतिवर्तिभि: कैश्चन पद्यै: सुस्पष्टमवगम्यते । तथाचोक्तं तत्रैव–( ८।२४८ )

सीमासन्धिषु कार्याणि देवतायतनानि च ॥ इति ॥

अत्र न हि देवतायतनं नाम निराकारस्य जगत्पितु: सामक्ष्ये रोदनार्थमालयविशेष इति कोऽप्यार्यधर्मानुयायी स्वीकुर्यात् । किन्तु यत्र देवानां प्रतिमा: स्थाप्यन्ते तान्येव देवतायतनानीति ब्रूयात् । एवमनुशासच्च मनु: सुस्पष्टं ध्वनयति देवताप्रतिमानां पूजनमाचार एवेति । चिकित्सकान्देवलकान् ( ३।१५२ ) इत्यादौच देवलक शब्दं प्रयुञ्जानो भगवान्मनुर्घोषयति

घण्टाघोषं वेदविहितत्वं मूर्तिपूजनाचारस्य । देवलको हि देवताप्रतिमानामेव पूजयिता भवति । स चासति मूर्तिपूजनाचारे वन्ध्यापुत्रत्वमापद्येत । नापि वेदस्यासम्मतमाचारं मनुप्रभृतय आप्ता आचक्षीरन् । किमिव हि प्रयोजनं तेषां जगद्वञ्चनयेति वयं तु न प्रत्येतुं प्रभवामः ।

शाण्डिल्योपनिषदादौत्र सुस्पष्टमुपवर्ण्यते मूर्तिपूजनाचारः सत्र जिज्ञासुभिस्तत एवावबोद्धव्यः । अन्ये च शतशो महर्षयो दुन्दुभिध्वानं ध्वनयन्ति मूर्तिपूजनाचारम् । किन्तु किमत्राश्चर्यं यदि बधिरस्य श्रवणयोरुच्चैरपि ध्वनितो दुन्दुभिर्नैष्फल्यमुपगच्छेत् ।

श्रीमन्महाभारतगतेषु च वृत्तान्तेषु श्रद्दधानाः प्रतियन्तु गीतोपनिषत्सु पठ्यमानमिदं पद्यद्वयम् ।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हितान् ॥ इति ॥

एवम्

मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ।
काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ॥
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ इति च ॥

एवं किल सहस्रशो धर्मप्रबन्धैः शक्यमवगन्तुं विद्यते वेदादिषु वर्णनं देवप्रतिमानामिति । अवश्यं तदनुष्ठातव्यमिति च । सत्येवं नैवानुष्ठेया मूर्तिपूजा प्राकृतजनमात्रसमुचिता ह्येषेत्यादयो विशृङ्खलाः प्रलापा वैदिकेतराणामेव शोभन्ते न पुनर्मनागपि श्रुतिप्रामाण्यमङ्गीकुर्वतां कदाचिदपि ।

(क्रमशः)

---

# प्राप्तपत्रम्

॥ श्रीः ॥

अयि संस्कृतचन्द्रिकासम्पादक!

तत्रभवतासमालोचनाफलं विदुषा विदुषाम्मुदे कादम्बिनीयसभ्यसाहाय्यसम्पत्तये च निजकर्तव्यतया मदीयो लेखो विमृश्यैव प्रकाशन्नीतः ॥

तत्र श्रीपूषाणमिति रारचीतीति च द्वयमेव समालोच्य यन्मया निजविचारप्रचारतो लिखितन्तदुपरि विद्याधरमिश्रेण प्रतिसमालोचकीभूतेन कर्टकंकादम्बिनीपत्रिकाद्वारा स्वकपोलकल्पनाप्रभावतो विमृश्य विवेकसुधारस इव प्रकाशितो निजो लेखः । तच्चिन्तनाऽभून्मे रुग्णस्य निर्विचिकित्सं चिकित्सा । अतस्तमाशास्यम्मनसा नमस्कृत्य तदीयलेखसमालोचना वितन्यते । तदेनामपि पर्य्यालोच्य चन्द्रिकाचमत्कृत्या श्रीमता प्रकटतान्नेयो मदीयोयँल्लेख इति विज्ञापना ।

श्लोकौ.

कटकतटनटन्ती, किन्तु कादम्बिनी सा ।
कपटपटु रटन्ती, बालकान्मोहयन्ती ॥
त्रिपुरमथनमौलौ, भूरिधाम्नि ज्वलन्ती ।
मनुनयमपनीयोन्मूलयेच्चन्द्रकान्तिम् ॥ १ ॥
या पादसंस्पर्शसुखाभिलाषा
स्वां स्वामिनीन्तामभिमन्यमाना ॥
कादम्बिनी दम्भभरा कथं स्या-
च्चान्द्रीं समुन्मूलयितुन्नविघ्नः ॥ २ ॥

पश्यन्तु पण्डिताः सर्वे विद्याधरचातुरीम् ॥ पूषाणशब्दे क्लीबापत्तिर्णत्वानापत्तिः प्रमाणाभावः फलाभावोऽनवस्थाचेति दोषपञ्चकभीतिरङ्गीकृतिपुरस्सरन्तिरस्कृतिर्मन्त्रिमते सम्पादितेति भात्येष पाण्डित्यपाण्डिम्नो महिमैव मदीये मानसे तदीयः ॥ तद्यथा ॥

१ लश्कर पर्ततनितम्बो वा

पूषणमानयति जीवयतीति विग्रहविन्यासस्तुल्यः ॥ पूषार्थः कोशाद्यनुसारेण मन्त्रिणा सशरीरो मिहिर आश्रित आनशब्दार्थस्तदधिष्ठात्रीन्देवतामित्यर्थ इति लिखता ब्रह्माणीवदिति दृष्टान्तन्निदर्शयताच सूर्य्याधिष्ठात्री देवतेति ॥

मुरारिमिश्रवद्विद्याधरमिश्रेण तु तद्दोषपञ्चकभीतेन शरीरांशम्परिहृत्य तच्छरीराधिष्ठात्रीन्देवताम्पूषाणमिति विन्यासं निदर्शयता तादृशदेवताभिन्नामिहिरः पूषार्थ आनार्थश्च पूषाणं पूष्णा देवेनाधिष्ठितं शरीरं क्लीबलिङ्गमिति तत्रैव दन्तयुतत्वस्य मुख्यतया जीवे चौपचारिकतयेति युक्तिमास्थाय तादृशं शरीरं दन्तयुतं कुर्विति सम्बन्धमाकलय्यच पूर्वमतरीतिरनादृता ॥ तदयमत्राभिसन्धिः ॥

पूर्वमते कुदर्थतया सूर्याधिष्ठात्री देवताम्युपेतेति तत्र दोषगणसन्निवेशः । दार्ष्टान्तिकन्यायेन मदुक्तदोषगणस्य निराकरणासंभवात् । वैद्याधररीत्या तु कुदर्थकर्तरि नपुंसकत्वेन ङीबनापत्तिर्नापि तत्रानवस्थादोषः । ब्रह्माणीवदत्रापि संज्ञात्वाङ्गीकाराण्णत्वसिद्धिरिति ।

## अत्रेत्थं समालोचना ।

सुरङ्गपद्ये दक्षमखविध्वंसकथाक्षिप्तातोऽत्र समकक्षतया भृगुपूषभगाः श्मश्रुरदननयनहीना वर्णितास्तेषु भृगुं श्मश्रुलं पूषणं रदनयुतं भगन्नयनयुतं च कुर्विति संसर्गतुल्यतासंभवे भृगुभगयोरानशब्दासङ्गे पूषणि तदासङ्गे च फलविशेषेण भाव्यन्नहि सोत्र निरुक्तः केनापि ।

भारतभागवतादिषु पूषाणशब्दाप्रयोगात्पूषशब्दप्रयोगोपलब्धेश्च पूषाणेत्यस्याप्रामाण्यम् । अतःसंज्ञात्वाभावाण्णत्वानापत्तिरितिदोषतादवस्थ्यम् । ब्रह्माणीशब्दस्य ब्रह्माणमानयति चेष्टयतीत्यर्थ एव साधुतेति हंसयुक्तविमानाग्र इतिमन्त्रव्याख्यायां द्रष्टव्यम् । ब्रह्माणीशब्दे

तारानाथीयकोशे च पूर्वपदात्संज्ञायामिति णत्वमित्युक्तम् । कर्मण्यणिति प्रतीकमुपादाय पूर्वपदात्संज्ञायामिति णत्वमिति मनोरमायां स्थितम् । एतेन संज्ञात्वस्येत्यादिणत्वाभाववाद इत्यन्तोग्रन्थः कादम्बिनीयः परास्तः । वैषम्यात्पूषाणं पूष्णा देवेनाधिष्ठितं शरीरमिति परिणतार्थविन्यासे आनशद्धार्थानुपादानात्प्रतिसमालोचकीभूतेन स उपेक्षित इति गम्यते । शरीरन्नाम स्वरूपतोऽचेतनं वस्तु जगत्प्रदीपं धीचोदकम्मिहिरञ्जीवयितुमलन्न वेति सुष्ठु चिन्तनीयम्प्रतिसमालोचकेन ।

अथ पूषाणरूपे विलक्षणसाधुतापन्ने खण्डद्वयार्थविवेकः । आद्यस्य वैद्याधरमते तच्छरीराधिष्ठानगा देवतार्थः । तच्छरीराधिष्ठात्रीन्देवताम्पूषाणमिति तदीयाद्विन्यासात । तादृग्देवतायाः कर्मत्वमानेत्युत्तरखण्डे हेतुमति प्रतीयते । स्पष्टतया तु न निरुक्तस्स इत्यद्यापि निर्णेतव्यतया तिष्ठत्येव ब्रह्माणीशद्बे ' हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः । आयाता ब्रह्मणः शक्तिर्ब्रह्माणीत्यभिधीयत ' इत्यार्षवचनात्तट्टीकातश्च निर्णीतः ।

सुरङ्गगोविन्दकविपद्यटीकायाम्मन्त्रिणा ब्रह्माणीवदिति निदर्शयता प्रद्योतितस्तु न कार्यसाधकः वैद्याधरलेखतस्तदवहेलनात् । जगज्जनेः कर्तारन्तदीया शक्तिरेव चेष्टयितुम्प्रभवति नान्यः खलु कोपीति प्राक्तनवचनानुरोधश्च ॥ न च पूषदेवाधिष्ठितशरीरमिति क्लीबताशालि वस्तु प्रकल्पितमस्तीति वाच्यम् ॥ अनौचित्यात् ॥ दार्ष्टान्तिकन्यायेन जगदात्मनि सूर्ये निजशक्त्यतिरिक्तस्य तद्धर्मवत्तासंभवात् ॥ शक्तितद्वतोरभेदोपचारो न प्रकृतोपयोगी ॥ स्त्रीत्वापातात्तत्प्रत्ययापत्तेः ॥

[ क्रमशः ]

…ामपाठशालाध्यापकेन विष्णुना लिखितमेतत् ॥

## ग्वाल्हेरनिवासिना काव्यकादम्बिनीसभामन्त्रिणा समुद्भाविताः

# चन्द्रिकादोषाः। *



[ १ ] द्वितीयसंख्यायां देसायीलेखे भर्तुरभित इत्यत्र **अभितः-परितःसमयानिकषाहाप्रतियोगेऽपि** इत्यस्याप्रवर्तनं भ्रममूलम्।

[ २ ] सहकारिसम्पादककृतसमालोचनायाम् उभयतस्पाशा रज्जुरित्यत्र सत्वमुत्सूत्रम्।

[ ३ ] तृतीयसंख्यायां। आदावारक्तपत्रे ८ पङ्क्तौ श्रीअप्पाशास्त्रिणेत्यत्र वाक्याभावेऽपि संहिताया अविवक्षा भ्रममूला। तत्रैव २ पृ० पञ्चसप्ततिरूपकाः। अत्रासंज्ञायां समासश्चिन्त्यः।

[ ४ ] ३ पृ० २ पं. शिवंकरमित्यपि गणेशशास्त्रिणः[ रुकडीकरस्य? ]। अत्र खच्प्रत्ययमुमागमावुत्सूत्रौ।

[ ५ ] १८ पं. प्रार्थयामि. अत्र परस्मैपदं भ्रममूलम् आगर्वादात्मनेपदिनः इत्यधिकारेऽर्थधातोः पाठात्।

[ ६ ] ५६ पृ० २४ पं. यङ्लुङन्तमसाधु इति रत्नललामपाठशालाध्यापको विष्णुः। अत्रोकारस्य ङुगागमो गकारस्य ङुडागमो वा समालोचकानुभूत एव।

[ ७ ] ५७ पृ० ११ पं. गीर्वाणवाण्यभ्युन्नतये समुद्यतानां विचारचातुरी तत्सहचरी वाङ्माधुरी चापेक्षते इत्यत्र अपेक्षतेः कर्म संस्कृताध्यापकहृदयस्थमेव चातुर्यादेः कर्मत्वे [ अपेक्षते ] अत्र कर्मणि यका भाव्यम्।

---

* न चैतान्प्रकाशयितुमैच्छाम। किन्तु मन्त्रिणः पत्रिकान्तरेष्वेतद्दोषप्रकाशनेऽभिनिवेशमवबुध्य तथाच सति तूष्णींभावोऽयमस्माकं नूनं हानिकर इत्याकलय्य च ग्राहकाणां भावि मतिवैपरीत्यं निराकर्तुमेतान्दोषाभासान्प्रकाश्य तन्निराकृतिलेखमपि प्रकाशयितुं प्रवृत्ताः स्मः।

[८] ५९ पृ० १३ पं. मन्त्रयतीत्यत्र धातोः परस्मैपदित्वं विस्मरणमूलम् आकुस्मादात्मनेपदिनः इत्यधिकारे पाठात् ।

[९] ६० पृ० ९ पं. दीर्यतीव मे हृदयम् अत्र दीर्यतीति निर्मूलं दिवादौ दृधातोरनुपलब्धेः ।

[१०] तत्रैव ९ पं. सखि कः पुनः स स्वप्नः । धर्मः । ममाप्यस्ति कौतूहलमेतदाकर्णयितुम् । अत्र स्वप्नपरामर्षिण एतच्छब्दस्य पुंस्त्वमुचितम् ।

[११] २३ पं. एतावाङ्गिरिपु अत्र पदान्तस्थस्यापि नकारस्यानुस्वारस्तस्य च परसवर्णत्वं चेति वैचित्र्यं संहितायाः ॥

[१२] ७२ पृ० २१ पं. प्रणन्दामः ॥ टुनदिसमृद्धावित्यस्य रूपम् ॥ अत्र धातोरस्य तु णोपदेशविरहाण्णत्वं परं बाधते ॥

[१३] २४ पं. आशास्महे साफल्यमेतस्य महाभागस्य प्रयत्नमचिरादेवोपस्थेयादिति ॥ अत्र प्रयत्नशब्दस्य क्लीबत्वं भ्रममूलम् नङन्तस्य पुंस्त्वात् । अत एव स्पष्टं प्रयतनं स्पर्शानामत्र प्रयतनमिति नपुंसके भावे ल्युट् प्रयत्नमित्यपपाठः इति नागोजीभट्टैरुक्तम् ॥

---

आशास्महे सहकारिसम्पादकानां चेतो नानेन लेखेनातितरां दूयेत यतः स्वभाव एव कादम्बिन्या यच्चन्द्रिकां समूलमुन्मूलयति ॥

का० का० स० मं० शिवरामशास्त्रिणः ॥

---

## अत्रोत्तरम्

सत्हृदयग्राहकाः जानीयुरेव भवन्तः कीदृश एते दोषाः कीदृशी चैतेषामुद्भावनावसर उद्भावयितुर्बुद्धिरिति । नूनमनुगृहीताः स्मो मन्त्रिणा यदावरणपृष्ठमारभ्य सर्वत्रापि विद्यमाना हस्तदोषेणाक्षरग्रथकानां प्रमादाद्वा संभूता दोषाभासा अपि शल्यानीवायस्कान्तशकलेन सहेलमेवोन्नीय प्रादर्श्यन्त । वयं तु ब्रूमः क्षणं निःपक्षपतया बुद्ध्या दोषानेतान्प्रतिसमालोच-

कधिया पश्यतो मन्त्रिण आत्मैव हासमुपजनयेत्। भवतु यथोचितमेतान्निराकर्तुमिच्छामः। किन्तु यङ्लुङ्क्त एतावाङ्गिरिषु प्रणन्दाम इत्यादयो मुद्रणदोषा एव न पुनस्तैः कर्तुर्दोषभाक्त्कमिति तुषपेषणमनादृत्य दोषाभासा एव निरास्यन्ते। धिनोति किलैतन्मन्त्रिणः समालोचकत्वमस्मदीयं चेतो येनैवंविधेष्वपि निःसारेषु दोषाभासेषु मन्त्रिणः कृपाकटाक्षः सम्पातितः। भवतु प्रकृतमनुसरामः।

[ १ ] भर्तुरभित इति। न जानीमः किमेष देसायीप्रयुक्त इति प्रयोगो दुष्ट आहोस्विद्व्याकरणासंमत इति किंवा कव्यादिभिरनादृत एवेति। नाद्योऽनुचितत्वात्। न द्वितीयः अभितः परित इत्यादिना प्राप्तायामपि द्वितीयायां शेषेषष्ठ्या वारयितुमशक्यत्वात्। प्रतिपदोक्ताया अपि विभक्तेः स्थाने नमो नम आर्यपुत्रचरणकमलानामित्यादौ महाकविवचने षष्ठ्या दृश्यमानत्वाच्च। नान्त्यः प्रयुञ्जते ह्येवं कवयः। तथाहि भवभूतिः—त्वदर्थमिवविन्यस्तः शिलापादोऽयमग्रतः। यस्यायमभितः पुष्पैः प्रवृष्ट इव केसर इति। एवं श्रीगीतायामपि कामक्रोधवियुक्तानां यतीनां यतचेतसाम्। अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम्। इति। एवमन्या अपि भूयांसः प्रयोगा विस्तरभयान्नात्रोपन्यस्यन्ते। तन्न जानीमः किमत्राशुद्धमिति।

[ २ ] उभयतस्पाशेति। अहो भ्रान्तत्वम्। न ह्यत्र पाशशब्दोऽपितु स्पाशशब्द एवेत्यवबोद्धव्यं मन्त्रिणा। स्पश ञ ग्रन्थबन्धयोरिति बोपदेवीयधातुपाठस्थाद्वा स्पशग्रहणसंश्लेषणयोरिति पाणिनीयधातुपाठगताद्वा स्पशधातोर्घञि स्पाश इति रूपम्। तस्मिंश्च परे खर्परेशरि वा विसर्गलोपो वक्तव्य इति विसर्गलोपे सिद्धमुभयतस्पाशेति। अत एव क्वचिद्विसर्गवान्कचिच्च तदभाववानेव प्रयोगो दृष्टः। यथा अकाण्डताण्डवाख्यपरिभाषेन्दुशेखरव्याख्यादिकृद्भिर्वैय्याकरणप्रवरैः श्रीबालशास्त्रिचरणैर्विरचिते विधवोद्वाहविवेकशङ्कासमाधितिलके उभयतः स्पाशा इति। श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यप्रणीते बहुविवाहवादेऽपि उभयतस्पाशाबन्धनं कथमुत्तीर्येतेति।

( ३ ) श्रीअप्पेति । ब्राह्मणनाम्नां श्रीपूर्वकत्वस्यावश्यकत्वं धर्मविवेकादौ द्रष्टव्यम् । अत एव स्थलेष्वेवंविधेषु संहिताया अनङ्गीकारोऽपि नैव दूषणायेति भूयांसः पण्डिता मन्यन्ते । दृश्यन्ते चैवं श्रीअन्नदाचरण श्री उमेशचन्द्र इत्यादयः प्रयोगा वङ्गीयेषु । अहो चन्द्रिकायां प्रणयपक्षपातित्वं मन्त्रिणो यदात्मना बहुशस्तिरस्कृतोऽप्येवंविधस्थलेषु संहितायाः सद्भावः केवलं चन्द्रिकाया निर्मलीकरणायैव स्वीक्रियते । कथमन्यथात्मनः काव्यकादम्बिन्यां द्वितीयखण्डस्य तृतीयसंख्यायां चतुर्थे पृष्ठे **शेंडे** इत्युपाव्हेति चतुर्दशे **महाराज अवधदेशीयेति** अष्टादशे **होलकरराजाश्रित आलम्पुरस्थेति** विंशे **देशान्तर्गत आहोरेग्रामनिवासीति** सप्तविंशे **श्रीयुतउम** इति तत्रैव च **काफले** इत्युपाव्हेति द्विचत्वारिंशे **श्रीयुतबाबू उदयभान्विति** एवमादिषु न दृष्टिः क्षिप्येत । एतत्पुनश्चित्रं यत्सर्षपमात्रानपि परस्य दोषानन्विच्छता स्वस्य बिल्वमात्रा अपि न ते प्रत्यक्षीक्रियन्ते । अथवा परहितनिरतानामादरो न स्वकार्ये ।

पंञ्चसप्तति ( ७९ ) रूपका इति । शब्दकल्पद्रुमविज्ञापनगतमेतद्वाक्यम् । न चात्र समासः किन्तुसप्ततीत्यत्र दीर्घस्थाने ह्रस्वेकारनिवेशोऽक्षरग्रथकानामनवधानोद्भूतः । शिरसा चेमं दोषमङ्गीकृत्य सति संभवे तन्निरासमपि प्रतिजानीमः । प्रयोगास्त्वेवंविधा अप्युपलभ्यन्ते ।

( ४ ) शिवंकरमिति । यद्यपि खश्खचादयः पाणिनीये नियतविषया एव तथापि व्याकरणान्तरेषु भिन्नविषयत्वमप्येतेषां दृष्टम् । अत एव फलेग्रहिरात्मंभरिश्चेत्यत्रासतोऽपि उदरम्भरिशब्दस्य चान्द्रमतेन संसिद्धिः । क्षेमप्रियमद्रेऽण् चेत्यत्रासंगृहीतेऽपि भद्रशब्द उपपदे कृञः खच् सारस्वतेन संसिद्धः । अत एव च प्रयोगो मुरारेरनर्घराघवे ज्योत्स्नाकरम्भमुदरंभरयश्चकोरा इति धातुवृत्तिकृतो माधवापरनाम्नो विद्यारण्यस्यापि पादः स्यादमितंपचः करुणया भद्रंकरः शांकर इति । एवंविधानां च प्रयोगानां वैय्याकरणकविकृतानां दुष्टत्ववादापेक्षया व्याकरणान्तरसंसिद्धिरवश्यमनु-

मातव्या। तथाविधानां च छिन्नव्याकरणजल्पज्ञापकेन कविल्वेनोपलक्षिता-नामासानां वचनं यदि कश्चिदनुवदेत्स दोषभाजनं भविता। आसतम एव च चतुर्वेदभाष्यकृद्धातुवृत्तेर्विधाता निःशेषशास्त्रपारदृश्वतया सर्वज्ञो माधवापरनामा विद्यारण्यः स चात्मना विरचिते शंकरविजये प्रायुङ्क्त

पयोऽब्धिविवरीक्षुनिःसृतसुधाझरीमाधुरी-
धुरीणभणिताधरीकृतफणाधराधीशितुः।
शिवंकरसुशंकरास्मिधजगद्गुरोः प्रायशो
यशो त्वद्यशोधकं कलयितुं समीहामहे॥ इति॥ १।५

न जानीमः कथं शिवंकरं शंकरमित्यत्रोपरितनमेव प्रयोगमनुवदतां श्रीगणेशशास्त्रिणामेव प्रयोगस्य दुष्टत्वमभिधातव्यमिति। पण्डितरायोऽपि जगन्नाथो लोकंपृणैः परिमलैर्वितनोषि तुष्टिमिति पृणातेः खशं प्रायुङ्क्त। अतोऽवश्यं स्वीकर्तव्यं प्राचीनप्रयोगानामनुकरणं (आलङ्कारिकैरप्रदर्शित-दूषणानाम्) न दोषायेति। प्राचीनानां च वचनेषु दोषोपन्यासे नास्माक-मधिकार इति। तथापि यद्याग्रहस्तदा करमिति पृथक्पदम्। सुखवाचिनि कपद उपपदे रातेरातोऽनुपसर्गे इति कः। कं सुखं राति ददातीति करस्तं सुखप्रदमित्यर्थः।

(६–७) प्रार्थयामि मन्त्रयतीति। अहो भ्रान्तिः। न ह्यत्र चौरा-दिकस्यार्थयतेर्मन्त्रयतेर्वा रूपम्। किन्तुयाचनार्थकादर्थशब्दाद्गुप्तपरिभाष-णार्थकान्मन्त्रशब्दाच्च तत्करोतीति णिचि सिद्धमेतद्रूपद्वयम्। अस्य च णिच उभयपदित्वात्साधुत्वमेवास्य प्रयोगस्याभ्युपेतव्यम्। ततश्च प्रार्थयामि प्रार्थनां करोमि मन्त्रयति मन्त्रं करोतीत्यर्थः।

(८) दीर्यतीवेति। दीर्यतेः पाणिनिना दैवादिकेष्वपठितत्वेऽपि दृयाणि। विदारे इति बोपदेवीये तस्य दैवादिकत्वं मन्त्रिणा द्रष्टव्यम्। किं च पाणिनीयेऽपि दिवादेराकृतिगणत्वेन क्षीयातिमृग्यतिप्रभृतीनामि-वद्दीर्यतेरपि दिवादिष्वन्तर्भावो दुर्निवार एव। अत एव दॄ विदारे दिवादिः

न्यादिश्च × × × दीर्यति दृणातीति शब्दस्तोममहानिधौ तर्कवाचस्पतिः प्राह।

(९) ममाप्यस्ति कौतूहलमेतदाकर्णयितुमिति। नात्र स्वप्नपरामर्शक एतच्छब्दः किन्तु पूर्ववाक्यपरामर्शक एव। ततश्च युक्त एवात्र नपुंसकस्यैतदः प्रयोग इति विद्वांसो जानीयुः।

(११) साफल्यमित्यादि। अहो विपरीतदर्शित्वम्। न ह्यत्र प्रयत्नमिति कर्तृपदं येन तस्य दुष्टताप्रतिपादनायायं मन्त्रिणो महीयानायासः। अपि तु साफल्यमित्येवात्र कर्तृपदं प्रयत्नमिति च कर्मपदं। ततश्चास्यापि प्रयोगस्य नास्त्यसाधुत्वं नाम।

(१२) यत्त्वाशास्महे इत्यादिना प्रोक्तं मन्त्रिणा स्वभाव एवायं कादम्बिन्या यच्चन्द्रिकां समुन्मूलयतीति तदेतद्भ्रममूलकमेव। नहि सर्वेऽपि दोषैकचक्षुष्काश्चन्द्रिकाविद्वेषिण एव येनासौ समूलमुन्मूल्येत। वचनं चैतन्मन्त्रिणो घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चेत्यादि श्रीशङ्करभगवत्पूज्यपादानां पद्यं स्मारयति। सहकारिसम्पादकस्तु नैतैर्दूषणाभासैर्दूयते किन्तु मन्त्रिणः प्रयासस्य वैफल्यमेवास्य चेतो दूनयति। यदि चन्द्रिकामिवात्मनः कादम्बिनीमपि समालोचनाकरपत्रेण योजयेन्मन्त्री तदा नूनं नवदशभ्योऽधिकं नैकमपि पद्यं निर्दोषतामुपगच्छेत्। नूनं चन्द्रिकायाः षष्ठखण्डस्य तृतीयसंख्यायां प्रकाशितेन श्रीविष्णुशास्त्रिणः [ रतलाम ] पत्रेणातिभूमिं गतस्य मन्त्रिणः कोपस्य विजृम्भितमेतत्। किन्तु प्रज्ञतमेन मन्त्रिणा कथमेतन्न विदितं **स्वीयमणौ गुणहीने को वा कलहः परीक्षकेण सहेति।** विष्णुशास्त्रिसमालोचितानां च पद्यानां प्रसादशून्यत्वे साक्षिणः साहित्यविदो रसिकाः। इत्यलं तुषपेषणप्रयासेन। आगामिन्यां च संख्यायां कादम्बिन्याः समालोचनामवश्यं प्रकाशयिष्यामो येनानायासमेव तस्याः स्वरूपमवबुध्येत समीकृतमनोभिर्विद्वद्भिः। इति शिवम्।

---

मयः सकलोपद्रवमयश्चायं वृत्तान्त इति । अत एव तत्स्मरणमात्रेणापि खिद्यत एप हृदये । तच्चाहमेनं निरर्थं जिल्लापयिषामि न वा चिखेदयिषामीति च विचिन्त्य मुने विलक्षणोऽयं सकलकलाकलापकलनः सकलकालनः करालः कालः । स एव कदाचित्पयःपूरपूरितान्यकूपारे[1]तलानि मेरूकरोति सिंहव्याघ्रभल्लूकगण्डकफेरुशशसहस्त्रव्याप्तान्यरण्यानि जनपदी करोति मन्दिरप्रासादहर्म्यशृङ्गाटकचत्वरोद्यानतडागगोष्ठमयानि नगराणिच काननीकरोति । निरीक्ष्यतां कदाचिदस्मिन्नेव भारते वर्षे यायजूकै राजसूयादयो यज्ञा व्यधायिषत कदाचिदिहैव वर्षवातातपहिमसहानि तपांस्यतापिषत सम्प्रति तु म्लेच्छैर्गावो हन्यन्ते वेदा विदार्यन्ते स्मृतयः संमृद्यन्ते मन्दिराणि मन्दुरी[2]क्रियन्ते सत्यः पात्यन्ते सन्तश्च सन्ताप्यन्ते सर्वमेतन्माहात्म्यं तस्यैव महाकालस्येति कथं धीरधौरेयोऽपि धैर्यं विधुरयसि । शान्तिमाकलय्याति-संक्षेपेण कथय यवनराजवृत्तान्तं न जाने किमित्यनावश्यकमपि शुश्रूषते[3] मे हृदयमिति कथयित्वा तूष्णीमवस्थे ।

अथ स मुनिर्भगवान्धैर्येण प्रसादेन प्रतापेन तेजसा वीर्येण विक्रमेण शान्त्या श्रिया सौख्येन धर्मेण विद्यया च सममेव परलोकं सनाथितवति तत्रभवति वीरविक्रमादित्ये शनैः शनैः पारस्परिकविरोधविशिथिली-कृतस्नेहबन्धेषु राजसु भामिनीभ्रूभङ्गभूरिभावप्रभावपराभूतवैभवेषु भटेषु स्वार्थचिन्तासन्तानैकतानेष्वमात्यवर्गेषु प्रशंसामात्रप्रियेषु प्रभुषु इन्द्रस्त्वं वरुणस्त्वं कुबेरस्त्वमिति वर्णनामात्रसक्तेषु बुधजनेषु कश्चन गजिनी* स्थाननिवासी महामदो[§] यवनः ससेनः प्राविशद्भारते वर्षे । स च प्रजा विलुण्ठ्य मन्दिराणि निपात्य प्रतिमा विभिद्य परश्शतान् जनांश्च दासीकृत्य शतश उष्ट्रेषु रत्नान्यारोप्य स्वदेशमनैषीत् । एवं स ज्ञातास्वादः पौनः-

---

१ समुद्रः २ वाजिशाला तु मन्दुरेत्यमरः । ३ ज्ञाश्रुस्मृदृशां सनीत्यात्मने पदम् ।
* गिजनी इतिप्रसिद्धम् । § महमद इति प्रसिद्धः ।

पुन्येन द्वादशवारमागत्य भारतमलुण्ठत् । तस्मिन्नेव च स्वसंरंभे एकदा गुर्जरदेशचूडायितं सोमनाथतीर्थमपि धूलीचकार । अद्य तु तत्तीर्थस्य नामापि केनापि न स्मर्यते परं तत्समये तु लोकोत्तरं तस्य वैभवमासीत् । तत्र हि महार्हवैडूर्यपद्मरागमाणिक्यमुक्ताफलादिघटितानि कपाटानि स्तम्भान् ग्रहावग्रहणीर्[1]भित्तीर्वलभीर्[2]विटङ्कानि च निर्मथ्य रत्ननिचयमादाय शतद्वयमणसुवर्णराशिशृङ्खलावलम्बिनीं चञ्चच्चाकचक्यचकितीकृतावलोचकलोचननिचयां महाघण्टां प्रसह्य संप्रगृह्य महादेवमूर्तावपि गदामुदतूतुलत् । अथ वीर गृहीतमखिलं वित्तं पराजिता आर्यसेना बन्दीकृता वयं संचितममलं यश इतो पि न शाम्यति ते क्रोधश्चेदस्मांस्ताडय मारय च्छिन्धि भिन्धि पातय मज्जय खण्डय कर्तय ज्वलय किन्तु त्यजेमामकिञ्चित्करीं निर्जीवां महादेवप्रतिमाम् । यद्येवं न स्वीकरोषि तद्गृहाणास्मत्तोऽन्यामपि सुवर्णकोटिद्वयीं त्रायस्व मैनां भगवन्मूर्तिं स्प्राक्षीरिति साम्रेडं कथयत्सु विलुठत्सु प्रणमत्सु च पूजकवर्गेषु नाहं मूर्तीर्विक्रीणे किन्तु भिनद्मि इति संगर्ज्य जनताया हाहाकारकलकलमाकर्णयन्घोरगदया मूर्तिमतुत्रुटत् । गदापातसमकालमेव चानेकार्बुदपद्ममुद्रामूल्यानि रत्नानि मूर्तिमध्यादुच्छलितानि परितोऽवाकीर्यन्त । स च दग्धमुखस्तानि रत्नानि मूर्तिखण्डानि च क्रमेलक[3]पृष्ठेष्वारोप्य सिन्धुनदीमुत्तीर्य स्वकीयां विजयध्वजिनीं गजिनीं नाम राजधानीं प्राविशत् ।

अथ कालक्रमेण सप्ताशीत्युत्तरसहस्रतमे ( १०८७ ) वैक्रमाब्दे सशोकं सकष्टं च प्राणांस्त्यक्तवति महामदे गोरदेशवासी कश्चित् शहाबुदीननामा प्रथमं गजिनीदेशमाक्रम्य महामदकुलं धर्मराजलोकाध्वन्यध्वनीनं विधाय सर्वाः प्रजाश्च पशुमारं मारयित्वा तद्रुधिरार्द्रमृदा गोरदेशे बहून्

---

१ देहली । २ गोपानसी चन्द्रशाला [ शिरोगृहं ] वा । ३ क्रमेलकः उष्ट्रः

*गृहान्निर्माय चतुरङ्गिण्याऽनीकिन्या भारतवर्षं प्रविश्य शीतलशोणितानप्य-सयन्सन्त्राशाद्युत्तरद्वादशशतमितेऽब्दे दिल्लीमश्वर्यौम्बभूव।

ततो दिल्लीश्वरं पृथ्वीराजं कान्यकुब्जेश्वरं जयचन्द्रं च पारस्परिक-विरोधग्रस्तं विस्मृतराजनीतिं भारतवर्षदुर्भाग्यायमानमाकलय्यानायासेनो भावपि विशस्य वाराणसीपर्यन्तमखण्डमण्डलमकण्टकमकीटकिट्टं महारत्न-मिव महाराज्यमङ्गीचकार। तेन वाराणस्यामपि बहवोऽस्थिगिरयः संचिताः रिङ्गत्तरङ्गभङ्गा गङ्गापि शोणितशोणा शोणीकृता परःसहस्राणि च देवम-न्दिराणि भूमिसात्कृतानि।

स एव प्राधान्येन भारते यावनराज्याङ्कुरारोपकोऽभूत्। तस्यैव च कश्चित्क्रीतदासः कुतुबुद्दीननामा प्रथमो भारतसम्राट् जातः।

तमारभ्याद्यावधि प्रायो राक्षसा एव राज्यमकुर्वन्त प्रायो दानवा एव च दीनानदलयन्। अभूत्केवलमकबरशाहनामा यद्यपि गूढशत्रुर्भारतवर्षस्य तथापि शान्तिप्रियो विद्वत्प्रियश्च। अस्यैव प्रपौत्रो मूर्तिमानिव कलियुगो गृहीतविग्रह इव चाधर्म आलमगिरोपाधिधारी अवरङ्गजीवः§ सम्प्रति दिल्लीवल्लभतां कलङ्कयति। अस्यैव पताकाः केकयेषु मत्स्येषु मगधेष्वङ्गेषु वङ्गेषु कलिङ्गेषु च दोधूयन्ते। केवलं दक्षिणदेशेऽधुनाप्यस्य परिपूर्णो नाधिकारः संवृत्तः।

दक्षिणदेशो हि पर्वतबहुलोऽस्त्यरण्यानीसंकुलश्चास्तीति चिरोद्योगेनापि नायमशक्नोन्महाराष्ट्रकेसरिणो हस्तयितुम्।

साम्प्रतमस्यैवात्मीयो दक्षिणदेशशासकत्वेन शास्तिखाननामा† प्रेष्यत इति श्रूयते। महाराष्ट्रदेशरत्नं यवनशोणितपिपासाकुलकृपाणो वीरतासी-मन्तिनीसीमन्तसुन्दरसान्द्रसिन्दूरदानदेदीप्यमानदोर्दण्डो मुकुटमणिर्महारा-ष्ट्राणां भूषणं भटानां निधिर्नीतीनां कुलभवनं कौशलानां पारावारः परमो-

---

* गृहाः पुंसि च भूम्न्येवेत्यमरः। ४ जगामेत्यर्थः।

§ अवरंगजेब इति प्रसिद्धः। † शाइस्तेखान इति प्रसिद्धः।

त्साहानां कश्चन प्रातःस्मरणीयः स्वधर्माग्रहग्रहग्राहिलः[1] शिव इव धृतावतारः शिववीरश्चास्मिन्पुण्यनगरान्नेदीयस्येव सिंहदुर्गे ससेनो निवसति । विजयपुराधीश्वरेण साम्प्रतमस्य प्रवृद्धं वैरम् । कार्यं वा साधयेयं देहं वा पातयेयमित्यस्य सारगर्भा महती प्रतिज्ञा । सतीनां सतां त्रैवर्णिकस्य आर्यकुलस्य धर्मस्य भारतवर्षस्य चाशासन्तानवितानस्यायमेवाश्रयः । इयमेव वर्तमाना दशा भारतवर्षस्य किमधिकं विनिवेदयामो योगबलावगतसकलगोप्यतमवृत्तान्तेषु योगिराजेषु इति कथयित्वा विरराम ।

तदाकर्ण्य विविधभावभङ्गभासुरवदनो योगिराजो मुनिराजं तत्सहचरांश्च निपुणं निरीक्ष्य तेषामपि शिववीराङ्गतामङ्गीकृत्य मुनिवेषव्याजेन स्वधर्मरक्षाव्रतिनश्चोररीकृत्य विजयतां शिववीरः सिध्यन्तु भवतां मनोरथा इति गम्भीरस्वरेणोक्त्वा समुत्थाय सपद्युपत्यकां गण्डशैलानधित्यकां[2] चारुह्य पुनस्तस्मिन्नेव पर्वतकन्दरे तपस्तप्तुं जगाम ।

ततः शनैः शनैर्निर्यातेष्वपरिचितजनेषु संवृत्ते च निर्मक्षिके[3] मुनिर्गौरबटुमाहूय विजयपुराधीशाज्ञया शिववीरेण सह योद्धुं ससैन्यं प्रस्थितस्य अपजलखानस्य[4] विषये यावत्किमपि प्रष्टुमियेष तावत्पादचारध्वनिमिव कस्याप्यश्रौषीत् । तमवधायान्यमनस्क इव मुनौ गौरबटुरपि तेनैव ध्वनिना कर्णयोः कृष्ट इव समुत्थाय निपुणं परितो निरीक्ष्य पर्यट्य कोयमिति च साम्रेडितं व्याहृत्य कमप्यनवलोक्य पुनर्निवृत्य मन्ये मार्जारः कोपीति मन्दं गुरवे निवेद्य पुनस्तथैवोपविवेश । मुनिश्च मास्म कश्चिदितरः श्रौषीदिति सशङ्कः क्षणं विरम्य पुनरुपन्यस्तुमारेभे । वत्स गौरसिंह अहमत्यन्तं तुष्यामि त्वयि यत्त्वमेकाकी अपजलखानस्य त्रीनश्वांस्तेन दासीकृतान्पञ्च

---

१ ग्रहो निर्बन्धोऽस्त्यस्य ग्राहिलो निर्बन्धयुक्त इति वाचस्पतिः । ग्रहो ग्रहणं तदस्यास्ति ग्राहिलः गृहीत इत्यर्थ इति वा ।

२ उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यकेति गण्डशैलास्तु च्युताः स्थूलोपला गिरेरिति चामरः ।

३ एकान्ते । ४ अफजुलखान इति प्रसिद्धः ।

# सप्रमोदमङ्गीकारः ।

कोल्हापुरे प्रकाश्यमानस्य जैनबोधकनाम्नो मासिकपत्रस्य चतुर्दशवत्सरस्य द्वितीयोऽङ्कस्तत्प्रकाशकात्समालोचनार्थमस्मत्करतलमापतितः । एवं लङ्कायां दोड्डुवन्दुग्राममलङ्कुर्वता बुद्धमताचार्येण श्रीमता शीलस्कन्धस्थविरेण प्रेरितं तत्कृतव्याख्यासमुल्लसितं भक्तिशतकं भारतरत्नादिविविधोपाधिमण्डितपरमपण्डितश्रीमदम्बिकादत्तव्याससाहित्याचार्यमहाशयप्रेरितो बिहारीबिहारश्च प्राप्तः सानन्दमङ्गीक्रियेते । एतत्प्रेरयितॄणां चानेकशो धन्यान्ब्रूमः । यथावसरं चैतानि पुस्तकान्यवश्यं समालोचयिष्यामः ।

---

# समालोचना ।

**दिनाजपुरराजवंशम्**— श्रीमताविद्वद्रत्नेन तत्रभवता महाकविना महेशचन्द्रतर्कचूडामणिना प्रणीतमिदं महाकाव्यं तस्यैव सकाशात्समालोचनार्थमस्मत्करतलमापतितम् । उपागतस्य चास्य व्यतीतो बहुतिथः कालः । अस्मिन्नागामिनस्ततः परस्मिन्वा मासे समालोचयिष्याम्येतदिति निश्चितवतापि न पारितं विविधकार्यव्यापृतेन मयाऽद्यावधि पुस्तकमेतदामूलान्तं पठितुम् । अवसितपठनेन चाधुना सप्रमोदमेतत्समालोच्यते । परिचित एवायं महाकविः प्रायेण सर्वस्यापि संस्कृतचन्द्रिकाया ग्राहकगणस्य विशेषतश्च पञ्चमवर्षीयस्य । समालोचितपूर्वा हि कविनैतेनैव प्रणीता ललितपदविन्यासमनोहरा नानाविधालङ्कारसमुज्ज्वलिता विविधरसप्रसरतरङ्गिता नवयौवननिधानपेटिका युवतिरिव हृदयङ्गमा काव्यपेटिकानाम । समालोचितचरं च प्रसन्नतरं सुधामपि तिरस्कुर्वदमुष्यैव कवेः सरस्वतीनिःस्यन्दो भगवच्छतकम् । अहो भाग्यं भारतभुवो यदेवंविधाः परदेशीयभाषाविप्लावितेऽपि काले समुज्जीवयन्तः संस्कृतभाषां नानाविधमनोहर-

काव्यप्रणेतारः समुद्भवन्त्येतस्याम् । सर्वथा चिरंजीवयित्वाऽभिनवमपि प्राचीनसदृशवाचं कविगणममुं समुज्जीवयतु संस्कृतभाषां भगवांश्चन्द्रचूड इत्याशास्य प्रकृतमनुसरामः ।

अस्मन्नयनयोर्गोचरश्चेदं पूर्वखण्डमेतदस्य काव्यस्य। इदं च सप्तदश-सर्गात्मकम् । वर्तमानादिनाजपुराधीश्वरश्रीयुतगिरिजानाथरायबहादूरस्य प्रपितामहान्तस्तद्राजवंशोऽत्र सविस्तरं मनोरमया सरस्वत्या समुपवर्णितः। अस्य काव्यस्य च प्रणयनप्रयोजने तृतीयसर्गारम्भे कथेयमुपलभ्यते । कदाचिद्गिरिजानाथरायबहादूरस्य सभां गतस्तत्पुरोहितो महात्मा महेश-चन्द्रतर्कचूडामणिस्तेन राज्ञा सम्यक् संभाव्य विज्ञापितः। आर्य अस्ति मे कुतूहलमस्माकं पूर्वेषां चरितानि श्रोतुम् भवांस्तु कविप्रवरो वक्ता च विदितास्मद्वंशकीर्तिश्च तत्सफलय मदीयां वाञ्छामिति । तदाकर्ण्य प्रमुदितेन श्रीमहेशचन्द्रकविना प्रशस्य राज्ञो वाञ्छां तस्य च पूर्वजानां वर्णने देवभाषाया एव युक्तरूपत्वमवबुध्योपक्रान्तोऽयं प्रबन्धः। प्रस्तावे चास्मिन्कविना विरचितं संस्कृतभाषाया वर्णनमतिप्रसन्नमतिमात्रं च हृदयङ्गमं संवृत्तम्। ये च केचिदाधुनिका नव्यशिक्षितप्रवराः सावहेलं मृतेति संस्कृतभाषामधिकृत्य ब्रुवते तान्प्रति कवेरस्य वचनमत्रोपहर्तुमि-च्छामः ॥ यथा—

ये तु केचिदिमां दिव्यां भारतीममृतामपि ।
मृतां वदन्तो निन्दन्ति दूरात्परिहरन्ति च ।
मूढास्ते पण्डितम्मन्या बालास्ते वृद्धमानिनः ।
अन्धास्ते दृष्टिमन्तोऽपि प्राप्ता गजनिमीलिकाम् ॥
पश्यन्तोऽपि न पश्यन्ति ते हि ब्राह्मीमितस्ततः ।
अद्यापि ब्राह्मणमुखे नृत्यन्तीं रुचिरैः पदैः ॥
यावदस्ति त्रयी लोके चतुर्मुखमुखोद्गता ।

यावद्वा रामचरितं वाल्मीकिकविचित्रितम् ॥
क्षरन्त्यमृतधारा वा यावद्व्यासस्य सूक्तयः।
वाग्देव्या वरपुत्रस्य कालिदासस्य वा गिरः ॥
तावदेषा देवभाषा देवी स्थास्यति भूतले।
यावच्च वंशोस्त्यार्याणां तावदेषा ध्रुवं ध्रुवा ॥
ग्रसते सांप्रतं यातु बलाज्जनपदानिमान्।
राक्षसी सा म्लेच्छभाषा तिष्ठेदत्र कियच्चिरम् ॥
यावदेवाधिकारोऽस्ति बृटिशामिह भारते।
तावदेव तदीयाया भाषाया अपि जीवितम् ॥
पारसीकागिरोऽप्यासीदीदृगेवादृता पुरा।
हृतादरा त्विदानीं सा वेश्येव गतयौवना ॥ इति ॥

एतावद्भिरपि पद्यैःकाव्यस्यास्य मधुरिमा प्रसादातिशयश्च शक्यः सम्यगनुभवितुं रसिकैः। अहो धन्यः स प्रदेशो यत्रैवंविधा अस्मिन्नपि काले सिद्धसरस्वतीकाः कवयो यत्र चैषां सम्भावयितारो विद्यैकव्यसनिनो महाराजगिरिजानाथसदृशा महीपालाः। सर्वथा वरीवृध्यन्तामेवंविधाः समाश्रितकवयो भूपालाः संस्कृतभाषायां प्रणयपक्षपातिनश्च कविप्रवराः। यमकादावपि कवेरस्याप्रतिहत एव प्रसादगुणःतत्रैकमेव पद्यमत्रोदाह्रियते यथा—

अपगते जलदावरणे चिरात्
स्फुटपुटैःकुमुदैर्नयनैरिव।
कुमुदिनीभिरदृश्यत तारक-
व्रजगतो जगतो हितकृद्विधुः ॥ इति ॥

---

१ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां यथा वाचा निशा दिशेति गिर आप्प्रत्ययः।

यमकचित्रप्रायोऽपि समग्रः सप्तदशः सर्ग इतरकाव्यापेक्षया सुबोधः संवृत्तः । अत्र च चतुर्थसर्गे कायस्थवृत्तान्तो निवेदितोऽतिमात्रमनोरमः । पुरा किल विराजः पुरुषस्य पादोद्भवेषु प्राणिषु प्रदीपाख्यः कश्चिज्जज्ञे । तस्य च विनयोपेतस्तनयो बभूव कायस्थो नाम । तेनैव शब्दलेखनसंकेता वर्णाः प्रादुरकारिषत न तु ततः पूर्वं लिपिर्नामासीत् । तेन पञ्चाशाल्लिपयः प्राकाश्यन्तेत्यादि । एतच्च **उतत्वः पश्यन्न ददर्शवाचमुतत्वः शृण्वन्न शृणोत्येनाम्** । इति श्रुतिवचनविरुद्धमिव प्रतिभाति । एतच्च श्रौतं वचनं श्रुतिसमयेऽपि विद्योतयति लिपेर्विद्यमानत्वम् । अन्यथा ह्यत्र वाचश्चाक्षुषं प्रत्यक्षमभिधीयमानं व्याहन्येत । तथापि नायं कायस्थवृन्तान्तो निर्मूल इति ब्रूमः । अत्र हि स्यात्किमपि मूलं स्याच्च तस्य व्यवस्थाऽप्यन्या ।

काव्ये चात्रायमस्माकमभिप्रायः

**न कः काव्यादस्मादमृतरसनिःस्यन्दमधुरा-**
**दमन्दं नु प्राप्ता रसिकवर आनन्दमतुलम् ।**
**किमन्यद्वक्ष्यामो ललितललनालिङ्गितनू-**
**रपि त्यक्त्वा रामां सुरसमदसीयं रसयिता ॥ १ ॥**
**जयतु गिरिजानाथः स्फूर्जद्यशा महिमण्डले**
**क्षितिपतिरसौ विद्यानिष्ठः श्रितः कविनायकैः ।**
**विलसतु तथा निर्यातं यन्महेशमुखाम्बुजा-**
**दमृतमधुरं तद्वंश्यानां चरित्रमनुत्तमम् ॥ २ ॥**

काव्येऽत्र वर्तमानानां मनोहराणां पद्यानामुपहरणे न प्रभवेदसौ लघीयसी संस्कृतचन्द्रिकेति तानि दिदृक्षमाणैरेतदवश्यं सङ्ग्राह्यम् । कलिकाताप्रभृतीनां वर्णने तु पठितेऽपि नयनगोचरीभूतानिव तांस्तान्पदार्थान्मानसं मनुते । स्थूलदृशा संवेदनीयस्तु नास्त्येकोऽपि दोषोऽत्रमहाकाव्ये । सर्वथा हृदयङ्गममिदं मुहुर्मुहुः पठितमपि पुनः पठनेच्छां जनयति । मूल्यं तु नावबोद्धुं शक्यं निसर्गत एवामूल्यस्यैतस्येति शिवम् ।

---

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

॥ श्रीगणेशाय नमः ॥

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## ॥ मासावतरणिका ॥

निःशेषं शिशिरीकरोति भुवनं मासः सहाः सन्ततं
भानोरप्यहिमान्मरीचिनिचयांश्चान्द्रानिवाभासयन् ।
किन्तु प्राणसमावियोगविकलः पान्थोऽयमेकान्ततः
प्रत्यूषस्युपयाति कामपि दशां चित्तेऽग्निनेव क्षतः ॥ ८ ॥

---

## उद्भटश्लोकाः ।

विद्या सत्कविता तथा सुजनता सेवा तथा भावना
पञ्चैताः परिणिन्यिरे जनयितुं वित्तात्मजं यत्नतः ।
व्यापारान्परिहृत्य हन्त बहुधा तत्रैव रेमे सदा
दुर्दैवेन दुरात्मना विदधिरे पञ्चैव वन्ध्याः स्त्रियः ॥

नाभेर्बिलादथ विनिर्गतपन्नगीयं
संप्रस्थिता नयनखञ्जनभक्षणाय ।
नासां विलोक्य गरुडभ्रमसुद्वहन्ती
लीना हि पीनकुचपर्वतयोरधस्तात् ॥*

---

* कस्याश्चित्तरुण्या रोमावलिवर्णनमिदम् । एषा रोमावलिरूपा भुजगी नाभिबिलान्नयनरूपखंजरीटभक्षणायोपसर्पन्ती मध्ये नासाया गरुडनासासदृश्या अवलोकनेन संजातगरुडाशङ्काऽऽत्मानं परित्रातुं कुचपर्वतयोरधस्ताल्लीनेति तात्पर्यम् ।

# पण्डितराजः श्रीजगन्नाथः ।

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥

भूयांसः खल्वत्रप्राणिनः समुत्पद्यन्ते बहुतराश्च विलीयन्ते । ते किल गणयितुमप्यशक्या एव । ते पुनर्मातुरुदरान्निर्गता इत्येव संभूता इत्यभिधीयन्ते । एवंविधं किल जन्म न केवलं मानुषा अपि तु तिर्यञ्चोऽपि प्रतिपद्यन्ते । किन्तु किमनेन मातुर्यौवनवनकुठारेण जन्मना । स एव किलात्र संभूत इत्यभिधीयते विद्वद्भिर्यस्य दशानामपि दिशां वदनमभिचुम्बति शारदशशिप्रभाभास्वरा कीर्तिर्यस्य वा प्रणयिनीव वशंवदा भगवती गिरांदेवी योवा मदयति सुधामधुरेणाचरितेन मनांसि विबुधानाम् । विरलाः खल्वेवंविधा जन्मिनो जगति जायन्ते । जाताश्च विरला एव नाभिभूयन्ते महीयसाऽहङ्कारेण । योऽयमस्माभिरद्योपवर्णयितुमारब्धः सोऽपिकिल महात्मा प्रतिभटकरिकेसरी पण्डितराजो जगन्नाथ एवंविधैरेव गुणैः सम्पन्नः । बहुभिः किलास्य जीवनवृत्तमतिसंक्षेपतः क्वचित्किंवदतीमयं क्वचित्प्रमाणपरिपूरितं चोल्लिखितं दृष्टमस्माभिः । किन्तु या एतत्सबन्धिन्य एकान्ततो वितथाः श्रूयन्ते वार्ता न ताः कैश्चिदपि सम्यङ्निराकृताः । नापि वा मनोरममुपावर्णि चारित्रमेतस्य । नापि वा समालोचिता एतत्कृताः प्रबन्धाः। अतस्तत्रेदानीं यावच्छक्यं प्रवृत्ताः स्मः ।

यथान्येषां प्राचीनपण्डितानामेवं श्रीजगन्नाथरायस्यापि जननावसरो न शक्यते सुनिश्चितः समवबोद्धुम् । किन्तु पण्डितोत्तंसस्यैतस्य दिल्लीवल्लभावलम्बनं बहुविधैःप्रमाणैर्निर्णीयमानं निवेदयत्यापाततः स्थितिसमयम् । अयं किल भामिनीविलासस्यान्तिमोल्लासे दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वय इति दिल्लीश्वरस्य समीप आत्मना यौवनमतिवाहितमिति

प्रतिपादयति। स च दिल्लीश्वरोऽकबर इत्येके प्राहुः। अपरे तु तं शहाजहानमेव ब्रुवते। जनेषु सुप्रथिता तु प्रथमा वार्ता निर्मूलतैव। जगन्नाथो ह्यात्मना विरचित आसफविलासनाम्नि काव्ये स्वस्य शहाजहानप्रियत्वमुपवर्णयति। शहाजहानस्तु श्रीशालिवाहनशकस्य षोडशशताब्द्या अपरार्धे दिल्लीश्वरत्वमापन्नः। तस्याश्चावसानावसरे कालवशं प्राप्तः। ततः परं च तत्सूनुरवरंगजीवो दिल्लीराजपदमध्यरोहत्। न च जगन्नाथविरचितेषु म्लेच्छभूपालचरितवर्णनात्मकेषु काव्येषु दिल्लीपतेरवरंगजीवस्य चरितं दृश्यते। तदयं पण्डितराजः शहाजहान समीप एव विललास न पुनरवरंगजीवमुपाश्रयदिति प्रतीयते। तेन चावरंगजीवस्य राज्याधिरोहणपर्यन्तमेव दिल्लीनगरेऽस्य संस्थितिरित्यपि सुबोधम्। स च यवनमहिपालः पितरं निगडीकृत्याशीत्युत्तरपञ्चदशशतमिते (१५८०) शालिवाहनशके दिल्लीश्वरपदमात्मसाच्चक्रे। तस्मिंश्चावसरे जगन्नाथो यौवनपरिभूषित आसीदित्युपरितनेन पद्येन स्फुटीभवति। एवं च चत्वारिंशदधिकपञ्चदशशतमितमब्दमारभ्य पञ्चाशदुत्तरपञ्चदशशततमान्तेष्वेवाब्देष्वन्तर्भूतो जगन्नाथस्य जननवत्सर इति वचनं न किल वैतथ्यपदवीमवगाहेत।

पण्डितप्रवरस्यास्याभिजनो देशस्तैलङ्गापरनामाऽऽन्ध्र इति **तैलङ्गकुलावतंसेनपण्डितराजजगन्नाथेन**त्यासफविलासावसाने निबद्धादुद्धृतस्तै**लङ्गान्वयमङ्गलालय** इत्यादिप्राणाभरणवर्तिनः पद्याच्चावगम्यते। अत्रैवमेके संशयीरन्। न किल तैलङ्गान्वय इत्यनेन तैलङ्गप्रदेशसंभवत्वमेतस्यावबोद्धुं शक्यम्। अन्यदेव हि कुलनाम भिन्नमेव चाभिजनप्रदेशाव्हानं भवतीति। सत्यमिव चैतत्प्रतिभाति। अत एव काव्यमालाकाराणामुपरितनाशयगर्भं वचनं केवलं जगन्नाथरायस्य पूर्वजानां तैलङ्गे स्थितिं सूचयितुं प्रभवति न पुनः श्रीजगन्नाथरायस्यापि तदेव जननस्थानमिति। न चास्य वेगिनाडकुलत्वमुच्यमानं विरुध्येतेति वक्तव्यम्। तस्य तैलङ्गीयताव्याप्यत्वेनाविरोधात्। दृश्यन्ते हि बहवस्तैलङ्गकुलसंभूता अपि तदन्तर्गतभे-

दवत्सु कुलेषु परिगण्यमानाः पुरुषाः। यथा हिन्दुपदवाच्येषु ब्राह्मणादिकुलसंभूता इति। एवंच काव्यमालाकाराणां **तैलङ्गाभिजन** इतिवचनस्य तैलङ्गकुल*त्वमेवार्थ इति प्रत्येतव्यमिति प्रतिभाति। तथाच नास्य जन्मभूमिरवबोद्धुं शक्या किन्तु पूर्वजानां निवासस्थानं तैलङ्गप्रदेश इत्येव संसिद्धम्। तैलङ्गताव्याप्येषु च कुलेषु वेगिनाडसंज्ञे कुले लब्धजन्माऽयं पण्डितप्रवर इति काव्यमलाकाराः प्राहुः।

पिता चास्य समस्तपण्डितमण्डलीमण्डनः पेरमभट्टापराख्यः पेरुभट्टो नाम। अयं चातिप्रशंसनीयोऽध्यापक आसीत्। अस्य च वैदुष्यादिविषये रसगङ्गाधरारम्भे श्रीमतो जगन्नाथरायस्योक्तिरियम्---

**श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः**
**काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।**
**देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं**
**शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः॥** §
**पाषाणादपि पीयूषं स्यन्दते यस्य लीलया।**
**तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम्॥** इति॥

यस्य लीलया पाषाणादपि पीयूषं स्यन्दते निर्बुद्धेरपि वदनात्सरसा सरस्वती प्रवर्तत इति भावः। इदमेव च श्रीपेरमभट्टमहाशयस्याध्यापकोत्तमत्वे ज्ञापकम्। नत्वेतत्प्रणीताः केचिदपि प्रबन्धा अस्मच्छ्रवणसरणिमुपयाताः। द्वितीयपद्यनिबद्धं महागुरुपदं जगन्नाथस्यैतच्छिष्यत्वमेव प्रकाशयति। उपरितनपद्ये निर्दिश्यमाना ज्ञानेन्द्रभिक्षुमहेन्द्रप्रभृतयः कदा

---

* भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे। कुलेऽपि च पुमान् **इतिमेदिनी।**

§ शेषाङ्केति---शेषइत्यङ्कश्चिन्हं यस्य तस्माच्छेषोपाह्वादित्यर्थः। शेषोपाह्ववीरेश्वरभट्टादेव च व्याकरणशास्त्रमनेनाधीतमिति प्रसिद्धिः। शेषस्य पतञ्जलेरमलभणितिर्व्याकरणशास्त्ररूपेत्यर्थः

कुत्र समुद्भूता इत्यादि सम्यङ्न ज्ञायते । अस्यैव च महाभागस्यायं प्रभावो यदशेषपण्डितजनपाण्डित्यगर्वसर्वङ्कषः श्रीजगन्नाथः संवृत्तः । पुरन्ध्रिगणवन्दनीयचारित्रा चास्य मूर्तिमतीव लक्ष्मीर्बभूव भार्या लक्ष्मीर्नाम । तयोश्च तथाविधयोरपत्यमयं पण्डितरायः श्रीगन्नाथः । अवितथं किलेदमभिधीयते प्राज्ञैः सुक्षेत्रपतितं बीजं समधिकामेव कामपि सम्पदमुपयातीति । अशेषविद्वज्जनवरेण्येन हि पित्रा निरुपममतिवैभवे जगन्नाथे संक्रमितानि शास्त्राणि समधिकामेव कामपि कान्तिमविन्दन्त । अहो धन्यौ तौ मातापितरौ ययोरयमप्रतिहतवैदुष्यो रसिकशेखरः कविप्रवरश्च पण्डितराजो जगन्नाथस्तनयः ।

यदुक्तं जगन्नाथरायेण **दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वय** इति तेन किलास्याध्ययनादिकं तारुण्यारम्भात्प्राक्तत्समनन्तरमेव वा समवसितमित्यवगम्यते । अन्यथा कथं ब्रूयान्नवीनं वय इति । संभवनीयं चेदम् । अशेषशास्त्रपारदृश्वा जनकोऽध्यापकः पण्डितराजसदृशः प्रशस्यतरबुद्धिविभूषितश्च तनयोऽध्येता इति सङ्घटित एतस्मिन्ननुरूपतमे द्वन्द्वे कथं नाम न वशमनुवर्तेत वशंवदेव रमणी विद्या । जगन्नाथसदृशो यदि पितुरितरमपि गुरुमध्ययनायोपासीत तदाऽपि समधीतेषु शास्त्रेष्वेकान्ततः प्रावीण्यमधिगच्छेत् किंपुनर्जगति निरुपममात्मनस्तनयमवलुलोकिषमाणेनोत्साहवता पाण्डित्यगुरुणा जनकेनाध्यापितः ।

विरलाः किल सरसमधुरपदविन्यासायाः सरस्वत्याः प्रियतमत्वमुपयाता जगन्नाथसदृशा दार्शनिकाः । स किल लोकोत्तरः प्रसादः स चालौकिको मधुरिमा तच्च निरुपममौदार्यं सा च मनोहरता नूनं विरलानामेवान्येषां काव्येष्वनुभूयते । सर्वथाऽवितथं किलोक्तमेतेन भामिनीविलासे—

**गिरां देवी वीणागुणरणनहीनादरकरा**
**यदीयानां वाचाममृतमयमाचामति रसम् ।**

वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन्मूर्धानं नृपशुरथवाऽयं पशुपतिः ॥ इति ॥

न खलु तादृशो रसिक एकोऽपि भुवने दृश्येत यस्यान्तरं न मदयेत्सरस्वतीनिस्यन्दो जगन्नाथस्य। एतस्य हि तत्तद्रसपरिपूरितेषु पठ्यमानेषु तेषु तेषु पद्येषु तत्तद्रसमयतामिवापद्यते चेतो रसिकस्य। मुहुर्मुहुः पठितान्यप्येतस्य पद्यानि पठ्यमानानि नवं नवमेव कमपि रसं वितरन्ति।

अयं चात्मनः पित्रा तुल्यमेव प्रायः सर्वत्रापि शास्त्रेषु प्रावीण्यमधिजगामेति रसगङ्गाधरे तत्र तत्र प्रतिपादितेभ्यस्तेभ्यस्तेभ्यो विषयेभ्यः स्फुटीभवति प्रबन्धास्त्वस्य न सर्वेषु शास्त्रेषु दृश्यन्ते। केवलं व्याकरणे प्रतिवादिमदसिन्धुकूलङ्कषा कुचमर्दिनी अलङ्कारशास्त्रे साहित्ये वा तथाविध एव रसगङ्गाधरश्चेति द्वावेवास्य सुप्रथितौ प्रबन्धौ शास्त्रीयौ। अन्यच्च चित्रमीमांसाखण्डनं नाम श्रीमदप्पयदीक्षितचरणैर्विरचितायाश्चित्रमीमांसायाः खण्डनम्। तदितरे तु सर्वेऽपि लोकोत्तरलालित्यसमुल्लसिताः काव्यमया एव ग्रन्था विरचिता एतेन। काव्यं हि नाम निष्प्रयाससाध्यं वशीकरणं भूपानाम्। स्वभावतो हि दुरूहाणि शास्त्राणि न किल ततः प्रौढमतिमात्रमनोरमेभ्यः प्रमोदमाप्नुवते महीपालाः। तत्र च जगन्नाथेनावलम्बितः स्वप्नेऽप्यदृष्टशास्त्रप्रवेशो म्लेच्छजातीयो महीपतिः। तत्कृतो वा शास्त्रविचारचर्चया तथाविधस्य भूपतेरनुरञ्जनप्रत्याशा। अत एवात्मनः प्रभोर्म्लेच्छमहीपालस्य दुराराध्यं चित्तमाराधयता न लब्ध इतरशास्त्रेषु प्रबन्धान्प्रणेतुमवसरो जगन्नाथेनेति प्रतिभाति। रसास्तु शृङ्गारादयः सरसमतिनोपवर्ण्यमानाः कस्य वा मनसि न प्रमोदं जनयेयुः। यद्यभिलषेयुः कवयस्तदा नूनं निरस्तसंसारवासनमपि पुमांसं कुसुमशरशरशरव्यतामुपनयेयुरविरतरमणीवदनचुम्बनलालसमपि च क्षणादेव निराकृतविषयवासनं विदधीरन्। ततः का कथा यवनस्य। काव्यं च नाम नहि यथावसरमेव रच्यमानं विशेषतो मधुरिमाणमासादयति। अतस्तत्कविभिरनुक्षणमेव निर्मीयते। अशक्यंच

सर्वाङ्गमनोरमतरं काव्यमन्तरा निसर्गत एव विभिन्नरुचेर्लोकस्य चित्त-मारावयितुम्। अत उच्यते विशेषतो न लब्धः शास्त्रीयप्रबन्धान्प्रणेतुमवसरो जगन्नाथेनेति।

[ क्रमशः ]

---

# प्रासपत्रम् ।

## ( पूर्वप्रकाशितात्परम् )

द्वितीयस्य तु चुरादिणिचो वैकल्पिकत्वस्येत्यादिनाश्वधाटीं जगन्नाथो विश्वत्स्थामरीरचदित्यन्तेन रारचीतीत्येतस्य वाचकतोक्ता विद्याधर-मिश्रेण साऽति विचिन्त्या । साधारण्येन चुरादिणिज्विकल्पकल्पनाया अश्रद्धेयत्वात् । तदुक्तन्नागेशभट्टेन भाष्याऽधितिमिङ्गिलाय-मानेन । गणेरनित्यण्यत्वे णेरणाविितिसूत्रस्थभाष्यासंगतिरिति । अणौ कर्मणो णौकर्तृत्वे भवत्यात्मनेपदङ्गणिस्तुनित्यण्यन्त इति हि तत्र भाष्ये स्थितम् । एतेन वृत्तिः परास्तापध्यानकथा चाप्यस्ततामगात् । कथकः कत्थनानन्दसन्दोहो भवेदेव । माहक्षलक्षावध्यदक्षदीक्षादीक्षितेनापि प्रौढमनोरमायामदन्तत्वप्रतीकमुमादाय गर्वयतावुक्तम् । अयंभावः । कथयति गणयतीत्यादावपुधावृद्धिनिवारणेनाचकथदित्यादावग्लोपित्वाद्दीर्घ-सन्वद्भावविरहेण सारभामप्रभृतीनामुपधाह्रस्वव्यावर्तनेन चादन्तत्वं सार्थकम् । गर्वादीनान्तु अदन्तत्वे फलाभावाण्णिज्विकल्पोनुमीयते । युक्तंचैतत् । चिन्तयतेरिदित्त्वं सामान्यापेक्षकं ज्ञापकमिति मते इहाप्यकारफलस्येष्टत्वात् । विशेषापेक्षकमिति मतेऽपि तत्र लृकार इकार ईकार उकार ऊकारश्चेत्यनुबन्धा ज्ञापकतया स्वीकृता यथा चावि-शङ्कन इति निषेधस्तथादन्ततााप्यस्तु । एवंसति मतद्वयेऽप्येकरूप-फललाभात् । विकल्पस्तावदनेकदोषदुष्टो निर्मूलश्चेति सुष्ठु द्रष्टव्यम् ।

अश्वघाटीञ्जगन्नाथो विश्वहृद्यामरीरचदित्यत्रारीरचदिति म्लेच्छे[1] एव । वाचकताया: कथमप्यनुपपत्तेः । रचेरग्लोपितायाः प्रतिसमालोचकीभूतमतेप्यनपायात् । सन्वद्भावदीर्घौ विना चास्यसुतरामनुपपत्तिस्तदत्राग्रहत्याग एव ज्यायान् । अचीकरदिति तत्र पठनीयम् ।

यङश्चर्चा च चिन्तनीया रारचीतीत्यत्रत्या । तस्य असभ्यत्वात् । अन्यथा सूचिसूत्रिमूत्रिभ्यस्त्रिभ्यस्तद्विधेः प्रातिकूल्यम्प्रसज्येतेति सङ्क्षेपः ।

॥ श्लोकः ॥

अब्धावुत्तरलीकृते तरलिते दिङ्मण्डले चान्द्रिका-
कृष्ट्या तत्र च भूतनाथनयने ज्वालावलिज्वालिते ॥
स्फारोत्फूत्कृतिनागचीत्कृतिगजे पञ्चाननोद्गर्जिते
हाहाकारभये भविष्यति सखे त्वं रे कथं स्थास्यसि ॥ १ ॥

---

## नामनियोगरीतिः ।

यथा—

ऊर्ध्वपुण्ड्रं द्विजः कुर्यात्त्रिपुण्ड्रं क्षत्रियस्तथा ।
वैश्यैस्त्रिकोणमालेख्यं वर्तुलं शूद्रजातिभिः ॥

इत्यादिशास्त्रात् तथाविधतिलकधारिणं यं कंचिद्वा दृष्टं तिलकाकृत्यैव ब्राह्मणमन्यं वा निश्चित्य तदनुरूपं व्यवहरति व्यावहारिकस्तथा पृष्टेनोच्चारितेन च नाम्नैव ब्राह्मणोयमन्यो वेति निश्चिनोति। इत्थमार्याणां वेशेन नाम्ना च शास्त्रदृष्टेन न कस्यापि परिचयोपपत्तौ विप्रतिसंभावना स्यात्। तदत्र नामकथनं विचार्य प्रबध्यते।

---

१ म्लेच्छो ह वा एष यदपशब्द इति भाष्यम् ( स० सम्पादकः )

तत्र रघुनन्दनकृतज्योतिःसंस्कारोद्वाहतत्वे गर्गः—

आदौ घोषवदक्षरं यवरलान्मध्ये पुनः स्थापये-
दन्ते दीर्घविसर्जनीयरहितं नाम प्रयत्नात्कृतम्।
ऋक्षे तिष्यकराश्विसौम्यवसुभे चित्रानुराधोत्तरे
पौष्णे चादितिरोहिणीषु शुभकृत्पुंसां समैरक्षरैः ॥ इति ॥

दीपिकास्वरसात्स्वातिशतभिषाश्रवणा अत्र ग्राह्या । गोभिलसंमतं पूर्वार्धं तेन नारायण जनार्दनादि नाम कुर्यात्।

यत्तु नामकरणं कुलदेवतानक्षत्राभिसम्बन्धं पिता नाम कुर्यादन्यो वा कुलवृद्ध इति कल्पतरुधृतशङ्खलिखितवचनेनाभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं गोत्राश्रयं नक्षत्राश्रयमप्येक इति गोभिलसूत्रेणोपनयनकाले च नक्षत्राभिसम्बन्धेन नामाभिधानं तच्छतपदचक्रानुसारात्स्वनक्षत्रपदानुसाराज्ज्ञेयम् । पाश्चात्यानां तथैव व्यवहारः । यत्र तु न तथाकृतं तत्र नामाक्षरानुसारनक्षत्रादपि फलं ज्ञेयम् । अत्र कुलवृद्ध इति दर्शनात्संस्कारान्तरे तथैव व्यवहारः ।

गोभिलः—एतदतद्धितम्—एतन्नाम तद्धितरहितं कुर्यात् । तच्च देवशर्माद्युपपदान्तत्वेन कर्तव्यम् । तथाच विष्णुपुराणे ३ अंशे १० अध्याये—

ततश्च नाम कुर्वीत पितैव दशमेऽहनि ।
देवपूर्वं नराख्यं हि शर्मवर्मादि संयुतम् ॥
शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रसंश्रयम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥
नार्थहीनं नचाशस्तं नापशब्दयुतं तथा ।
नामङ्गल्यं जुगुप्स्यं वा नाम कुर्यात्समाक्षरम् ॥
नातिदीर्घं नातिह्रस्वं नातिगुर्वक्षरान्वितम् ।
सुखोच्चार्याक्षरं नाम कुर्याच्च प्रवणाक्षरम् ॥

प्रवणाक्षरं लघूत्तराक्षरमिति तट्टीकाकारः ।

अत्र स्मार्तो रघुनन्दनः संस्कारतत्वेऽर्थमित्थं व्याकरोत् । नरमाचष्ट इति नराख्यं नरनाम देवात्पूर्वं तच्च विशिष्टं शर्मयुतम् ।

**शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः।**
**भूतिर्गुप्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्॥**

इति यमवचने समुच्चयोपलब्धेः शर्मान्तं ब्राह्मणस्य स्यादिति शातातपीयेन शर्मान्तता च। तेन अमुकदेवशर्मेति नामायातम्। वङ्गेऽनेके गौडीयास्तथैव व्यवहरन्तीति।

वाचस्पतिमिश्रस्तु ततोऽन्यथा व्याचख्यौ। स तु देवेति देववाचकं हरिरित्यादिकं नाम्नः पूर्वप्रतीकं शर्मेत्युत्तरप्रतीकं तेन हरिशर्मा नारायणशर्मेत्यादिकमुपपद्यते नामेत्याह। मैथिलानां व्यवहारो पि तथैव एतत्तु द्वैतनिर्णये तेन विशेषतः प्रपञ्चितम्।

जीवतां नाम्नः श्रीपूर्वकत्वं यथा—

**देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्।**
**सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्॥**

इति राघवभट्टधृतप्रयोगसारदर्शनात् स्वर्गकामित्वादिना सिद्धोऽधिकारो येषां नराणामित्यनेन जीवतां* श्रीशब्दादित्वं नाम्नो न मृतानां तथेति शिष्टाचारः। इति संस्कारोद्वाहज्योतिस्तत्वे रघुनन्दनः।

स्त्रीणां तु नाम—

**स्त्रीणांसुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्।**
**माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्॥**

इति वचनादयुग्दान्तं स्त्रीणामिति गोभिलसूत्राच्च यशोदा सारदा वरदा सुखदेत्यादि शस्तम्। तच्च द्विजातीनां देव्यन्तम्। देव्यन्ताश्च स्त्रियः सर्वा दास्यन्ताः शूद्रयोनय इति कर्मविपाकवचनात्। शूद्रो दासान्तकः स्मृत इति वचनात्तत्पत्न्याश्च पुंयोगाज्जातेश्चेतीप्रत्ययेन दास्यन्तता। व्यवहारोऽपि शूद्रे तथैव।

यत्तु देव्यन्ता इति सर्ववर्णपरमिति तन्न। प्रकारणाद्द्विजातिपुंयोगबाधाच्च। शर्मणीवर्मणीप्रयोगस्तु न व्यवहार्य इति।

---

* यागादिक्रियाधिकारः स्वर्गकामित्वं च जीवतामेव संभवति।

ब्राह्मणपुत्रांश्चानीतवानसीति । कथं न भवेरीदृशः कुलमेवेदृशं राजपुत्र-देशीयक्षत्रियाणाम् । तावत्पुनरश्रूयत मर्मरः[1] पादक्षेपश्च । ततो विरम्य मुनिः स्वयमुत्थाय शिलापीठमेकमारुह्य निपुणतया परितः पश्यन्नपि कारणं किमपि नावलोकयामास चरणाक्षेपशब्दस्य ।

अथ पुनरेकतानेन निपुणं निरीक्षमाणेन गौरसिंहेन दृष्टं यत्कुटीर-निकटस्थनिष्कुटक[2]कदलीकूटे छिन्नास्तरवोऽतिरां कम्पन्त इति । तदेव संशयस्थानमित्यङ्गुल्या निर्दिश्य कुटीरवलीके[3] गोपयित्वा स्थापितानाम-सीनामेकमाकृष्य रिक्तहस्तेनैव मुनिना पृष्ठतोऽनुगम्यमानः कपोलतल-विलम्बमानांश्चश्रुश्रुम्बिनः कुटिलकचान्वामकराङ्गुलिभिरपसारयन्मुनिवेषोऽपि किञ्चित्कोपकषायितनयनः करकम्पितकृपाकृपणकृपाणो महादेवमारिराध-यिषुस्तपस्विवेषोऽर्जुन इव शान्तवीररसद्वयस्नातः सपदि समागतवांस्तन्निकटे। अपश्यच्च लताप्रतानवितानवेष्टितरम्भास्तम्भत्रितयस्य मध्ये नीलवस्त्र-खण्डवेष्टितमूर्धानं हरितकञ्चुकं श्यामवसनानद्ध*कटितटं कर्बुराधोवसनं काकासनेनोपविष्टं रम्भालवाललग्नाधोमुखखड्गत्सरु[1]न्यस्तविपर्यस्तहस्तयुगलं लशुनगन्धिभिर्निःश्वासैः कदलीकिशलयानि मलिनयन्तं नवाङ्कुरित-श्मश्रुश्रेणिच्छलेन कन्यकापहरणपङ्ककलङ्कपङ्ककलङ्किताननं विंशतिवर्ष-कल्पं यवनयुवकम् । ततः परस्परं चाक्षुषे[2] सम्पन्ने दृष्टोऽहमिति निश्चित्योप्लुत्य कोशात्कृपाणमाकृष्य युयुत्सुः सोऽपि सपदि संमुख-मवतस्थे । ततस्तयोरेवं सञ्जाताः परस्परमालापाः ।

**गौरसिंहः**—कुतो रे यवनकुलकलङ्कः ।

---

१ पर्णानां शब्दः । २ गृहारामास्तु निष्कुटा इत्यमरः । ३ वलीकं छदिषः प्रान्तः (पाखाडे इति भाषा)

* आनद्धः आसमंतात् बद्धः ।

१ त्सरुः खड्गमुष्टिः २ चक्षुर्व्यापारे दर्शन इत्यर्थः

**यवनयुवकः**—आः वयमपि कुत इति प्रष्टव्याः। भारतीयकन्दरिकन्दरेष्वपि वयं विचरामः शृङ्खलाङ्गूलविकलानां हिन्दुपदव्यवहार्याणां च युष्मादृक्षाणां पशूनामाखेटकक्रीडया रमामहे।

**गौरसिंहः**—( सक्रोधं विहस्य ) वयमपि तु स्वाङ्कागतसत्ववृत्तयः शिवस्य गणा अत्रैव निवसामः। तत्सुप्रभातमद्य यत्स्वयमेव त्वं दीर्घदावदहने पतङ्गायितोऽसि।

**यवनयुवकः**—अरेरे वाचालाः ह्यो रात्रौ भवत्कुटीरे रुदतीं समायातां तनयां सपदि प्रयच्छत तत्कदाचिज्जीवतोऽपि त्यजेयमन्यथा मदसिभुजङ्गिन्या दष्टाः क्षणात्कथावशेषाः संवत्स्यर्थ।

कलकलमेतमाकर्ण्य श्यामबटुरपि कन्यकासमीपादुत्थाय दृष्ट्वा च हन्तुमेतं यवनवराकं पर्याप्तो गौरसिंह इति मा स्मागमदन्योऽपि कश्चित्कन्यकामपजिहीर्षुरिति वलीकादेकं विकटखड्गमाकृष्य त्सरौ गृहीत्वा कन्यकां रक्षंस्तदध्युषितकुटीरनिकट एव तस्थौ।

गौरसिंहस्तु कुटीरान्तः कन्यकास्ति सा च यवनवधव्यसनिनि मयि न शक्या द्रष्टुमपि किं नाम स्प्रष्टुं तद्यावत्तव कवोष्णशोणिततृषित एष चन्द्रहासो न चलति तावत्कूर्दनं वा उत्फालं वा यच्चिकीर्षसि तद्विधेहि। इत्युक्त्वा व्यालीढमर्यादया सज्जः समतिष्ठत।

ततो गौरसिंहो दक्षिणान्वामांश्च परःशतान्कृपाणमार्गानङ्गीकृतवतो दिनकरकरस्पर्शचतुर्गुणीकृतचाकचक्यैश्चञ्चच्चन्द्रहासचमत्कारैश्चक्षूंषि मुष्णतो म्लेच्छहतकस्य केनाप्यनुपलक्षितोद्योगोऽकस्मादेव स्वासिना कलितक्लेदसंजातस्वेदजलजालं विशिथिलकचकुलमालं भ्रूभङ्गभग्नभालं शिरश्चिच्छेद।

---

१ कवोष्णम् ईषदुष्णम्। २ चन्द्रहासः तरवारिः ३ कूर्दनं क्रीडेति वाचस्पतिः [ कुर्द–क्रीडायां ल्युट् ] ४ उत्फालः उत्पतनम् [ उडो ] ५ व्यालीढं नाम युद्धावस्थानविशेषः कोरण्डमण्डनादिषु प्रसिद्धः।

अथ मुनिरपि दाडिम्बकुसुमास्तरणाच्छन्नायामिव ज्वलदङ्गाररचितायां चितायामिव गाढरुधिरदिग्धायां वसुधायां शयानं वियुज्यमानभारतभुवमालिङ्गन्तमिव निर्जीवीभवदङ्गबन्धचालनपरं शोणितसङ्घातव्याजेनान्तःस्थितरजोराजिमिवोद्गिरन्तं कलितसायन्तनघनाडम्बरविभ्रमं सततताम्रचूड[1]-भक्षणपातकेनेव ताम्रीकृतं छिन्नकन्धरं यवनहतकमालोक्य सहर्षं ससाधुवादं सरोमोद्गमं च गौरसिंहमाश्लिष्य भ्रूभङ्गमात्राज्ञप्तेन भृत्येन मृतककञ्चुक कटिबन्धोष्णीषादिकमन्विष्यानीतं पत्रमेकमादाय स्वकुटीरं प्रविवेश ।

इति श्रीशिवराजविजयोपन्यासे प्रथमविरामे
प्रथमो निश्वासः

---

## अथ द्वितीयो निश्वासः ।

**रात्रिर्गमिष्यति भविष्यति सुप्रभातं**
**चन्द्रोऽप्युदेष्यति हसिष्यति पङ्कजश्रीः ।**
**इत्थं विचिन्तयति कोशगते द्विरेफे**
**हा हन्त हन्त नलिनीं गज उज्जहार ।**

इतस्तु स्वतन्त्रयवनकुलभुज्यमानयवनपुराधीशप्रेषितः पुण्यनगरस्य समीपे एव प्रक्षालितगण्डशैलमण्डलाया निर्झरवारिधारापूरपूरितप्रबलप्रवाहायाः पश्चिमपारावारप्रान्तप्रसूतगिरिग्रामगुहानिर्गताया अपि प्राच्यपयोनिधिचुम्बनचञ्चुराया रिङ्गत्तरङ्गभङ्गोद्भूतावर्तशतभीमाया भीमाया नद्या अनवरतनिपतद्बकुलकुलकुसुमसुरभीकृतमपि नीरं वगाहमानमत्तमतङ्गजमदधाराभिः कटूकुर्वन् हयहेषाध्वनिप्रतिध्वनिबधिरीकृतगव्यूतिमध्यगाध्वनीनवर्गः पटकुटीरकूट* विहितशारदाम्भोधरविडम्बनो निर-

---

१ ताम्रचूडः कुक्कुटः ।
* पटकुटीरकूटः— शिविरसमुदायः ।

पराधिभारताभिजनपीडनपातकपटलैरिव समुधूयमाननीलध्वजैरुपलक्षितो विजयपुरेश्वरस्यान्यतमः सेनानीरफझलखानः प्रतापदुर्गादविदूर एव शिववीरेण सहाहवद्यूतेन चिक्रीडिषुः ससेनस्तिष्ठति स्म।

अथ जगतः प्रभाजालमाकृष्य कमलानि संमुद्य कोकान्सशोकीकृत्य सकलचराचरचक्षुःसञ्चारशक्तिं शिथिलीकृत्य कुण्डलेनेव निजमण्डलेन पश्चिमाशां भूषयन्वारुणीसेवनेनेव माञ्जिष्ठमञ्जिमरञ्जितोऽनवरतभ्रमण-परिश्रमश्रान्त इव सुषुप्सुर्म्लेच्छगणदुराचारदुःखाक्रान्तवसुमतीवेदनामिव समुद्रशायिनि निविवेदयिषुर्वैदिकधर्मध्वंसदर्शनसंजातनिर्वेद इव गिरि-गहनेषु प्रविश्य तपश्चिकीर्षुर्घर्मतापतप्त इव समुद्रजले सिस्नासुः सायं समयमवगत्य सन्ध्योपासनमिव विधित्सुर्नास्ति कोऽपि मत्कुले यः सकेशग्राहं धर्मध्वंसिनो यवनहतकान्यङ्घ्रियादस्माद्भारतगर्भान्निःसारयेदिति चिन्ताक्रान्त इव कन्दरिकन्दरेषु प्रविविक्षुर्भगवान्भास्वान्क्रमशः क्रूरकरान-पहाय दृश्यपरिपूर्णमण्डलः संवृत्य श्वेतीभूय पीतीभूय रक्तीभूय च गगन-धरातलाभ्यामुभयत आक्रम्यमाण इवाण्डाकृतिमङ्गीकृत्य *कलिकौतुक-कवलीकृतं सदाचारप्रचारं पातकपुञ्जपिञ्जरितं धर्मं यवनगणग्रस्तं भारतवर्षं च स्मारयन्नन्धतमसे च जगत्पातयंश्चक्षुषामगोचर एव सञ्जातः।

ततः संवृत्ते किञ्चिदन्धकारे धूपधूमेनेव व्याप्तासु हरित्सु भुशुण्डीं स्कन्धे निधाय निपुणं निरीक्षमाण आगतप्रत्यागतं च विदधानः प्रताप-दुर्गदौवारिकः कस्यापि पादक्षेपध्वनिमश्रौषीत् ततःस्थिरीभूय पुरतः पश्य-न्सत्यपि दीपप्रकाशेऽवतमसवशादागन्तारं कमप्यनवलोकयन्गम्भीरस्वरेण समवादीत् कः कोऽत्रभोः कः कोऽत्र भो इति । भूयः साक्षेपमवोचत्क एष मामनुत्तरयन्मुमूर्षुः समायाति बधिरः। ततो दौवारिक शान्तो भव किमिति व्यर्थं मुमूर्षुरिति बधिर इति च वदसीति वक्तारमपश्यन्नैवाकर्णि

* सूर्योऽण्डाकृतिरुदेत्यस्तमेति चेति वदन्ति बहुविद्याः।

# स्वागताशीर्वचनमालिका. *

ॐ

## श्रीसद्गुरुचरणारविन्दाभ्यां नमः

श्रीशृङ्गेरिजगद्गुरुसभास्थानस्थापितसद्विद्यासञ्जीविनीपाठशालाध्यक्षोपाध्यायान्तेवासिप्रभृतिभिरुपदीकृता स्वागताशीर्वचनमालिकेयममन्दानन्दमरन्दतुन्दिलं रचयतुतरां श्रीमत्कर्णाटसिंहासनाधीश्वरश्रीकृष्णराजमहाराजमनोरविन्दम्।

---

यदीयाङ्घ्रिपङ्केरुहध्यानमात्रा-
दभीष्टार्थसिद्धिर्भवेदेव नृणाम्।
सदा सच्चिदानन्दरूपं शिवं तं
गुरूणां गुरुं भावयामोऽद्य भक्त्या॥ १
यदालोकमात्रेण पुंसां हि लोके
जरीजृम्भ्यते स्वर्धुनीस्पर्धिनी वाक्।
स्वपादाम्बुजासक्तभक्तेष्टदा नो
गिरां देव्यसौ लास्यमास्ये तनोतु॥ २
निमज्जं निमज्जं सुसारस्वताब्धौ
शुभाः सूक्तिमुक्ताः समुद्धृत्य काश्चित्।
इदानीं वयं तुभ्यमभ्यर्पयामो
मुदाकृष्णराजप्रभो स्वीकुरुष्व॥ ३
किमु स्वागतं साम्प्रतं कृष्णराज
प्रभो स्वानुगैश्चापि मार्गाः शिवास्ते।
भवद्भ्रातृमुख्यैः सुखं वाऽद्य राज्याः
प्रशान्ताधिरोगाश्च किंनु प्रजास्ते॥ ४

---

* कतिपयदिवसेभ्यः प्राक् शृङ्गेरीपुरंसमागतवते श्रीमज्जगद्गुरुचरणदर्शनाकाङ्क्षिणे श्रीमैसुराधीश्वराय तत्रत्यैर्विद्वद्भिः प्रदत्तं संमानपत्रमिदम्।

क्वचिद्वेदविद्भिः क्वचिच्छ्रौतविद्भिः
क्वचिन्न्यायशब्दादिशास्त्रप्रवीणैः।
क्वचिद्ब्रह्मविद्याविचारानुषक्तैः
सभा मण्डितेयं विभात्यद्य राजन्॥ ५

वयं स्तोतुमीहामहेऽवद्यशीलं
नरं नैव मोचारसस्यन्दिवाचा।
नरेन्द्र त्वदीया गुणा रम्यरम्या
बलादद्य वाचालयन्ति प्रभोऽस्मान्॥ ६

अहो भाग्यमेतन्महाराज ते य-
न्महानुग्रहस्यासि पात्रं गुरूणाम्।
गुरुर्ब्रह्मविष्णू गुरुः श्रीमहेशो
गुरुर्ब्रह्म साक्षाद्धि वेदा गृणन्ति॥ ७

न बुध्या न शुध्या न चाप्यौषधैर्वा
प्रशान्तेति मत्वा महामारिकैषा।
महात्मानमेनं शरण्यं विभाव्य
त्वमायात इत्यत्र मन्यामहेऽद्य॥ ८

नृपस्तादृगीदृक्प्रभावोऽयमित्या-
दिभिस्त्वां मृषा नैव तुष्टूषवः स्मः।
प्रभो नामतः केवलं नासि कृष्णः
परं त्वर्थतः श्रीनिवासोऽसि साक्षात्॥ ९

निरालम्बलोकावने बद्धदीक्षै-
र्नरो देशिकेन्द्रैः प्रदत्तावलम्बः।
न किं वाञ्छितार्थं लभेतेह सर्वं
न केनापि मोहेन कार्येह चर्चा॥ १०

इदं क्षेत्रमत्यन्तरम्यं पवित्रं
मुनेर्ऋष्यशृङ्गस्य तत्तादृशस्य।

---

१ मोचा कदली।

यदीयाक्षिवीक्षाबलादिष्टमापुः
पुरा रोमपादादयो भूमिपालाः ॥ ११

महाभाग्यमेतन्महाराज नॄणां
महीख्यातकर्णाटराज्यस्थितानाम्।
यतः शौर्यधैर्याद्युपेतोऽनवद्यः
समारूढसिंहासनोऽसि त्वमद्य ॥ १२

वयं भावयामो महाराज चित्ते
व्ययं भूरि वित्तस्य तूलाय मत्वा ।
गदार्तावने बद्धदीक्षं भवन्तं
गदाशङ्खचक्रादिचिह्नं मुकुन्दम् ॥१३

यथा शीतभानुं हि दृष्ट्वा चकोरा
यथा चण्डभानुं च कोकाःप्रहृष्टाः ।
तथा कृष्णराजेन्द्र दृष्ट्वा भवन्तं
परानन्दसिन्धौ प्रमग्ना भवामः। १४

सदा शारदाम्बा शशाङ्कार्धमौलि-
स्तथा रत्नगर्भो गणेशो गुरुश्च ।
महाराज सर्वेऽपि यच्छन्तु तेऽमी
मनोभीऽष्टजातं विशिष्टप्रहृष्टाः ॥ १५

प्रभो पञ्चदश्यानिबद्धां विशुद्धा-
मिमां पद्यमुक्तासराणां सुरम्याम्।
भृशं लोभनीयामशेषैः समीड्यां
मुदाङ्गीकुरुष्वाद्य मालाममूल्याम् ॥ १६

इति श्रीसद्विद्यापाठशालाध्यक्षेण श्रीवैद्यनाथशास्त्रिणा विरचिता

स्वागताशीर्वचनमुक्तामालिका ।

## समस्यापूर्तयः ।

[ पूर्वतोऽनुवृत्ताः ]

बलेस्तदा वामनदानकाले
गूढे गते दैत्यगुरौ हताक्षे ।
भृङ्गारतोऽभूत्पतिताद्विरावो
घघग्घघग्घग्घग्घघग्घघग्घघ् ॥ १

घण्टापथे दाशरथौ सवर्गे
समागते दर्शनकौतुकिन्याः ।
कुम्भाच्च्युताम्भिःस्वन आविरासी-
द्घघग्घघग्घग्घघघग्घघग्घघ् ॥ २

मुदा तदोवाच कुमारलक्ष्मणः
स्फुटा विशुद्धिर्बत जानकीमुखम् ।
कथं न्वहो कीलकलापसंकुले
विभाति वह्नौ जलजं यथा जले ॥ ३

जानाति गुप्तं मधु का नु लोके
महीरुहं किं क्रकचः करोति ।
कामं किमिच्छन्ति तथा चकोराः
पिपीलिका कृन्तति चन्द्रबिम्बम् ॥ ४

रुषा स्थितायां दयितस्य सन्निधौ
करेरुणस्य स्फुटतामुपागते । [ ? ]
मुखेन्दुरासीन्मलिनः स्त्रिया हठा-
द्विभाति मेघे कमलं वने यथा ॥ ५

केकागीतिसुकौशलैः शिखिदलैरुन्मोचितं मेचकं
सान्द्रस्निग्धनवाम्बुवाहविलसद्दीप्तिं च सम्मोदिनीम् ।
दृष्ट्वा मानसगामिनां विसयुतं तोटौ मरालावले-
रब्जं कस्य मुदं तनोति न विदन्काले निदाघे गते ॥ ६

काव्यतीर्थोपाधेर्भट्टाचार्यस्य
श्रीविधुशेखरशर्मणः ।

रथो रमेशस्य विहारशेषे
गिरिरथो रैवतकस्य नूनम् ।
समेति कृत्येति रवं स्म रम्यं
घघग्घघग्घग्घघघग्घघग्घघ् ॥ १
हते दशास्ये जनकात्मजाऽनले
परीक्षणार्थं प्रभुणा नियोजिता ।
प्रविश्य तत्रैव हसन्मुखी तदा
विभाति वह्नौ जलजं यथा जले ॥ २
सरोवरोर:स्थशशांकबिम्बे
विलोक्य पातं कबिरेव कस्या:। ( ? )
वदत्यसौ संतरणच्छलेन
पिपीलिका क्रुन्तति चन्द्रबिम्बम् ॥ ३
गते शुचौ फुल्लसरोजलोचनां
पयोदवक्त्रां पयसा समागताम् ।
विलोक्य वर्षां मुदिता तदा तडित्।
विभाति मेघे कमलं वने यथा ॥ ४
मार्तण्डस्य करो यथा व्यपगते लब्धोदयो दुर्दिने
शीतांशो: किरणो यथा मसृणपाती कृष्णपक्षे गते; [?]
पीडान्ते रुचिदो यथाम्लरस उत्फुल्लं तथा सुन्दरं
अब्जं कस्य मुदं तनोति न विन्दकाले निदाघे गते ॥५*

रत्नेश्वरपुरनिवासिन:
श्रीश्रीमन्तविद्याभूषणस्य ।

* * *

अवसितं सर्वासां समस्यापूर्तीनां मुद्रणम्। अथाऽचिरादेवैता: परीक्ष्य य: परीक्षामुत्तरिष्यति तस्मै प्रतिश्रुतपूर्वमुपाधिं दास्यति प्रष्टा समस्यानामिति
स. संपादक:।

---

* नित्यं संहितैकपदवत्पादेष्वर्धान्तवर्जमित्यस्योल्लङ्घनं न शोभते ।

## सानन्दमङ्गीकारः ।

हिन्दीभाषायाः प्रथमपुस्तकं कलिसन्तारणोपनिषच्चेति पुस्तकद्वयं कल्याणनगरवर्तिश्रीवेंकटेश्वरयन्त्रालयाध्यक्षेण श्रीमता गंगाविष्णु श्रीकृष्णदासेन समालोचनार्थं प्रेरितमधिगतमस्माभिः। एतस्य प्रेषयितारं च धन्यं ब्रूमः। यथावसरं च चन्द्रिकायामेतत्समालोचयिष्यते ।

---

## समालोचना ।

संस्कृतकाव्यकादम्बिनीसभासमस्यापूर्तिः—सहृदयपाठकप्रवराः न खलु वयं केषाममि गुणेषु मनागपि दोषानारोपयितुमिच्छामो नापि वा कांश्चिदप्यवमन्तुमभिलष्यामः । एषा पुनर्भगवती संस्कृतभाषा नानाविधैरुपप्लवैर्व्याकुलीभूतेति तस्याः समुन्नतये ये ये प्रयत्ना विद्वद्भिरास्थीयन्ते तेषां तेषां प्रकृतोपयुक्तत्वं तदभावो वा पर्यवस्यति पर्यवस्येच्चेति विवेचनं देववाण्याः समुन्नतय एव च प्रयत्नगतदोषाणामाविष्करणं साम्प्रतमतिमात्रं साम्प्रतमिति वयं मन्यामहे । तथाननुष्ठानमेव परं दूषणं गुणज्ञानामिति च निश्चला नो बुद्धिः । अत एव साम्प्रतं काव्यकादम्बिन्याः समालोचनां निःपक्षपातिना मनसा विधातुमिच्छामः । मुद्रणदोषास्त्वनवधानमूलका एवेति न तानत्र प्रदर्शयितुमिच्छामः किन्तु यैः कादम्बिनी सजलकादम्बिनीसमानतामधिगच्छेत्तथाविधानेव कांश्चिद्दोषान्प्रकाशयितुमीहामहे । सतस्तु गुणानपि नोपेक्षामहे ।

एतत्तु निकामं प्रीणयति नश्चेतो यत्साम्प्रतं ग्वाल्हेरनिवासिभिः पण्डितैर्महीयसा प्रयत्नेन नानाविधपण्डितसाहाय्येन च संस्कृतकाव्यकादम्बिनी नाम सभा निरमायि । नूनमेतद्भागधेयं संस्कृतभाषाया यदस्याः पारमार्थिक्यामवस्थायां निपतितममीषां चक्षुः । किन्तु तस्याः समुद्धरणाय विधीयमाने मासिकपत्रिकादिरूपे प्रयत्ने दोषबिन्दोरप्यवशोषणं निकाममनुचितमिति

प्रयासैरवबोद्धव्यम्। नापि वा पारमार्थिकदोषाणां दर्शयितारः प्रत्याख्येयाः। दोषा ह्युपेक्षमाणा उपेक्षितारमेव दूषयन्ति न पुनरंशतोऽपि दर्शयितारम्। कादम्बिन्यास्तु प्रधानसभासदो नैतन्मनसि कुर्वन्तीत्येतदेव संस्कृतभाषाया भद्रं कामयमानानां मनो दूनयति। विरलानि खलुकादम्बिन्यां निर्दोषाणि पद्यानि। तथा हि। द्वितीयखण्डस्य द्वितीयसंख्यायां पञ्चमं पद्यम्——

**युधि शितशरजालैर्लूनगात्रं पवित्रं**
**शयविगलितशस्त्रं वीक्ष्य वृत्रो ह्यमित्रम्।**
**यदपि वशगतं तं नावधीत्तन्न चित्रं**
**न चलति निजधर्मान्नीतिमानेत्य नीतिम्॥**

निक्षिप्यतामत्र तावत्स्थूलापि दृष्टिः। सति कर इति सुबोधे शब्देऽसतिच श्लेषसंभवे किमत्र दुर्बोधतापादनमन्तरा प्रयोजनमप्रयुक्तस्य शयशब्दस्य प्रयोगेणेति। किं च वृत्रो ह्यमित्रमित्यत्र हेः प्रयोगस्य प्रयोजनमिति च विचार्यतां निपुणम्। पूर्वार्धेऽनुपयुक्तोऽपि हिः प्रयुज्यत उत्तरत्र तु निकाममावश्यकोऽपि न निबध्यत इति न जानीमः किमेतदिति। किं च नीतिमतः कदा वा नीत्या सह विरहः सम्पद्यते येन नीतिमेत्यैव स धर्मान्न चलेदित्यपि सुधिय एव विदांकुर्वन्तु। प्रथमे पादे पवित्रशब्दन्यासः किं हेतुक इत्यपि न प्रतीयते। किमु पवित्र इति शत्रुर्नवध्यत आहोस्वित्करविगलितशस्त्र इति। आद्ये युद्धारम्भ एवान्याय्यः पवित्रे शस्त्रक्षेपस्य सर्वथानर्हत्वात्। यदि तु **आततायिनमायान्तं हन्यादेवाविचारयन्निति** पवित्रेऽपि शस्त्रक्षेपस्यार्हत्वं साध्यते तदा शयविगलितशस्त्रमित्यनेनैव तदुत्तरं युद्धस्याधर्म्यत्वात्पवित्रमित्यस्यापि प्रकृतानुपयोगित्वमवश्यमङ्गीकर्तव्यम्। एवं चैवंविधानि पद्यान्युपनिबध्यमानानि कादम्बिन्याः कान्तिमपहरन्तीति विचक्षणा एवाभिदधीरन्। एवमष्टमपद्ये निबद्धं सकलगुणयुतश्च इति तद्गता व्याख्या च निकाममायासयति मतिं मतिमतोऽपीति प्रमाणमत्र धीः सुधियाम्।

एवं चतुर्विंशे पद्ये वानरेन्द्रवाचकस्य सुग्रीवपदस्यार्थे प्रयुज्यमानं सुगल इति पदं नितान्तमयुक्तम् । एवंविधानां शब्दानां परिवृत्तिसहत्वस्य कुत्राप्यदृष्टत्वात् । एवमस्यामेव संख्यायां श्रीशिवरामशास्त्रिणो विज्ञापने **रसदेवताकयगणाभिमुखां वसन्ततिलकां** निर्देष्टुमुत्सह इति । अहो च्छन्दःशास्त्राभिज्ञत्वं मन्त्रिणः । न जानीमः कुत्रोपलब्धं मन्त्रिणा वसन्ततिलकाया यगणाभिमुखत्वमिति । छन्दःशास्त्रकृतस्तु **उक्ता वसंततिलका तभजाजगौगः** इति लक्षणं जानन्तो वसन्ततिलकायां यगणस्य नामापि नावलोकन्ते ।

अस्यामेव च संख्यायाम् ( ९ मपृष्ठे १९ पद्यम् )

> **शकुनिसचिवयोगाद्धार्तराष्ट्रोऽप्यधाक्षी-**
> **द्गरलसहजचन्द्रो भीरुभिन्नानताप्सीत् ।**
> **कनकयदुपुरीं धामाननैषीन्मुरारिः**
> **खलजनसहवासान्नीतिमानेत्यनीतिम् ॥**

अत्र प्रथमपादेऽधाक्षीदिति । दहतेस्तावदन्तर्भावितणिच्कतामेव स्वीकुर्वते कवयः । भवतु वा तन्निर्दुष्टं परं द्वितीयपादे किमिव लुङःप्रयोगस्य प्रयोजनमिति प्रयोक्तार एव जानीयुः । न हि हिमांशोर्विप्रयुक्तकामिजनसन्तापनशक्तिर्भूतपूर्वैव किन्तु सार्वकालिक्येवासावित्येवंविधस्थलेषु भूतमात्रप्रयोज्यस्य लुङःप्रयोगं नानुमन्यन्ते शाब्दिकाः । किंच भीरुभीन्नानेव भवगवांस्तापयति चन्द्रो न पुनर्भीरूनिति कुतो वाऽवगन्तव्यम् । स किल सर्वानपि विप्रयुक्तान्सन्तापयति न पुनस्तत्र भीरुतामभीरुतां वा विचारयति । अपि च भीरुभीन्नानपि विषयवासनाविहीनान्नसंतापयति नापि वा कामिर्नासमाश्लिष्टांस्तापयति । किं च गरलसहजचन्द्रो भीरुभिन्नानताप्सीदिति विशेषं खलजनसहवासान्नितिमानेत्यनीतिमित्यनेन सामान्येन कथं वा समर्थ्यत इति कवयितैव जानीयात् । चन्द्रस्य गरलसहजत्वेऽपि तेन सहवासो नैव कुत्रापि प्रसिद्धः । गरले च खलजनत्वाभावेन पादद्वयस्य

समर्थ्यसमर्थकभावो दूरतोऽपास्तः । किं च तृतीयपादे कनकयदुपुरीं द्यामानैषीन्मुरारिरित्यत्र आनैषीदिति कस्य धातो रूपमेतदिति न शक्यते प्रत्येतुम् । अपि च कनकयदुपुर्या द्यां प्रति प्रापणे कइव कृष्णस्य खलजनैः सहवासो बीजमित्यपि न निर्दिष्टम् । मुरारेर्निवृत्तवासनत्वेन कनकमय्या यदुपुर्यास्तत्कृतं संक्रमणं केवलं तस्या एव भव्यायेति नात्रानीतिलेशोऽपि । तत्कथं तृतीयतुर्ययोश्चरणयोः समर्थ्यसमर्थकभावः । एवंविधैश्च नानाविधदोषकलुषैः पद्यैः कथं वा कादम्बिनी नोपयाति दुष्टत्वमिति नात्र प्रसरति नो बुद्धिः ।

एवं ३९ पृष्ठे ३ य पद्ये प्रभोविनयमानसे रघुपतेः समाधीपतेरित्यत्र धकारोत्तरवर्तिन इकारस्य दीर्घीकरणे किंवा सूत्रमित्यपि न ज्ञायते । नूनं नैवमाघ्रातशब्दशास्त्राः प्रयुञ्जीरन् । एवमेव च चतुर्थपृष्ठे श्रीमन्तमहाराजपुरोहितेत्यत्र श्रियः परं विहितस्य मतुपः कथंवाऽदन्तत्वमिति च नैव जानीमः । तद्धि केवलं महाराष्ट्रयादिषु प्रयुज्यते ।

एवं ११ शपृष्ठे २८ शं पद्यम्—

**दशरथतनुजोऽजो लक्ष्मणो नागराजो**
**जनकनृपति कन्या श्रीरतस्तान्भजस्व ।**
**सकलदनुजनेत्रे माल्यवान्रावणाय**
**ह्यकथयादिति लङ्कां नीतिमानेत्य नीतिम्॥**

अत्र प्रथमपादे आहतविसर्गत्वरूपो **धीरो वरो नरो यातीत्यादिवद्दोषः।** एवं चतुर्थपादे ह्यकथयदित्य त्र हेः पादपूरणमात्रार्थत्वं **न पादादौ खल्वादय** इति वामनसूत्रेण निषिद्धः पादादौतत्प्रयोगश्च दोषायैवेति विद्वांसो जानीयुः।

एवं सप्तमपृष्ठे नवमपद्यम्—

**विधिरपि निजकन्यां धर्षितुं संप्रवृत्तो**
**मधुरिपुरथ गोष्ठेऽदूषयद्गोपदारान् ।**
**तदिदमहह मन्ये मोहिनीं यद्धरोऽगा-**
**न्मनसिजशरनुन्नो नीतिमानेत्यनीतिम् ।**

अत्र मोहिनीं यद्धरोगादित्यन्ते वाक्यत्रयेन्तर्भूतं तदिदमहह मन्य इतिवाक्यं गर्भितताख्याय दोषायैवेत्यालङ्कारिका अवगच्छेयुः ।

एवं नवमपृष्ठे विंशे पद्ये बल इति विजहासोच्चैः कलिङ्गाधिनाथ इत्यत्र यतिभङ्गो न शोभामावहति । तुर्येऽनवमतिपरिभूत इत्यत्र च परिभवानवमत्योर्भिन्नार्थकत्वमुपवर्ण्यमानं विरुद्धतमम् ।

अथ धर्मशास्त्रानुसारित्वं काव्यकादम्बिन्याः परिमाय सांप्रतं विरन्तुमिच्छामः । तत्र तावत्षट्त्रिंशे पृष्ठे पद्यम्—

**नानापुराणनिगमागमदुष्टवाद-**
**क्षाराम्बुधेर्जलमतीव सुधासमानम् ।**
**कर्तुं निपीय धरणीतलदेवरूपा**
**कादम्बिनी शुभजलाप्तसभा विभाति ॥** इति

अत्रोपवर्ण्यमानं पुराणादिवादानां दौष्ट्यपूर्वकं क्षाराम्बुधित्वं धर्मप्रातिकूल्यं कादम्बिन्या बोधयति । न च तद्विषया दुर्जनकृता दुष्टवादा एव सुधात्वं नीयन्ते न त्वत्र तेषु दुष्टत्वादिकमारोप्यत इति वक्तव्यम् । दुर्जनकृतानां दुष्टवादानां सुधात्वसम्पादनस्यैकान्ततोऽसम्भवात् । किं च न हि कादम्बिन्यां समस्यापूर्तिमन्तरा कश्चिद्विषयो येन पुराणादिषु कृतानां दुष्टाक्षेपाणां निरासः संभवेत् । तदेवंविधानां पद्यानां कादम्बिन्यां प्रकाशनमनुजानतः संपादकस्य कथं वाऽसमीचीनकाव्यमुद्रणे नानुमतिरिति बुधैरेवावबोद्धव्यम् ।

एवमेते द्वितीयसंख्यायाः स्थूलतमा एव दोषाश्चन्द्रिकाग्राहकेभ्य उपहृताः । यदि पुनरेतस्याः सर्वा अपि संख्याः समालोच्येरंस्तदा स्थूलानामपि दोषाणां प्रकाशनं नानया लघीयस्या पत्रिकया समाप्स्यति । तदलं निःसारप्रसङ्गेन । सति प्रसङ्गेऽनन्यगत्या सहस्रशो दोषान्सप्रमाणमुदाहरिष्यामः । न पुनरतः कश्चिदस्माकं लाभ इति साम्प्रतं विरम्यते । कादम्बिन्या तु चन्द्रिकामाक्षेप्तुं स्वीयमुद्देश्यं सुदूरमपासारीति बुधा एवात्र प्रमाणम् । काव्यमात्रप्रकाशनमेवास्या उद्देश्यमित्यलं पल्लवितेनेति शिवम् ।

---

२।१९९.

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

॥ श्रीगणेशाय नमः ॥

शिवादीनापि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## ॥ मासावतरणिका ॥

पौषे व्यपेतकमलां सरसीमवेक्ष्य
व्याकोशपङ्कजकदम्बकवासिनी श्रीः ।
फुल्लत्कुशेशयवतः सरसो भ्रमेण
तारागणैर्विलसितं गगनं प्रपेदे ॥ १ ॥

---

## उद्भटश्लोकाः ।

समुन्नत्यां सत्यां य इह वसुमत्यां बत सदा
परेषां पीडायै प्रभवति विधिस्तस्य कुरुते । *
मुखं म्लानं कृत्वा ह्यचिरदिवसैनैव पतनं
प्रमाणं नारीणां कुचकलश एवात्र भवति ॥
रम्यं स्थास्यसि मन्दिरे सरिदपः स्वच्छन्दमापास्यसि
श्रान्तिं मोक्ष्यसि शीतले तरुतले रम्यां सभां द्रक्ष्यसि ।
सर्वं साधुमयं सुराज्ञि नगरे किन्त्वेककष्टं मह-
न्न स्याद्ग्रन्थिगतं कियद्यदि धनं नैकादशी का तिथिः ॥२

---

* विधिः अचिरेणैव दिवसैः तस्य पतनं कृत्वा मुखं म्लानं कुरुते इति सम्बन्धः ।

# पण्डितराजः श्रीजगन्नाथः ।

[ पूर्वतोऽनुवृत्तः ]

अनेन किल पण्डितगणमण्डनायमानेन श्रीजगन्नाथरायेण श्रीभर्तृहरेः

यदा किंचिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित्किंचिद्बुधजनसकाशादवगतं
तदा मन्दोऽस्मीति द्विप इव मदो मे व्यपगतः ॥

इति विदुषामहङ्कृतिशून्यत्वप्रतिपादकं वचनमात्मन आचरितेनान्यथात्वमिवानायि । न किल श्रीमतो जगन्नाथस्य वैदुष्यं प्रति केषामपि मनः सन्दिग्धे । किन्तु तत्प्रतिपदं प्रसर्पता दुःसहतमेनाहङ्कारगन्धेन परावर्तयत्यात्मनःसकाशान्मनांसि विबुधानाम् । एतत्प्रणीतः सर्वोत्तमः काव्यानुशासनग्रन्थो रसगङ्गाधरो यदद्यावधि भूयिष्ठं पठनपाठनप्रचारं नाधिजगाम तत्रापि बीजमिदमेवेति प्रतिभाति । श्रीजगन्नाथस्याहङ्कृतिमत्वं भामिनीविलासगतमादिममेव पद्यं विद्योतयति तथाहि—

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥ इति ॥

अप्रस्तुतप्रशंसया ध्वन्यमानमत्रत्यं वृत्तं जगन्नाथरायेणात्मनः सदृशस्य विवादार्हस्य विदुषोऽभाव एवात्र प्रतिपादित इत्येव ज्ञापयति । किं च रसगङ्गाधरारम्भे निबद्धं

निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयाऽत्र निहितं न परस्य किञ्चित् ।
किं सेव्यते सुमनसां मनसाऽपि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण ॥

इति पद्यमत्र प्रमाणम् । अत्र हि उदाहरणानुरूपाणामपरेषामर्थात्प्राचीनानां श्रीकालिदासभारविभवभूतिश्रीहर्षप्रभृतीनां काव्यानां प्रतिपाद्यमानं कुसुमत्वमात्मनश्च काव्यस्योपवर्ण्यमानं कस्तूरिकात्वं नूनमहङ्कारशालित्वमेव स्पष्टयति श्रीजगन्नाथस्वभावस्य । किं च रसगङ्गाधरादौ तत्र तत्र श्रीदण्डयाचार्यप्रभृतिषु जरत्तरादीनि पदानि प्रयुज्यमानानि विस्पष्टयन्तीदम् । यदि पुनरयं महात्मा वैदुष्यस्याननुरूपमहङ्कारमत्यक्ष्यत्तदा नूनमवदिष्यन्विद्वांसः समुदितं सुवर्णे सौरभ्यमिति । भवतु साम्प्रतं श्रीजगन्नाथमधिकृत्य प्रवृत्तानां कासांचिदाख्यायिकानां सत्यत्वमसत्यत्वं वा स्फुटीकुर्मः ।

तत्रेयमतिप्रथिता किंवदन्ती —

पुरा खल्वात्मनः पाण्डित्येनाद्वितीयतां प्राप्ते श्रीमति जगन्नाथे दिल्लीश्वरः शाहाजहानस्तमानीयात्मनः सभायां निवेशयामास । मेने च तमात्मनो बहिश्चरमुच्छ्वसितम् । अथैकस्मिन्नहनि श्रीमता जगन्नाथरायेण सहोपक्रान्तबुद्धिबलक्रीडो दिल्लीश्वरस्तृषयाऽभ्यभूयत । ततस्तेन नीरमानेतुमात्मनस्तनया* समाज्ञापि । साऽपि कौसुम्भं[1] वसनं परिदधाना तन्वङ्गी सलिलपरिपूरितं सौवर्णं कुम्भं शिरसि विनिधाय सञ्चारिणीव शृङ्गाररसदेवता मन्दंमन्दमुपागमत्समीपं बादशाहस्य । ततः शिरसः समवतारिते कुम्भे परिपीतजले च दिल्लीश्वरे कन्यका पुनर्मूर्ध्नि कलशीं विनिधाय प्रतिगन्तुमुपाक्रमत । ततो बादशाहस्तां कुमारिकामुपश्लोकयितुं समीपवर्तिनं जगन्नाथमादिक्षत् । सोऽप्यादेशोत्तरक्षणमेव प्राहस्म —

**इयं सुस्तनी मस्तकन्यस्तकुम्भा**
**कुसुम्भारुणं चारु चेलं वसाना ।**
**समस्तस्य लोकस्य चेतःप्रवृत्तिं**
**गृहीत्वा घटे स्थाप्य[2] (?) यातीव भाति ॥** इति

---

* आत्मनो दास्यास्तनयेति केचित् । १ कुसुम्भरक्तम् । तेन रक्तं रागादित्यण् ।
२ न्यस्येति स्यात्

तत्कालमेव श्रीजगन्नाथस्य वदनारविन्दतो लब्धोदयं सुललितं पद्यमेतदाकर्ण्य निकामप्रसन्नमना यवनराजः समवोचत् । पण्डितराज प्रसन्नोऽस्मि भवदीयेनामुना वाग्वैभवेन तदुच्यतां किमभिलष्यते भवतेति । श्रीजगन्नाथस्तु पुनः पद्येनैव भूपालं प्रार्थयामास । यथा—

**न याचे गजालिं न वा वाजिराजिं**
**न वित्तेषु चित्तं मदीयं कदाचित् ।**
**इयं सुस्तनी मस्तकन्यस्तकुम्भा**
**लवङ्गी कुरङ्गीदृगङ्गीकरोतु ॥** इति ॥

निशम्यैतस्यैवंविधां प्रार्थनां किंचित्सञ्जातविस्मयो महीपतिरभाषिष्ट । पण्डितराज कथं वा ब्राह्मणेनापि भवता स्वर्लोकप्रतिरोधकारिणी यवनी प्रार्थ्यत इति । स तु पुनः पद्यमयमेव प्रतिजगाद—

**यवनी नवनीतकोमलाङ्गी**
**शयनीये यदि लभ्यते कदाचित् ।**
**अवनीतलमेव साधु मन्ये**
**न वनी माघवनी विनोदहेतुः ॥** इति ॥

एवं तस्य निर्बन्धातिशयं साक्षात्कृत्य पूर्वतोऽपि समधिकं सन्तुष्टान्तरो यवनपतिस्तयैव लवङ्ग्या नामात्मनः कन्यकया पण्डितराजं विवाहयामास । श्रीजगन्नाथरायोऽप्यधिगताधिगन्तव्यस्तयैव यवनकन्यकया सह नानाविधान्भोगानुपभुज्य स्वाराज्यमपि तृणमिवाकलयामास । अथैकदा काशीक्षेत्रमुपागतः पण्डितरायस्तत्रत्यैः पाण्डितैर्यवनकन्यकापरिणेतृत्वादव्यवहार्योऽयमित्युदघोषि । सर्वेऽपि च ब्राह्मणास्तेन सह संसर्गं पर्यहरन् । ततस्तु किञ्चिद्विषण्णमनाः श्रीजगन्नाथः प्रावोचद्यदि मां च मम प्रेयसीं चैतां भवन्तः पावयेयुर्नयेयुश्च ब्राह्मणैः सह व्यवहार्यत्वं तदा प्रायश्चित्तमङ्गीकरिष्यामीति । एवंविधे चात्मन आशये काशीस्थानां विदुषां संमतिमनुपलभ्य भवतु किं मे प्रायश्चित्तेन जगत्त्रयपवित्रा भगवती भागीरथ्येव सभार्यं मां पवित्रयिष्यतीति सनिश्चयमात्त्क्षणः पण्डितराजो द्विपञ्चाश-

त्सोपानान्तरितभागीरथीप्रवाहं कमपि घट्टमधिष्ठाय सुललितपदबन्धनानि कानिचित्पद्यानि प्रणीयोच्चारयामास यान्येव सांप्रतं पीयूषलहरी गङ्गालहरीति वाऽऽख्यायन्ते । उच्चार्यमाणेषु च तेषु पद्येषु प्रतिपद्यमेकैकं सोपानमारुह्यान्तिमपद्यावसाने कूलङ्कषात्वमुपागता भगवती भागरथी तया यवनकन्यकया सह पण्डितराजमात्मनोऽङ्केषु विलयं निन्ये । तदवलोक्य काशीस्थास्तदानीन्तनाः पण्डिता निकाममेव व्यस्मयन्त । इति ।

( क्रमशः )

---

# मूर्तिपूजनम् ।

( पूर्वतोऽनुवृत्तम् )

अथेदानीं निर्णीयते युक्तिसिद्धत्वं मूर्तिपूजनाचारस्य । महाभागाः काश्यादीनि पवित्रतमानि क्षेत्राण्युपगन्तुकामो बुद्धिमत्तमोऽपि मानवो न किल पन्थानमन्तरा तत्र तत्र गन्तुं शक्नोति । न वा प्रांशुतरस्याट्टालकस्य शिखरप्रदेशमारुरुक्षुः सोपानसरणिमपहायात्मनोऽभिलषितं साधयितुं प्रभवेत् । न वा प्रक्रान्तविद्याध्ययन एव कश्चिदपि तत्कालमेव पाण्डित्यमुपयाति । कारणे त्वत्र विचार्यमाणे सर्वस्यापि वस्तुनः क्रमप्राप्यत्वमेव तत्त्वेन प्रथममाविर्भवति ।

धर्मशास्त्रादयश्च सर्वेऽपि शास्त्रग्रन्थाः परब्रह्मण उपास्यत्वं प्रतिपादयन्तस्तस्य स्थूलमतिभिर्युगपदुपासितुमशक्यत्वेन मनसश्चातिचञ्चलतया प्रथमत एव निराकारे निवेशयितुमशक्यत्वेन साकारब्रह्मोपासनमेवादितोऽनुमन्यन्ते । यथा कश्चिज्जानपदो राज्ञोऽस्तित्वंप्रतिपत्तुकामः प्रथमं प्रासादादीनां राजनिवासोचितानां स्थानानां प्रत्यक्षीकरणेन तस्यास्तित्वमनुमिनोति । ततश्च केनचिदासेन प्रदर्शितां भूपालस्य प्रतिकृतिं साक्षात्कृत्य तस्य स्वरूपं

---

१ घाट.

निर्णयति । तां चानुध्यायाप्रत्यक्षीकृतपूर्वमपि भूपालं कदाचिदुपनतं प्रत्यभिजानीते । समधिगच्छति च सफलीभूतप्रयासः कमप्यानन्दम् । एवमेव स्थूलमतिर्मनुजः प्रथमतो न शक्नोत्यवबोद्धुं सच्चिदानन्दं ब्रह्म सगुणमपि कुतः पुनर्निर्गुणम् । स एव च मूर्तिषु विनिधापितश्रद्धो भगवतः सद्भावं मूर्तिध्यानेन संजातमनःस्थैर्यश्चाभ्यासतः शनैः शनैर्निर्गुणमपि परं ब्रह्म प्रतिपत्तुं प्रभवेत् । अत एवोच्यते प्राचीनैः पूजनीया मूर्तिरिति ।

ये किलानुपलब्धपरमात्मानो मन्दमतयः कथं नाम ते तन्न तन्नेति श्रुतिवचनैर्निषेधमुखेनैव प्रतिपाद्यमानं भगवन्तमवगच्छेयुर्यदि मूर्तिपूजया ध्यानमभ्यस्य न प्राप्नुयुर्बुद्धेः सौक्ष्म्यम् । न हि स्थूलस्यापि विषयस्य ग्रहणेऽप्रभवन्ती बुद्धिः सूक्ष्मतरं वस्तु गोचरीकर्तुं प्रभवेत् । अत एवासौ स्थूलतमेऽर्थान्मन्दमतिभिरपि सुग्रह एव पदार्थे प्रथमं निवेश्यते । निवेश्यते च ततः क्रमश एवानतिस्थूले सूक्ष्मे सूक्ष्मतरे सूक्ष्मतमे च विषये । नियम एव खल्वयं यत्प्रथमतः स्थूल एव प्रसरति धिषणा मनुष्यस्येति । निदर्शनमत्र धनुर्विद्यामभ्यस्यन्धानुष्कः । स हि लक्ष्यवेधमभ्यस्यन्प्रथमतः शरं सन्धाय सुस्थिरं स्थूलतममेव च पदार्थं लक्षयति । तत्र च लब्धप्रावीण्यः क्रमशः स्थूले चले च लक्ष्ये शरं विक्षिपति । ततश्च सूक्ष्मे चले च लक्ष्ये बाणं प्रक्षिपति । तत्र चाधिगतपाटवो यस्मिन्कस्मिन्नप्यति चलेऽतिसूक्ष्मेपि च लक्ष्ये क्षिप्तशरः प्राप्नोति दिगन्तराविसृत्वरां कीर्तिमनुभवति चामन्दमानन्दम् । स एव चेदुपक्रान्तधनुर्विद्याभ्यासः क्षत्रियपोतः प्रथममेवातिचलेऽतिसूक्ष्मे च लक्ष्ये प्रक्षिपेद्बाणं तदा नूनं प्रभ्रष्टलक्ष्यः कदाचिदपि नासादयेत्कौशलं धनुर्विद्यायाम् । अनुभवेच्चासिद्धमनोरथः कमप्यनिर्वचनीयं निर्वेदम् । एवमेव च यदभ्यस्तयोगैर्योगिभिरपि न शक्यते सपद्येव ज्ञातुं कथं तत्र मन्दमतेर्मतिः प्रवेशं लभताम् । किं चात्र विस्मयास्पदं यदि प्रथमत एव तिरस्कृतमूर्तिपूजनः परं ब्रह्मैव ध्यातुमुपक्रममाणस्त्रिशङ्कुरिवोभयतो भ्रष्टतामापद्येत । अत एवोच्यते प्राचीनैः पूजनीया मूर्तिरिति ।

अत एव योगशास्त्रे भगवता पतञ्जलिना संप्रज्ञातसमाधेश्चतस्रोऽवस्थाः प्रतिपाद्यन्ते । यथा समाधिपादे-

**वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः** ॥ इति ॥ १८ ॥

सम्यक्संशयविपर्ययशून्यत्वेन प्रज्ञायते प्रकर्षेण ज्ञायते ध्येयस्य स्वरूपं येन स सम्प्रज्ञातः समाधिः । स च सवितर्कः सविचारः सानन्दः सास्मितश्चेति चतुर्विधः । सवितर्के शालिग्रामादिषु स्थूलमहाभूतेष्वेव परमेश्वरो ध्यायते । तस्मिंश्च सुदृढमभ्यस्ते सविचाराभ्यासः । तत्र च पञ्च तन्मात्राणि ( यैःपञ्चमहाभूतानि समुद्भवन्ति ) सान्तःकरणानि भाव्यन्ते । ततो यदा मनसो योग्यताप्राप्तौ रजस्तमोलेशानुविद्धमन्तःकरणसत्वं भाव्यते तदा भाव्यमानस्य सत्वस्योद्रेकात्सानन्दः समाधिर्भवति । तस्मिंश्च बद्धधृतयो रजस्तमोलेशानभिभूतं शुद्धसत्वमालम्बनीकृत्य यां भावनां प्रवर्तयन्ति तस्यां सत्तामात्रमेवावशिष्यत इत्यसौ सास्मितः समाधिः । आसां च चतसृणामवस्थानां मध्ये क्रमश एकैकां परित्यज्योत्तरोत्तरामभ्यस्यन्ति योगिनः । यतो न हि सविचाराद्याः प्राथमिकीरवस्थाः परित्यज्य युगपत्सानन्दे मनः प्रवेशं लभते । अत एवोच्यते प्राचीनैः पूजनीया मूर्तिरिति।

लोकेऽपि खल्वेतद्दृश्यते यथा शालासु प्रथमां श्रेणीं प्रविष्टानां छात्राणां कृते विरचितेषु पाठ्यपुस्तकेषु प्रतिपाठं शिरोदेशे किमपि तत्तद्विषयाऽनुरूपं चित्रं मुद्यते । विचार्यतां महाभागाः किमत्र बीजमिति । नूनं निमील्य नयनद्वयीमेतद्विषयकं विचारमवतारयन्तः श्रीमन्तो जानीयुर्यच्छिशुभिः प्रथममेवावबोद्धुमशक्यानां विषयाणां सम्यगवबोधनायैव मुद्यन्ते पुस्तकेषु चित्राणीति । एतच्च विचारवद्भिर्नैव विस्मरणीयम् यद्यावान्पाठ्यपुस्तकगतान्विषयानवगन्तुं शिशूनामधिकारो न किल तावानपि परमेश्वरमवबोद्धुं मनुष्यस्येति । तद्यदि लौकिकविषयावबोधायापि चित्रादीन्यपेक्ष्यन्ते तदा कथं वा प्रतिमामन्तरा भगवत्स्वरूपस्य सुबोधत्वशङ्काऽपि युज्येत । अत एवोच्यते प्राचीनैः पूजनीया मूर्तिरिति ।

एवं शालासु विद्यार्थिभ्योऽदृष्टान्दवीयसश्च देशानवबोधयितुं तत्तद्देशानां चित्राणि प्रदर्श्यन्ते । यैरेव प्रतीततत्तद्देशस्वरूपा विद्यार्थिनः सति प्रसङ्गे तांस्तान्देशानभिज्ञातुं प्रभवेयुः । एवमेव च शालासु गुरुभिरप्यदृष्टानां ग्रहादीनां प्रतिमा विशालतमायाश्चादृष्टपर्यन्ताया भुवो गोलस्य चित्राणि च तत्तद्विषयावबोधनावसरे समुपयोज्यन्ते यैरेव निपुणं विचार्यमाणैर्नास्तिकतमोऽपि प्रतिपद्येत माहात्म्यं मूर्तिपूजायाः । एवं च युगपदवबोद्धुमशक्ये विषये मनः प्रवेशयितुं मूर्तयो वा चित्राणि वा निर्मीयन्त इति प्रतीयते । लौकिकेऽपि खल्वेवम् । अलौकिकस्तु भगवानीश्वरः तत्कथं वा तत्र समुल्लङ्घितक्रमा स्थूला मतिः प्रवेशं लभताम् । अत एवोच्यते प्राचीनैः पूजनीया मूर्तिरिति ।

किमधिकं यदि मूर्तिर्नाम नैवाङ्गीक्रियेत तदा न कोऽप्यदृष्टं किमप्यवगन्तुं प्रभवेन्न वा कश्चिदपि किंचिदपि दुर्बोधमवबुध्येत ।

अथोच्यते कैश्चिन्निर्गुणः सर्वव्यापी च भगवानीश्वरस्तस्य कथं सगुणत्वमुररीकरणीयम् । न ह्याकाशस्य रूपं केनापि भित्तिष्वालिख्यते । तत्कथं वा तस्य मूर्तिर्निर्मातुं युज्येत । किं च यदि सभगवानशेषमपि विश्वं व्याप्नोति तदा कथं मूर्तय एव पूजनीया इत्याग्रहः । स किल सर्वत्रापि निवसतीति सर्वेषामपि पूजनीयतापत्तिः । अतः किमुच्यते मूर्तयः पूजनीया एवेति । अत्रोच्यते । निर्गुणमपि वस्तु समवबोद्धुं कदाचित्साकारतां नीयते । यथा संख्यादि । गुणो हि नामायं संख्येति । नास्या रूपवत्वं केचिदपि स्वीकुर्युर्नापि वा स्वीकुर्वन्ति । तथापि वैदुष्यस्य परां कोटिमारूढा अपि सर्वदेशीया विद्वांसः कयाचिदाकृत्या १–२ इत्यादिरूपया तामेवावबुध्यन्ते । वस्तुतस्तु न किल तत्तस्या रूपम् । संख्या हि नाम नीरूपैव । यथा च रूपशून्याऽप्यसावाकृतिविशेषेण लिखितेनावबोद्धुं शक्यते एवं नीरूपोऽपि भगवांस्तैस्तैर्भक्तैस्तया तयाऽऽकृत्या दृश्यमानो बोधविषयतां प्राप्नोति । अत एवोच्यते विधेयं मूर्तिपूजनमिति । यदप्युच्यते सर्वत्र विद्यमाने भगवति

कथं मूर्तय एव पूजनीया इति तदपि न संगतम् । यदि सर्वत्र विद्यते भगवानिति स्वीक्रियते तदा मूर्तिष्वपि तस्यास्तित्वमवश्यमभ्युपेतव्यम् । मूर्तयश्च पार्थिवानामेव पदार्थानां विधीयन्ते । पृथिवी चैकान्तत उपयुक्ता सर्वबीजप्रकृतिर्भगवतो मूर्तिः । तस्यां च निपुणं चिन्त्यमानायां मनसो भगवति प्रवेशः सुलभः । वयं किल पृथिव्या एव विकृतयः । अतोऽस्मदपेक्षया तस्या एव महत्त्वमर्थादायाति । अत एव न देवस्थाने मनुष्याः पूज्यन्ते । विकारा ह्येते मनुष्या नाम पृथिव्यादिमहाभूतानाम् । न चैवं मूलप्रकृतेरेव पूजनं युक्तं तस्याश्च मूर्तेर्विधातुमशक्यतया मूर्तिपूजनमयुक्तमिति वाच्यम् । मूलप्रकृतेर्युगपद्बुद्धावारोपयितुमशक्यत्वेन साकाराया एव तस्याः पूजनस्य युक्तत्वात् । यत्र पुनर्योगसिध्यादीनांप्रत्यक्षीकरणेन लोकोत्तरत्वमनुमीयेत तत्रापि नरे देवभावना विधातुं युक्ता । किं तु नहि तन्मात्रासक्ततया मूर्तयः परित्याज्याः । द्वारं हि खल्वेतद्देवभावप्राप्तेर्यदेतन्मूर्तिपूजनं नाम । इदमेव श्रद्धयाऽनुष्ठीयमानं चेतः संशोधयति । एतदेव च ब्रह्मभावनायामधिकारं जनयति मनुष्यस्य अमुनेव खलु भूयांसः संसरणाद्विमुच्यन्त । एतेनैवभारतवर्षीयाणामार्यत्वमपरिक्षीणम् । अत एवोच्यते पूजनीया मूर्तिरिति ।

[ क्रमशः ]

---

# बुद्धिमाहात्म्यम् ।

## अधर्मपरिपाकश्च ।

आसीद्विन्ध्यगिरिप्रान्ते कश्चिन्नरपतिः । तस्यायमेव निसर्गो यत्प्रत्युत्पन्नमतिमतिचतुरं च पुरुषं समधिकं श्रद्दधाति । तस्य च वाक्पतिरिव बुद्धिमान्मन्त्री कश्चिद्बभूव । स कदाचित्स्वावासतो धर्माधिकरणं गच्छन्राज-

वर्त्मपार्श्वे गर्तं खनन्तं दीनवेशं निरवद्यसर्वाङ्गं युवानमद्राक्षीत् । मन्त्री तं युवकं पृच्छति रे कथं प्रणिपातयोग्ये स्थाने गर्तं खनसीति । स प्रतिब्रूते

सोंजे [ सिधा ] रास्ते मे चल् याइ [ ओ ] ये बावा नहि गिरे गा । इति

स इत्थमेव सर्वान्पृच्छकान्प्रतिवक्ति ।

प्रतिनिवृत्तोऽपि धर्माधिकरणात्स्वावासं गच्छंस्तथैवावटं खनन्तं मन्त्री पश्यति । तमापादमस्तकमवलोक्य महाबुद्धिरयमिति निश्चित्य च सस्नेहमाव्हयति स मन्त्री । ब्रवीति च यद्यस्मद्गृहमेष्यसि तर्हि व्यवहरिष्यामि पुत्रनिर्विशेषं श्रीमन्तम् । सोऽपि प्रतिवक्ति तथाऽस्तु कोत्र विकल्प एषोऽहं पितृभ्यां विहीनः पितेत्यनुगच्छामि पूज्यपादं भवन्तमिति । युवकस्यास्य नाम सुदर्शनशर्मेति । गत्वा स मन्त्रिनिकेतनं मन्त्रिपत्नीं हे मातरेषोऽहं पादयोर्भवतीमभिवन्दे अनुगृह्णीष्व मामिति ब्रूते। मन्त्रिपुत्रमपि सखे भ्रातरिति परिष्वजति । इत्थं सर्व एव सानन्दं सुखमासते।

अथ कदाचित्पुत्रं सुशीलं मन्त्रित्वपदे नियुज्य राजानमाभाष्य च मन्त्री तीर्थं पर्यटितुं गृहात्प्रस्थितः पुत्रं कथयति हे पुत्र राजकुले सावहितेन भवितव्यम् अस्मिन्सुतनिर्विशेषे सुदर्शने साधु व्यवहर्तव्यं संवत्सरमतीत्याहमागन्तास्मि । अपि च यदि क्वापि राजादिष्टे गहने कृत्ये ते मतिः कुण्ठायेत तदा पुत्रीकृतमेतं तत्पृष्ट्वा राजकृत्यं निष्पाद्यतामिति स गृहान्निरगमत्।

अथ कदाचित्कौतुकेनात्मानं विनोदयितुं परीक्षितुं च मन्त्रिपुत्रस्य मतिसम्पदं तमादिशति भूपालः—अमात्यज जनमेकं समुद्रस्यापरतीरादेकं मध्यतोऽपरं चैतस्मात्तीरादुपाहर तांस्तु यथार्हं भोजनेनाप्याय्य सुखीभवामि लभेथास्तदर्थमयुतं रूपकानिति । परंतु सप्ताहमध्ये तत्सम्पादयेथा नोचेच्छिरसि च्छेत्तव्योऽसीति ।

राजाज्ञा तु शिरसा वहनीयेति मन्त्रिपुत्रः स्वावासं प्रति गतः । किन्तु नृपनिदेशाभिप्रायं हृदयं गमयितुमसमर्थो विकलात्मा पित्रा पुत्रीकृतं सुदर्शनं तं सर्वं निवेदयति । श्रुत्वा च तद्भाषितं तत्क्षणमेवावगतार्थः स युवा स्मित्वा कथयति किमत्र भयेन सप्ताहमन्तरैव तथाविधं जनत्रयमानेष्यामीति सुखं स्थीयतामिति ।

अथ निर्दिष्टेऽहनि तथाविधं जनत्रयमुपस्थाप्य सचिवसुताय कथयति भो मित्र योऽयं विषयसुखं तृणाय मन्वानो गिरिकुहरमध्यासीनो वाताम्बुपर्णाशनः कङ्कालशिष्टकायो विकीर्णारुणप्रवृद्धकेशश्मश्रुकरकण्टको भगवत्प्रणिहितमना मुनिः परमकारुणिकोऽत्र पादावर्पयति महात्मानमेनं पारावारपरपारादानीतं विद्धि ।

यश्चैष परमपण्डितः साधुवृत्तोऽशेषगुणसागरः परोकारपरायणोऽत्र वर्तते अथैनमुदधिमध्यदेशादासादितं विद्धि । यात्वैषा मदपाटललोचना हावभावगर्भाभ्यामीक्षणाभ्यां समाश्वासयन्ती कन्दर्पकिङ्करान्गौरिव वृषाननुगतान्कर्तुं शक्नोति एनामाभरणभारवाहिनीं वाराङ्गनामेतस्मात्समुद्रपारादाहृतामवेहि । इत्येवं राजानं प्रतिबोधयेति ।

मन्त्रिपुत्रस्तु तथेति गृहीत्वा नृपतये तान्निवेद्य सन्तोष्य च रूपकानयुतमादाय सानन्दं गृहमागच्छत् । एवं दिनेषु गच्छत्सु अन्येद्युः सुशीलं नृपतिरादिशति भो ईदृशं किमपि वस्तु मत्थमानाय्य दीयतां यद्दर्शनात्सुखं दुःखं च जायेत कियच्च तस्य मूल्यं युज्येत तदपि कथ्यतामिति ।

मन्त्रिपुत्रस्तु श्वः सर्वं कथयिष्यामीति दुरत्ययां चिन्तामापन्नः शुष्ककण्ठोष्ठतालुको गृहं प्राविशत् । अथ परेऽहनि पित्रा पुत्रीकृतेन तेन सुदर्शनेन समनुमोदितो नृपतिमवादीत् । रत्नपाद समर्थोऽस्मि सुखदुःखप्रदमेकमेव वस्तु प्रदातुं षण्मासात्परं परन्तु तन्मूल्यं रूपकलक्षं निश्चितं ततोऽद्यैव लक्षार्धं देयं तस्मिन्समानीते च वस्तुनि परार्धं प्रदास्यते श्रुत्वैतत्प्रभुपादाः प्रमाणमिति ।

ततो राजाह—कोऽत्र विकल्पो नीयन्तामद्यैव पञ्चाशत्सहस्रं रूपका इति दत्वा विसृष्टो मन्त्रिसुतः प्रहृष्टो गृहमगात्।

अथ दिनेषु गच्छत्सु सुशीलः सुदर्शनं भो मित्र किं नाद्यापि तद्वस्तु समानीतं समयस्तु प्रायोऽनुपदं व्यपैतीति त्वरयति। तदाकर्ण्य सुदर्शनो ब्रवीति सखे न भेतव्यं किमत्र भयेन यथासमयमानेष्यामि तद्वस्तु भवान्पुनः स्वच्छन्दं व्यवहरतु क्रीडतु निद्रातु च किमिति व्याकुलोऽस्तीति।

अथ यदा षष्ठोमासः समुपस्थितस्तदा सुसंविग्नः सुशीलः सुदर्शनं समधिकं त्वरयितुमारभते सुदर्शनस्तु सपरिहासं कथयति भोः सखे वीरपुङ्गव न भेतव्यं जीवति मयि भवच्छिरो नैव च्छेद्यमिति सुखं स्थीयतामिति। ततः स सुशीलो विस्मयविमूढोऽवतिष्ठते।

अथ यस्मिन्नहनि षष्ठो मासः पूर्णतामेष्यति तत्पूर्वेद्युः सुदर्शन आपणं गत्वा स्वर्णकारेण ताम्राङ्गुलीयकमेकं निर्माप्य कनकद्रवभाविते तत्र **ऐसा दिन नहि रहेगा** ( एवं दिनं नैव स्थास्यति ) इत्युत्कीर्य रजत-पुटिकायां पूरयित्वा मित्राय सुशीलाय नीयतामिति ददौ।

सुशीलोऽपि परेद्युस्तद्भूपतये गृह्यतां सुखदुःखात्मकमङ्गुलीयकं दीयन्तां चापराः पञ्चाशत्सहस्र मुद्रा इत्युक्त्वा यावदर्पयति तावत्तदवलोक्य राजा परां प्रीतिमापत्। अथार्पयच्च पराः पञ्चाशत्सहस्रं मुद्रा इति।

यदा खलु नरपतिर्विजितरिपुनिकायः सानन्दं तदङ्गुलीयकं पश्यति तदा **ऐसा दिन नहि रहेगा** [ इत्थं दिनं न स्थास्यति ] इत्थमरिपराजयादि-सुखदिनं न स्थास्यतीति विस्मृतदुःखमापद्यते। यदा व्यसनं किमप्युपपतति तदा तद्विलोकयन् **ऐसा दिन नहि रहेगा** इत्थं व्यसनोपनिपातदुःखदिनं न स्थास्यतीति चिन्तयन्सुखं प्राप्नोति।

( क्रमशः )

---

**संन्यासी**—कथमस्मान्संन्यासिनोऽपि कठोरभाषणैस्तिरस्करोषि।

**दौवारिकः**—भगवन्भवान्संन्यासीति तुरीयाश्रमसेवीति प्रणम्यते। परन्तु प्रभूणामाज्ञामुल्लङ्घ्य निजपरिचयमददेवायाति इत्याक्रुश्यते।

**संन्यासी**—सत्यं क्षान्तोयमपराधः परमद्यावधि संन्यासिनो ब्रह्मचारिणः पण्डिताः स्त्रियो बालाश्च न किमपि प्रष्टव्याः। आत्मानमपरिचाययन्तोऽपि च प्रवेष्टव्याः।

**दौवारिकः**—संन्यासिन् संन्यासिन् बहूक्तं विरम। न वयं दौवारिका ब्रह्मणोऽप्याज्ञां प्रतीक्षामहे। किन्तु यो वैदिकधर्मरक्षाव्रती यश्चसंन्यासिनां ब्रह्मचारिणां तपस्विनां च संन्यासस्य ब्रह्मचर्यस्य तपसश्चान्तरायाणां हन्ता येन च वीरप्रसविनीयमुच्यते कोङ्कणदेशभूमिस्तस्यैव महाराजशिववीरस्याज्ञां वयं शिरसा वहामः।

**संन्यासी**—अथ किमप्यस्तु पन्थानं निर्दिश। आवां शिववीरनिकटे जिगमिषावः।

**दौवारिकः**—अलमालप्यापि तत् *। प्राह्णे महाराजस्य सन्ध्योपासनसमये भवादृशानां प्रवेशसमयो भवति न तु रात्रौ।

**संन्यासी**—तत्किं कोऽपि न प्रविशति रात्रौ।

**दौवारिकः**—(साक्षेपम्) कोऽपि कथं न प्रविशति परिचिता वा प्राप्तपरिचयपत्रा वा आहूता वा प्रविशन्ति न तु भवादृशा ये तुम्बीं गृहीत्वा द्वाराद्वारं—(इति कथयन्नेव तत्तेजसेव धर्षितो मध्य एव विरराम।)

**संन्यासी**—(स्वगतम्) राजनीतौ निष्णातः शिववीरः। सर्वथा दौवारिकतायोग्य एवायं द्वारपालः स्थापितोऽस्ति। परीक्षितमप्येनमेकस्मिन्विषये पुनः परीक्षिष्ये (प्रकाशम्) दौवारिक इत आयाहि किमपि कर्णे कथयिष्यामि।

---

* अलंखल्वोः प्रतिषेधे प्राचां क्त्वा। यथा। अलं रुदित्वा ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तलेति शाकुन्तले।

**दौवारिकः**—(तथा कृत्वा) कथ्यताम् ।

**संन्यासी**—दौवारिक तव हितं कथयामि सूक्ष्मं निरीक्षस्व । पश्य त्वमधुना दौवारिकोऽसि प्राणानप्यगणयन् जीविकां निर्वहसि । त्वं सहस्रं वा अयुतं वा मुद्रा राशीकृताः कदाऽपि प्राप्स्यसीति न कथमपि संभाव्यते।

**दौवारिकः**—आम् अग्रे कथ्यताम् ।

**संन्यासी**—वयं च संन्यासिनो वनेषु गिरिकन्दरेषु च विचाराम: सर्वं च रसायनतत्वं विद्मः ।

**दौवारिकः**—स्यादेवम् । अग्रे अग्रे ।

**संन्यासी**—तद्यदि त्वं मां प्रविशन्तं न प्रतिरुन्ध्यास्तदधुनैव परिष्कृतं पारदभस्म दद्यां यथा गुञ्जामात्रेणापि द्वापञ्चाशत्संख्यकतुलापरिमितं ताम्रं जाम्बूनदं विधातुं शक्नुयाः ।

**दौवारिकः**—हंहो कपटसंन्यासिन् कथं विश्वासघातं स्वामिवञ्चनं च शिक्षयसि । ते केचनान्ये भवन्ति जारजाता ये उत्कोचलोभेन स्वामिनं वञ्चयित्वाऽऽत्मानमन्धे तमसि पातयन्ति । न वयं शिवगणास्तादृशाः । (संन्यासिनो हस्तं धृत्वा) इतस्तु सत्यं कथय कस्त्वं कुत आयातः केन वा प्रेषितः ।

**संन्यासी**—(स्मित्वेव) अथ त्वं मां कं मन्यसे ।

**दौवारिकः**—अहं तु त्वामस्यैव ससेनस्यायातस्यापजलखानस्य—

**संन्यासी**—(विनिवार्य मध्य एव) धिग्धिक् ।

**दौवारिकः**—कस्याप्यन्यस्य वा गूढचरं मन्ये । तदादेशं पालयिष्यामि प्रभुवर्यस्य । (हस्तमाकृष्य) आगच्छ दुर्गाध्यक्षसमीपे । स एवाभिज्ञाय त्वया यथोचितं व्यवहरिष्यति ।

ततः संन्यासी तु त्यज्यतां नाहं पुनरेवं कथयिष्यामि महाशयोऽसि दयस्व दयस्वेति सहस्रधा समचकथत् । तथापि दौवारिकस्तु तमाकृष्य नयन्नेव प्रचलितः ।

अथ यावद् द्वारस्थस्तम्भोपरि संस्थापितायां काचमञ्जूषायां जाज्वल्यमानस्य प्रबलप्रकाशस्य दीपस्य समीपे समायातस्तावत्संन्यासिनोक्तं दौवारिक अपि मां पूर्वं कदाप्यद्राक्षीरिति । ततो दौवारिकः पुनस्तं निपुणं निरीक्षमाणो मन्द्रेण स्वरेणारुणापाङ्गाभ्यां गौरतरेण वर्णेन चुम्बितयौवनेन वयसा निर्भीकेण च हारिणा मुखमण्डलेन पर्यचिनोत् । भुशुण्डीसमुत्तोलनकिणकर्कशकरग्रहमपहाय सलज्ज इव च नम्रीभूय प्रणमन्नुवाच । आः कथं श्रीमान् गौरसिंह आर्यः । क्षम्यतामनुचितव्यवहार एतस्य ग्राम्यवराकस्येति । तदवधार्य तस्य पृष्ठे हस्तं विन्यसन् संन्यासिरूपो गौरसिंहः समवोचत् । दौवारिक मया बहुशः परीक्षितोऽसि । ज्ञातोऽसि च यथायोग्य एव पदे नियुक्तोऽसि । त्वादृशा एव प्रभूणां पुरस्कारभाजनानि भवन्ति लोकद्वयं च विजयन्ते । तव प्रामाणिकतां जानीत एवात्रभवान् प्रभुवर्यः । परमहमपि विशिष्य कीर्तयिष्यामि । निर्दिश तावत्कुत्र श्रीमान् किं चानुतिष्ठतीति ।

ततः पुनर्बद्धाञ्जलेर्दौवारिकस्य किमपि कर्णे कथितमाकर्ण्य प्रधानद्वारमुल्लङ्घ्य नेदीयस्यामेकस्यां नितम्बतरुतलवेदिकायां सहचरं समुपवेश्य तुम्बीमेकतः संस्थाप्य स्वाङ्गरक्षिकावरणं काषायवसनं चैकतो निम्बशाखायामवलम्ब्य पटखण्डेन पक्ष्मणोः कपोलयोः कर्णयोर्भ्रुवोश्चिबुके नासायां केशप्रान्तेषु च च्छुरितामिव विभूतिं प्रोञ्छ्य स्कन्धयोः पृष्ठे च लम्बमानान् मेचकान् कुञ्चितान् कचानाबध्य सहचरपोटलिकात उष्णीषमादाय शिरसि चाधाय सुन्दरमुत्तरीयं चैकं स्कन्धयोर्निक्षिप्य दौवारिकनिर्देशानुसारं श्रीशिववीरालंकृतामट्टालिकां प्रति प्रातिष्ठत ।

शिववीरस्तु कस्यांचिच्चन्द्रचुम्बिन्यां सान्द्रसुधासारसंलिप्तभित्तिकायां धूपधूपितायां गजदन्तिकावलम्बितविविधच्छुरिकाखड्गरिष्टिकायां सुवर्णपिञ्जरपरिलम्बमानशुकपिकचकोरसारिकाकलकूजितपूजितायामट्टालिकायां संध्यामुपास्योपविष्ट आसीत् । परितश्च तस्यैव खर्वामप्यखर्वपराक्रमां श्यामामपि यशःसमूहश्वेतीकृतत्रिभुवनां कुशासनाश्रयामपि सुशासनाश्रयां पठन-

पाठनादिपरिश्रमानभिज्ञामपि नीतिनिष्णातां स्थूलदर्शनामपि सूक्ष्मदर्शनां हत्याकाण्डव्यसनिनीमपि धर्मधौरेयीं कठिनामपि कोमलां उग्रामपि शान्तां शोभितविग्रहामपि दृढसन्धिबन्धां कलितगौरवामपि कलितलाघवां विशाल-ललाटां प्रचण्डबाहुदण्डां शोणापाङ्गां कम्बुग्रीवां सुनद्धस्नायुं वर्तुलश्यामश्मश्रुं धारिताकृतिमिव वीरतां विग्रहिणीमिव धीरतां समासादित समास्फूर्तिं मूर्तिं दर्शं दर्शं परं प्रसादमासादयन्तस्तस्य मित्राणि कटानध्यवसन् । तेषु चाप-जलखानदमनविषयकवार्तामारिप्सुष्वेव कश्चिद्वेत्रहस्तः प्रतीहारः प्रविश्य वेत्रं कक्षे संस्थाप्य शिरोनमयित्वाञ्जलिं बद्ध्वा न्यवीविदत्प्रभो श्रीमान् गौरसिंहो दिदृक्षतेऽत्रभवन्तमिति । तदाकर्ण्य आं प्रवेशय प्रवेशयेति सानन्दं सोत्साहं च कथितवति महाराष्ट्रमण्डलाखण्डले प्रतीहारो निवृत्त्य सपद्येव तं प्रावीविशत् ।

तमवलोक्यैवेत इतो गौरसिंहोपविशोपविश चिराय दृष्टोऽसि। अपि कुशलं कलयसि । अपि कुशलिनस्तव सहवासिनः । अप्यङ्गीकृतमहाव्रतं निर्वहथ यूयम् । अपि कश्चिन्नूतनो वृत्तान्त इतिकुसुमानीव वर्षता पीयूष-प्रवाहेणेव सिञ्चता मृदुना वचनजातेन तत्रभवता शिववीरेणाद्रियमाण आपृच्छ्यमानश्च त्रिः प्रणम्यातरङ्गमण्डलीजुष्टकटे समुपविश्य करौ सम्पुटी कृत्य भगवन्नखिलं कुशलं प्रभूणामनुग्रहेणास्माकमखिलानाम् । अङ्गीकृत महाव्रते च मा स्म पदं धात्कश्चनान्तराय इत्येव सदा प्रार्थ्यते भगवान्भूत-नाथः । नूतनः प्रयत्नश्च । को नामाद्यतनसमये वक्तव्यः श्रोतव्यश्च वृत्तान्त ऋते दुराचारात्स्वच्छन्दानामुच्छृङ्खलानामुच्छिन्नसच्छीलानां म्लेच्छहतकानामिति कथयामास । ततश्च तेषामेवमभूदालापः ।

**शिववीरः**—अथ कथ्यतां को वृत्तान्तः का च व्यवस्थास्मन्महाव्र-ताश्रमपम्परायाः ।

**गौरसिंहः**—भगवन् सर्वं सुसिद्धम् । गव्यूत्यन्तरालमङ्गीकृतसनातन-धर्मरक्षामहाव्रतानां धारितमुनिवेषाणां वीरवराणामाश्रमाः सन्ति । प्रत्या-श्रमं च वल्मीकेषु गोपयित्वा स्थापिताः परःशताः खड्गाः पटलेषु तिरो

# श्रीकण्ठपदभूषणम् ।

## प्रथमो मरीचिः



राजद्राजकलं[1] वलत्सुरसरित्कल्लोललोलालकं
भास्वन्नद्ध[2]फणीन्द्रफूत्कृतिचलद्भस्मप्रभाभास्वरम् ।
हासोत्फुल्लकपोलपाल्यनुचरोद्धाराय तारादरं
नित्यानन्दमयं तदेकममलं ध्यायाम्यजस्रं महः ॥ १

अद्य श्वो वा नश्वरं विश्वमेत-
त्कस्मादस्मिंश्चित्त बध्नासि रागम् ।
आनन्दं चेच्छाश्वतं वाञ्छसीह
ध्याय श्रीमच्चन्द्रमौलेः पदाब्जम् ॥ २

लोके किं ननु शाश्वतं किमथवा सम्मोदमात्राञ्चितं
तापं नो विरहेऽपि किं वितनुते केनामृषा निर्वृतिः ।
इत्यालोच्य विभाव्य नश्वरमिदं ब्रह्माण्डभाण्डं सखे
चेतश्चिन्तय चन्द्रचूडमनिशं भावा ह्यमी दुःखदाः ॥ ३

उत्पादयत्युपगतैव मदं महान्तं
विस्मारयत्यपि मुदां निलयं महेशम् ।
निर्माप्य भूरि दुरितं प्रपलायमाना
दुःखं भृशं वितनुते ननु भार्गवीयम्[3] ॥ ४

आवासः सकलैनसामसुहृदां षण्णां[4] विहारालय-
श्चिन्ताया अविनश्वरश्च सरसः कन्दोऽङ्कुरैराहृतः ।

---

१ राजा चन्द्रः । २ नद्धाः बद्धाः । ३ भार्गवी लक्ष्मीः । ४ षण्णामसुहृदां षड्रिपूणां तेच कामक्रोधमोहलोभमदमत्सराः ।

आशायाः परमं पदं किल विसंवादस्य[1] शय्यागृहं
चेतः केन गुणेन नाम कमलामावर्जयेथा[2] मुहुः ॥ ५

लक्ष्मीरुपागतवतीति न च प्रमोदो
यातेति वाऽस्तु न मनागपि ते विषादः ।
ध्यायत्सदैव हिमवत्तनयाधिनाथं
चेतः सखे भव समं सुखदुःखयोस्त्वम् ॥ ६

क्षणाद्दुर्गं[3] दुर्गं विशसि तटिनीं[4] दुस्तरतरां
तरस्यद्रोणीकं[5] सुखमयमशेषं कलयसि ।
मुहुर्भ्रामं भ्रामं क्षपयासि वृथैवं दिनगणं
तदप्यापः सौख्यं क्वचिदपि मनश्चेत्कथय माम् ॥ ७

सानन्दं फललिप्सया हृदय रे तृष्णा[6]विषद्रोः शिखा[7]-
मारूढं किल कालमारुतगतिक्षोभात्पतस्युच्चकैः ।
बाढं खेदमथावहस्ययि कुतः सन्मार्गमुज्झन्मुहुः
किं रामेश्वरमेति धावनपटुर्विन्ध्याटवीं प्रस्थितः ॥ ८

धावं धावमये मुहुर्मुहुरपि श्लाघमानां[8] पुरो
गायं गायममर्त्यमात्रसदृशं तेषां मृषैव स्तवम् ।
जोषं जोषमहर्दिवं शिव शिव त्वं दुःखमेवोच्चकै-
श्चेतः किं गिरिजापतेरपचिते[9]र्युक्तं[10] वयो हापये ॥ ९

अन्ये दीनतमा वयं किल जगत्येके कुबेराधिका
इत्येवाकलयन्ति मन्दमतयो दैवाप्तलक्ष्मीलवाः ।
कृत्ये किंच नियोजयन्ति विबुधं हा भृत्यमालोचिते
तानप्यन्तर चेदुपैषि किमथो नाकार्यकार्यं त्वया ॥१०

---

१ विसंवादः वञ्चना । २ कमला लक्ष्मीः । ३ दुर्गं दुःखेन गंतुं शक्यम् ।
४ तटिनी नदी । ५ द्रोणी नौविशेषः ।
६ आशा ७ अग्र ८ धनिकाः ९ अपचितिः पूजा १० योग्यं

नाना योनिपरिभ्रमश्रमवता लब्धं त्वयेदं जनु-
र्भ्रांतश्चिन्तय चित्त तत्र किमपि प्राप्तं सुखं नु त्वया।
अस्मिन्नप्यतिदुर्लभे यदि शिवस्याङ्घ्रिद्वयं नो भजेः
संसारानलकीलजालजटिल स्यान्नैव ते निर्वृतिः॥ ११

क्रीडामात्ररतस्य यातमशिवध्यानेन ते शैशवं
रामारक्ततया निनीषसि मनः कस्मात्पुनर्यौवनम्।
एतत्ते शिवपादपद्मयुगलध्यानैकयोग्यं वयो
मा मा मूढ वृथाऽतिवाहय कदापीत्थं मुहुः प्रार्थये॥१२

हे मन्मानस चिन्तयस्यनुदिनं लाभं न हानिं निजां
लाभे हृष्यसि रे विषीदसि पुनर्लेशेऽपि हान्याः स्थिते।
किं नो खिद्यसि दुर्लभेऽपि वयसि क्षीणे शिवं न स्मर-
न्प्रातं नैव वयोऽधिगम्यत इदं नानामयासैरपि॥ १३

कान्तानां प्रदिधक्षति प्रतिपलं त्वामेकतोक्षिच्छटा
सज्जीभूय मुहुर्मुमोहयिषति श्रीमत्त्वमप्यन्यतः।
इत्थं दुःखशतैर्वृतं यदि शिवस्याङ्घ्रिद्वयं नो भजेः
भ्रांतश्चिन्तय चित्त सन्ततमये केनाऽस्तु ते निर्वृतिः॥ १४

भार्यां दुःखमयीं विभावयसि यामानन्दसान्द्रेत्यहो
पुत्राः कुत्र निजैनसा यमपुरीं चेतस्त्वयि प्रस्थिते।
लक्ष्मीर्दुःखविपाकिनी च विषयाः सर्वेऽपि दुःखात्मका
इत्थं चिन्तय चित्त नूनमखिलं दुःखैकसारं जगत्॥ १५

पुन्नाम्नो नरकात्समुद्धरति यत्तत्पुत्र इत्युच्यते
सोऽयं तत्प्रयुज्यते यदि पिता यास्यत्यहो दुर्गतिम्।

---

१ ज्वालां २ सुखं ३ अनुदात्तेत्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम्। ४ दग्धुं वाञ्छति

चेतः शङ्करपादपङ्कजयुगध्यानैकसक्त्या मुहु-
र्लीनं तत्र भव प्रमोदनिलये किं मूढ पुत्रेण ते ॥ १६

सायासं बत मन्दिरं विरचितं यद्वैजयन्तोपमं
सम्पद्धिक्कृतमर्त्यधर्मविभवा कष्टादथोपार्जिता ।
कान्ता मानुषतां गतेव कमला सम्पादिता किन्तत-
श्चेतः शङ्करपादपद्मयुगलध्याने न चेत्सज्जसे ॥ १७

नो विद्यां समपीपदोऽन्धतमसप्राग्भारविध्वंसिनीं
नाप्यर्थं समुपार्जिजः सुविपुलं येनार्तदीनावनम् ।
कामं नाप्यभुनक् सखे सुविमलं धर्मं तु नैवाचरः
किन्तन्मानुषतामुपेतमकृथाश्चेतस्त्वमेतद्वद ॥ १८

पुराभवसमर्जितैः सुकृतसंचयैश्चित्त मे
त्वयाऽधिगतमुत्तमं जनुरिदं द्विजानां कुले ।
गुणैरसि परिष्कृतं यदि ततो भवं भावये-
र्वदेयुरयि साधवः परिमलस्य हेम्न्युद्भवम् ॥ १९

विहाय श्रीशम्भोश्चरणकमलद्वन्द्वममलं
विमूढ त्वं भूयः किमु विषयजालेषु रमसे ।
सुधासिन्धुं हित्वा हृदय किल दैवादुपनतं
रतिः किं वा युक्ता सरसि विषसम्पूर्णसलिले ॥ २०

नानायोनिपरिभ्रमैरनुदिनं कष्टैर्मुहुः कर्मभि-
र्भूरि व्याधिभिराधिभिश्च नितरां मच्चित्त सन्तप्यसे ।
कस्मान्मूढ सुखाशयाथ कुरुषे कर्माणि दुःखाश्रया-
ण्येशं पादयुगं सुखाय सततं योगीन्द्रसेव्यं भज ॥ २१

---

१ वैजयन्त इन्द्रस्य प्रासादः । २ मर्त्यधर्मा कुबेरः । ३ प्राग्भारः समूहः ।

# सप्रमोदसङ्गीकारः।

नागपुरनिवासिश्रीयुतपण्डितगङ्गाप्रसादाग्निहोत्रिभिः प्रेरिता हिन्दीभाषामयैश्छप्पयच्छन्दोभिरनुवादिता श्रीरामगीता श्रीछप्पयरामगीताख्या श्रीयुतबडेचौबे श्रीराधाचन्द्रैः प्रेषितो हिन्दीभाषामयो वैद्यवल्लभः खेतडीनिवासिश्रीगुरुदत्तशर्मणा प्रेषितं कर्पूरस्तोत्रं श्रीमदाचार्यचक्रवर्तिश्रीसम्पत्कुमारनरसिंहाचार्यस्वामिभिः प्रहितः शिक्षानिक्षेपश्चेति सानन्दं धन्यवादप्रदानपुरःसरं सादरं च स्वीक्रियन्ते। यथावसरं च पुस्तकान्येतानि चन्द्रिकायां समालोचयिष्यन्ते।

---

# समालोचना।

( निम्ने समालोचितानि पुस्तकानि ' सदरबाजार, मेरट ' इत्यस्मिंस्थाने संस्कृतपुस्तकालयाधीशपण्डितश्रीईश्वरीप्रसादशर्मणः सकाशाल्लभ्यन्ते। )

**नवग्रहकाण्डी अर्थात् नित्यपूजाविधानपद्धतिः**—अत्र श्रीगणपतीन्द्रसूर्यप्रभृतीनां देवतानां पूजनमन्त्रा यजुर्वेदगताः संस्कृतव्याख्यया हिन्दीभाषानुवादेन च संवलिताः समुद्भासन्ते। एतच्च मनोहरैरक्षरैः खेमराज श्रीकृष्णदासमहाशयस्य वेङ्कटेश्वरयन्त्रालये [ मुम्बय्यां ] मुद्रितम्। संस्कृतव्याख्या च भाषानुवादश्च हृदयङ्गमः संवृत्तः। सर्वैरपि संग्रहीतुमर्हमिदम्।

**शिवताण्डवस्तोत्रम्**—लङ्कानाथश्रीरावणविरचितं शिवस्तोत्रमिदम्। पण्डितश्रीमदीश्वरीप्रसादशर्मणा हिन्दीभाषयाऽनुवादितम्। अनुवादः किल हिन्दीभाषामयोऽपि तद्भाषानभिज्ञैरप्यवबोद्धुं शक्यते। तथापि न ग्राम्यभावं प्राप्तः। मुद्रणमप्यतिमनोहरम्। प्रतिदिनं पठितुं योग्यमिदमवश्यं संगृह्यतामभिलाषुकैः।

**आंगरेजीकी सीढी**—इंग्रेजीभाषाप्रासादस्य शिखरमारुरुक्षोरत्यन्तमुपयुक्तः प्रबन्धोऽयम् । अत्र च इंग्रेजीवर्णा देवनागराक्षरैर्ज्ञापितास्तदुच्चाराः शब्दाश्चोपयुक्ताः सोच्चारास्तथाविधान्येव वाक्यानि पत्रप्रभृतीनां लेखनपद्धतिः समुपयुक्ताश्च केचिद्व्याकरणनियमाः प्रणेत्रोपनिबद्धाः । पुस्तकस्यास्योपयुक्तत्वविषये तु नास्ति नः सन्देहः । किन्तु क्वचित् News, Want, Your, Live, That, इत्यादिशब्दानामुच्चारा 'निउज, वान्ट, युऔर, लिव, देट' इत्यादयोऽसदृशाः सम्पन्नास्तांश्च संस्करणान्तरे शोधयेद्विरचयितेति बलवदाशास्महे । पुस्तकेनानेन इंग्रेजीभाषाया इव उर्दूभाषाया लिप्याश्च ज्ञानमनायासेनैव भविष्यतीति प्रतीतिरस्माकम् । तस्या अपि हि भाषाया वर्णशब्दादयोऽत्र समुपनिबद्धाः । उपयुक्तं खल्वेतत्पुस्तकं छात्राणाम् । पण्डितेनेश्वरीप्रसादशर्मणैव संकलितमेतत् ।

**गंगालहरी**—हिन्दीभाषया सरलैः शिखरिणीवृत्तैः कृतो गङ्गालहर्या अनुवादोऽयम् । अनुवादः किल सम्यक्सम्पन्नः । तेन हि मूलगतोऽर्थः शक्यते ज्ञातुम् । परं क्वचिच्छन्दोभङ्गो हृदयमुद्वेजयति । अत्र द्वितीयादि पद्यानि निदर्शनम् । मुद्रणादि सौष्ठवं त्वतिमात्रं प्रशंसनीयम् । हिन्दीभाषाभिज्ञास्त्वनेन सन्तोषं विन्देरन् ।

**रुद्री**—शुक्लयजुर्वेदिया षडङ्गरुद्राष्टाध्यायीयम् । पण्डितस्य श्रीमदीश्वरीप्रसादशर्मण आदेशानुसारेण तत्रभवता बलदेवप्रसादमिश्रेण हिन्दीभाषया विरचितेनानुवादेन संवलिता । अतिमात्रमनोहरया रसपरिप्लुतया भूमिकया च समुल्लसिता । अतितरां हृदयङ्गमोऽस्यानुवादः संवृत्तः । सारल्यमप्येतस्य प्रशंसनीयम् । मनोरमैर्मुम्बयीप्रदेशीयैर्वर्णैः सम्यङ्मुद्रिता । पत्राणि चास्याश्चारूणि । संग्रहणमस्या अवश्यंविधातव्यं शुक्लयजुर्वेदीयैस्तत्र च विशेषतः परिचितहिन्दीभाषैः ।

**कलियुगाचार्यदयानन्दस्तोत्रम्**—सर्वेषामपि सनातनधर्मावलम्बिनामुपकाराय पण्डितेनेश्वरीप्रसादेन प्रकाशितमेतत् । न किल वयं दयानन्दम-

तानुसारिणः प्रत्युत सनातनं वैदिकमेव धर्ममेकान्ततोऽभिमन्यामहे। तेन यद्यप्यस्मद्विरुद्धमतस्थापकः पण्डितो दयानन्द इति सत्यं तथापि नैतत्तदीयं स्तोत्रं निन्दामात्रव्यञ्जकं प्रमोदयति नश्चेतः। अनार्यसमाजरहस्यप्रभृतीन्प्रमाणपरिपूरितान्दयानन्दमतखण्डनग्रन्थान्प्रकाशितवतो निकाममेतदनुचितं ग्राम्यजनमात्रोचितस्य मार्गस्यानुसरणं पण्डितस्येश्वरीप्रसादस्येति वाचालयत्यस्मान्बुद्धिरस्माकम्। प्रतिवादिनोऽप्यग्राम्यैः प्रमाणयुक्तिसमुल्लसितैर्वादैः पराजेतव्याः।

**योगसारः**—हिन्दीभाषया विरचितं योगविषकं पुस्तकमेतत्। अत्र प्रथमं छात्राणां हिताय कस्यचिद्योगिनश्चित्रं तत्र च संक्षेपतः पिङ्गलादीनां स्थानानि प्रदर्शितानि। ततो योगलक्षणमासनभेदा एकादश कर्माणि तेषां निरूपणं च योगस्याष्टाङ्गानि समाध्यास्थानप्रकारस्तदुत्तारणविधिर्योगफलं च सम्यङ्निरूपितम्। एतेन योगबलान्नानाविधा रोगाश्चिकित्सितुं शक्या विविधानां च विषाणां वेगाः सुप्रशमा इति च सम्यक्प्रतीयते। लघीयोऽप्येतदतिमात्रोपयुक्तं मनोहरं सरलं च। आशास्महे पुनरेतत्सीसकाक्षरैर्मुद्रयेत्पण्डित ईश्वरीप्रसाद इति।

---

## अस्यां संख्यायां शिवराजविजये प्रथमत एतत्पठ्यतां वाचकैः त्रुटितं ह्येतदनवधानात्।

मन्द्रस्वरमेदुरा वाणी। अथ तत्किं नाज्ञाय्यद्यापि भवता प्रभुवर्याणामादेशो यद्दौवारिकेण प्रहरिणा वा त्रिः पृष्टोऽपि प्रत्युत्तरमददद्धन्तव्य इति।

इत्येवं भाषमाणेन द्वाःस्थेन क्षम्यतामेष आगच्छामि आगत्य च निखिलं निवेदयामि इति कथयन्द्वादशवर्षेण केनापि भिक्षुबटुनाऽनुगम्यमानः कोपि काषायवासा धृततुम्बीपात्रो भस्मच्छुरितललाटो रुद्राक्षमालिकासनाथितकण्ठो भव्यमूर्तिः संन्यासी दृष्टः। ततस्तयोरेवमभूदालापः।

---

# संस्कृतचन्द्रिकायाः पाठकमहाशयेषु विज्ञप्तिः ।

सहृदया वाचकमहाशयाः श्रीमतामनुग्रहादेव व्यतीतो वराक्याः कोल्हापुरे प्रकाश्यमानाया अस्याश्चन्द्रिकायाः संवत्सर एकः । द्वितीयस्य च वत्सरस्य नवमीयं संख्या श्रीमतां कराम्बुजमलङ्करोति । आशास्महे च श्रीमतामेव महनीयतमेन प्रसादेन शेषा अपि संख्याः श्रीमत्सविधमुपगच्छेयुरिति । चन्द्रिका तु यथावसरं नोपयातीति केषांचिन्मनसोऽप्रसन्नतामाकलय्य वयमपि विषीदामः । किन्तु चन्द्रिकाया मुद्रणस्थानादेः परिवृत्त्यादिना संवृत्तः समयभङ्ग एतस्मिन्वत्सरे यद्यपि निवारयितुमशक्यस्तथापि आगामिनि वत्सरे प्रतिमासं यथावसरमेवासौ प्रकाश्येतेति प्रतिजानीमः ।

केचित्तु महाशया दार्शनिकविषयाणामेतस्यां प्रकाशनमनवलोक्य विमनायन्ते तेषामपि चेतस आवर्जनायागामिन्यब्दे प्रतिमासं सांख्ययोगवेदान्तमीमांसादिदर्शनानां मर्माणि समवबोधयितुं केचन प्रबन्धा अवश्यं प्रकाश्येरन् । एतावन्तमपि कालमशेषेऽपि भारते सिंहलद्वीपे च विरलविरलं प्रचरन्त्या नैतस्यास्तावन्तो ग्राहकाः सम्पन्ना यैरनन्तरायमेवास्या मुद्रणादिव्ययो निर्वाह्येत । आवेदिताश्च भूयांसो भारतीयाः प्रभवोऽस्माभिरेतस्याः साहाय्याय । किन्तु नाद्यापि भाग्यमेतस्या उदयितुमारभते । एष च मुद्राणादिव्ययो वाचकानुग्रहमन्तरा नूनमशक्यो निर्वाहयितुम् । विज्ञापिताश्चास्माभिः सर्वेऽप्यप्रदत्तमूल्या वाचकमहाशया मूल्यवितरणेनानुग्रहीतुं चन्द्रिकाम् । किन्तु नाद्याप्यस्यां तेऽपि कृपापाङ्गं विकिरन्तीत्यहो दुर्भाग्यमेतस्याः । **अथ यदि मासेऽत्र मूल्यं न प्रदीयेत तदाऽऽगामिनीं संख्यामवश्यं व्ही. पी. द्वारा प्रेरयिष्यामस्तां चावश्यं स्वीकुर्युर्दयालवो भवन्त इति ।** अनन्यगत्या व्हीपीकरणमेतदवश्यं मर्षणीयमित्यभ्यर्थयामहे । यश्चास्यां विशेषोविधातुमिष्टः सोऽवश्यं निवेद्यतां समुचितश्चेदवश्यं स्वीकरिष्यत इति शिवम् ।

विनयावनतस्य संस्कृतचन्द्रिकायाः
सहकारिसम्पादकस्य ।

७।२१३।३।

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

॥ श्रीगणेशाय नमः ॥

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## ॥ भाषावतरणिका ॥

याता सम्पदनुत्तमाऽपि विलयं नष्टोऽभिमानाऽङ्कुरो
जातिर्याति दिगन्तरं मुनिमतो धर्मोऽपि संक्षीयते ।
इत्येव मविलोक्य भारतभुवि क्षोभं मनस्युद्वहन्
भावोऽप्यस्य निसर्गजानपि गुणान् शोकेन सन्तप्यते ॥ १ ॥

## उद्भटश्लोकाः ।

स्थाने[2] सुशिष्यनिवहे विनियुज्यमाना
विद्या गुरुं हि गुणवत्तरमातनोति ।
आदाय शुक्तिषु बलाहक[3]विप्रकीर्णान्
रत्नाकरो भवति वारिकणान्सरस्वान्[4] ॥

कर्णारुन्तुद[5]मन्तरेण[6] रटितं गाहस्व काक स्वयं
माकन्दे[7] मकरन्दशालिनमथ त्वां मन्महे कोकिलम् ।
धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालफालपतिते पङ्के न शङ्केत कः ॥

१ शीतादीन् २ योग्ये ३ बलाहको मेघः ४ समुद्रः ५ अरुन्तुदं मर्मस्पृक् कर्णत्रासदायकमित्यर्थः । ६ विना ७ माकन्दः आम्रः ।

# पण्डितराजः श्रीजगन्नाथः ।

( पूर्वतोऽनुवृत्तः )

प्रकाशितैव लवङ्ग्युपाख्यानकिंवदन्ती गतसंख्यायामस्माभिः । अथेदानीं तस्याः सत्यत्वादि विचारयितुमिच्छामः ।

स्वभावत एव किल क्रोधवन्तो यवनाः स्वाङ्गनासु परस्य प्रेममयं पूज्यभावसम्भवमपि नयनपातं न सहन्ते किम्पुनर्विधर्मियस्य कामाविष्टमनस आत्मनः समक्षमेव निजकन्याविषयिणीं प्रार्थनाम् । यद्यपि भूयांसो विद्वांसो वैदुष्यस्याननुरूपमहङ्कारमवाप्नुवते तथापि नहि काममात्रासक्त्या धर्ममुल्लङ्घयितुमर्हन्त इत्यपि नैव विस्मरणीयम् । क्षुद्रतमोऽपि यवनो यदि विधर्मीयैः कृतया कान्तागतया कथयापि कोपस्य परां कोटिमारोहेत्तदा कथं वा निखिलभारतवर्षभूपालसमभ्यर्चितशासनो दिल्लीश्वरः शाहाजहानः पण्डितेनापि जगन्नाथेनात्मनः समक्षमभ्यर्थितां कन्यां तस्मै प्रदाय यवनधर्ममवधीरयितुं प्रभवेत् । नूनं नैतत्कथञ्चिदपि सम्भवति । यवनीनवनीतकोमलाङ्गीत्यादयः श्लोका यदि पण्डितराजविरचिता एवेति स्वीक्रियेत तदा भामिनीविलासेऽपि तेषामुपनिबन्धनमवश्यमङ्गीकर्तव्यम् । दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया स्वीयपद्यरत्नानां भामिनीविलासाख्यां मञ्जूषां निर्मितवता पण्डितराजेन कथं वा तानि विस्मर्येरन्कथं च मञ्जूषायां न संगृह्येरन्नित्यपि विचारणीयं विद्वद्भिः । अतो नैतानि पद्यानि पण्डितराजप्रणीतानीति प्रतीयते । ततश्चजगन्नाथस्य यवनीपरिणयविषयिणीयमाख्यायिकागगन आलेखलेखनमनुहरति । किं च सार्वभौमायमानो दिल्लीश्वरः सभायां जलं पिबेदित्यपि न श्रद्धेयं नापि वा तस्य कन्यका शिरसि कलशीं निधाय हीनभाग्या योषिदिव नीरमानयेदित्यपि सम्भवास्पदम् । येभ्यः पन्थानोपि भृत्यैरेवादिश्यन्ते तेषामसूर्यंपश्याः कन्यास्तत्र च सुस्त-

नीत्वादिविशेषणार्हाः प्रगल्भे वयसि पद्मर्पयन्त्यः परपुरुषपरिवृतायां परिषदि पानीयमानयेयुरित्यपि विरुद्धमेव प्रतिभाति। अतो निर्मूलेयं जगन्नाथस्य यवनीपरिणेतृत्वविषयिण्याख्यायिका।

अथ भगवत्या भागीरथ्याऽऽत्मनोऽङ्केषु विलयं नीतो जगन्नाथ इत्येषापि किंवदन्ती कियत्सत्यभावमवलम्बत इति विचार्यते। ययैव पण्डितराजविरचितया स्तुत्या प्रमुदितहृदया देवनदी जगन्नाथं पावयामासेति श्रूयते सा किल पीयूषलहरी गङ्गालहरीति वा प्रथिता। यदि तूपरि निर्दिष्टा लोकवार्ता मृषात्वं नावगाहेत तदा गङ्गालहरीप्रणयनकाल एव जगन्नाथस्यायुषोऽवसानावसर इति स्फुटमेव। ततश्च गङ्गालहरीप्रणयनोत्तरं जगन्नाथो नान्यं प्रबन्धं निर्मास्यतीत्यपि सिद्धम्। अर्थाज्जगन्नाथविरचिते प्रबन्धान्तरे गङ्गालहरीगतानि पद्यानि नैव दृश्येरन्। किन्तु तानि दृश्यन्ते। अत एव गङ्गालहरीप्रणयनावसान एव जगन्नाथस्यायुषः परिसमाप्तिरिति वचनं नैव विचारसहम्। नापि गङ्गालहरीभिन्ना जगन्नाथविरचिता काचिदपि मन्दाकिन्याः स्तुतिरस्ति यस्या अवसानसमयं जगन्नाथस्य निधनावसरं मंस्यामहे। अतः सर्वथा निर्मूलेयमाख्यायिका। दृश्यन्ते च गङ्गालहरीगतानि पद्यानि रसगङ्गाधरे यथा—

विधत्तां निःशङ्कं निरवधिसमाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः।
कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्ति भवती॥माधुर्योदाहरणम्।

एवमनन्वयालङ्कारप्रकरणेऽपि

कृतक्षुद्राघौघानथ सपदि सन्तप्तमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः।
अपि प्रायश्चित्तप्रसरणपथातीतचरितान्
नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे॥ इति॥

एवं भावस्योदाहरणप्रसङ्गेनोक्तं जगन्नाथेन तत्रैव भाङ्गिभिताश्च पञ्च लहर्यो भावस्येति उदाहरणमिति सम्बध्यते । ताश्च पञ्च लहर्यो नाम पीयूषलहरीसुधालहरीलक्ष्मीलहर्यमृतलहरीकरुणालहरी चेति । एवं च पीयूषलहर्यपराख्यायाः श्रीगङ्गालहर्याः पञ्चसु लहरीष्वन्तर्भूततया लहरीपञ्चकस्य च रसगङ्गाधर उल्लिखितत्वेन गङ्गालहरीगतानां पद्यानां रसगङ्गाधरे दृश्यमानत्वाच्च गङ्गालहर्या रसगङ्गाधरनिर्माणात्प्राक्सम्भूतत्वं स्फुटमेव प्रतीयते । ततश्च निर्मूलेयमाख्यायिका यदुच्यते लीनो मन्दाकिन्याः क्रोडे जगन्नाथ इति ।

अथ द्वितीया किंवदन्ती । आसीत्किल दिल्लीपतेः कोऽपि पुरोहितो म्लेच्छजातीयो यः संस्कृतभाषाब्धेः परं पारमासाद्य शास्त्रसागरमुल्लङ्घ्य च तत्र तत्र निवसतः पण्डितगणान्पराभवति स्म । स च तैस्तैः पण्डितैर्विवदमानस्तांस्तान्विदुषो विजयमानस्तत्र तत्र प्रदेशे सनातनं भारतधर्ममुत्सादयमानो निराकुर्वन्प्रतिपक्षान्प्रतिपादयन्यवनधर्मं परिखण्डयन् शास्त्राणि क्षेपयन्नस्खलितया संस्कृतगिरा भारतीयान्विबुधानवजिताशेषदक्षिणप्रदेशः सकलविद्यावैशद्यावभासितां नानाविधविबुधमण्डलीमण्डितां पण्डिताग्रेसरसमुपक्रम्यमाणदार्शनिकविषयचर्चामर्चानुकूलकलसमर्पणकलपपादपायमानेन भगवता शशिखण्डमौलिना समुद्भासितां भासिताशेषत्रिभुवनया परमपावनया मन्दाकिनीदेव्या परिगतां समुमचीयमानमुक्तराशिं काशीं नाम गरीयसीं नगरीमुपतस्थौ । ततश्च तत्रत्यान्विबुधानाह्वयमानः काजी सभां महायसीं निर्माय विवादमारिप्सामास । पण्डिता अपि तदानीमेवाहम्पूर्विकया सभामागत्य विविधाभियुक्तिभिर्नानाविधाभिर्वचनरचनाभिः परिस्फुरन्तीभिः प्रमाणपरम्पराभिश्च काजीं जेतुमयतन्त । काजी तु पवन इव पथिपतितांस्तृणच्छेदांस्तानि वचनजालानि क्षणादेव प्रतिक्षिपन्नखण्डितमतः करनखराग्रैरानाभि लम्बमानां धवलकीर्तिसन्ततिमिव पुञ्जीभूयोपागतां

---

१ स्पर्धायामाङ इतिह्वयतेरात्मनेपदम् ।

कूर्चिकां* परिष्कुर्वन्सावहेलमग्रासनमधिरुरोह । तदनु विवादेऽप्रभाविष्णवो ऽप्यपमानासहिष्णवो वाराणसीनिवासिनो द्विजन्मानोऽनुचरविपदपहर्तारं सृष्टिस्थितिप्रलयकर्तारं निजपरिचरप्रतिभटखण्डनं सुधाकरकलामण्डनं समुपेत्यानन्यगतेन मनसा नानाविधाभिस्तत्कालसमुचिताभिःकरुणरसपरिप्लुताभिः स्तुतिभिस्तमेव भगवन्तमुपवीणयामासुः । अवगताशेषवृत्तान्तश्च भगवान्भुजगभूषणो भागीरथीमौलिर्महेश्वरस्तदात्व एव प्रत्यक्षीभूय वाचमेतामुदीरयामास । अस्त्यत्र कस्यापि रत्नेश्वरनाम्नो द्विजन्मनो धनिकस्य सदन आम्भसिक[1]: कश्चिद्भिक्षुः स एवास्यावलिप्तस्य यवनहतकस्य पराजये प्रभवतीति स एवाभ्यर्थ्यतामिति । ते तु ब्राह्मणाः फलमिवात्मनो मनोरथद्रुमस्य तद्वचनमाकर्ण्य द्रुतपदं रत्नेश्वरश्रेष्ठिनो भवनमागत्यासाद्यत्र श्रेष्ठिनं भगवतो निदेशमावेदयामासुः । स च तेषां तद्वचनमाकर्ण्य परं विस्मयमापन्नस्तमेव नीराधिकृतमात्मनो दासं समाहूय निजगादाभिलषितं ब्राह्मणसमाजस्य । अपृच्छच्च अपि प्रभवसि कर्मण्येतस्मिन्निति । ततो धीवरजालायमानेन संख्येयतन्तुसन्तानेनाजानुलम्बिना मालीमसेन वसनेनावेष्टिताधःकायो जठरभरमन्थरगतिरंससुभयतः प्ररूढैर्जलकुम्भवहनसञ्जातैः किणैः समुल्लसितः पीवरतनुः श्यामायमानेन चेलखण्डेनवेष्टितोत्तमाङ्गो घटीचेटो[2] हुं करिष्याम्येतद्यदि भवन्तोऽनुजानीयुरिति मन्दमन्दं प्रत्यभाषिष्ट । ततः श्रेष्ठिना समर्पिते तस्मिन्प्रमुदिता ब्राह्मणाः कौशेयानि पट्टवसनानि परिधाप्य अनर्घ्यभूषणैरलङ्कृत्योष्णीषसमुल्लसितं च तस्य मूर्धानं विधाय कनकशिबिकायामारोप्य महीयसामहोत्सवेन विरचितायां सभामानाय्य तमुपवेशयामासुः । काजीरपिसमाहूतागतस्तस्यैव संमुखमुपाविशत् । ततो दोलायमानकूर्चिकाकलापं समुद्धूयमानश्मश्रुरोमजालं च प्रवदता काज्यासह प्रववृते भिक्षोर्विवादः । अन्ते पुनर्भिक्षुवचनचातुरीविस्मितोऽश्रुतपूर्वाः सहस्रशो युक्तीराकर्ण्येतिकर्तव्यताविमूढो विवादसागरमुत्तरीतुमप्रभाविष्णुः काजी-

---

* दाढी । १ आम्भसिकः अम्भसि नियुक्तः पाणक्या इति ख्यातः । २ पाणक्या ।

तूष्णीम्भावमवलम्ब्य भिक्षुं प्रणनाम । ततो विजितं विजितं भिक्षुणेति सताऌरवं प्रवृत्तेषु वचनेषु तदानीमेव मूर्छत्सु तूर्येष्वाहन्यमानेषु मुरजेषु ध्वन्यमानेषु दुन्दुभिषु आध्मायमानेषु शङ्खेषु उच्चरत्सु क्ष्वेलानुकारिषु सिंहनादैकाक्केङ्कारेषु महोत्सवमय इव मङ्गलमय इव प्रमोदमय इव विजयमय इव यशोमय इव च तस्मिन्समये सबहुमानं सप्रणामं च सौवर्णं यानमारोप्य भिक्षुं श्रेष्ठिन: सदनमानाय्य यथावृत्तं वृत्तं निजगदुर्द्विजन्मान: । ततस्तु समुद्भूतजिज्ञासा: सर्वेऽपि तस्य भिक्षो: कुलं नाम विद्यामभिजनं च पप्रच्छु: । तस्मिंश्चाशेषतोऽपि तेन कथिते निश्चिक्यु: काशीस्था विबुधा अयमेव पण्डितराजो जगन्नाथ इति । काजीस्तु तत प्रभृति तस्य पण्डितराजजगन्नाथस्य मित्रतामुपागच्छत् । ततो गच्छता कालेन दिल्लीं गतो बादशाहं विज्ञाप्य जगन्नाथमपि दिल्लीनगर एवानाययामास । ततः प्रभृति च प्ररूढं जगन्नाथबादशाहयोः सौहार्दमिति ।

( क्रमशः )

---

## मूर्तिपूजनम् ।

( पूर्वतोऽनुवृत्तम् )

केचित्त्ववार्चीना ज्ञानलवदुर्विदग्धा वेदान्तमेव समवलम्बमाना नास्तिक्यस्य परां कोटिमारूढा वेदान्तशास्त्रविरुद्धेयं मूर्तिपूजेत्याहु: । तन्न समञ्जसम् । प्रतिपादयत्येव हि सगुणोपासनं वेदान्त: । वेदान्तस्तावद्वेदानामन्त: शिरस्थभाग उपनिषद्भाग: । शाण्डिल्योपनिषदि च सगुणोपासनमाम्नायते । किं चाद्वैतशास्त्रमेव वेदान्त इति चेदङ्गीक्रियते तदाऽपि न क्षति: वेदान्तदर्शने व्यासेनैव सगुणोपासनाया अभिधीयमानत्वात् । श्रीशङ्कराचार्या अपि सर्वत्रैवमेव प्रतिपादयामासु: । किं च नास्ति वेदान्तमूर्तिपूजनयोर्विरोध: समानविषयकत्वाभावात् । वेदान्ताधिकारायैव हि सगुणोपासनं

---

१ क्ष्वेला सिंहनाद:

विधीयते। तन्न युज्यते वेदान्तमूर्तिपूजनयोर्विरोध इति वक्तुम्। ये तु स्थितप्रज्ञाः समलोष्ठाश्मकाञ्चनास्तृणे स्त्रैणे च समानबुद्धयो दिगम्बरा अलिप्तमतय आनन्दैकमूर्तयो निर्द्वन्द्वाः परित्यक्तजनसंसर्गा महापुरुषाः परित्यजन्तु नाम ते प्रतिमापूजां न हि स्वयं देवपदमुपायातानां मूर्तिपूजया प्रयोजनं किञ्चिदपि। किन्तु ये मदिराया अपि रसं रसयन्तो नापत्रपन्ते ये वा मुहुर्मुहुर्धूमवर्तिपानधूसरितरदनाश्च बाष्पयानशीर्षमिव निरन्तरनिर्गच्छद्धूमपुञ्जं वदनं वहन्तः पथ्यपि न विरमन्ति कर्मणस्तस्मात् ये च साचिस्मितेनासमग्रैश्च भावगर्भैरपाङ्गपातैरुद्दीपितमदनानला रमन्ते रमणीषु ये वा क्षणमपि ताम्रकूटचर्वणविरहं न सहन्ते ये वा समुज्ज्वलमेव वेषादि बहुमन्यन्ते येषां चाक्रम्यन्ते मनांसि द्वन्द्वैः सर्वथा च ये दुराचारमयेष्वेव वर्त्मसु पदानि वितरन्ति येषां च मलीमसतमं चेतः प्रमोदते सौख्येनोद्विजते च दुःखेन कथंनाम ते वेदान्तशास्त्रस्याधिकारिणः सम्पद्येरन्। अधिकारमप्यनधिगतवन्तश्च परित्यक्तमूर्तिपूजा निराकृतधर्माः कथं वा दिव्यं पदमवाप्नुयुः कथं च निरये न पतेयुः। सर्वथोपरिनिर्दिष्टाचाराणां वेदान्तमात्रालम्बानां नास्ति नो वेदान्तविरुद्धया मूर्तिपूजया प्रयोजनं किमपीति वचनं तेषामुभयतो भ्रष्टत्वमन्तरा न किञ्चिदप्यन्यद्द्योतयतीति बोद्धव्यम्। विभावनीयं च नैव वेदान्तशास्त्रविरुद्धो मूर्तिपूजनाचार इति। स चावश्यमनुष्ठेय आर्यत्वं कामयमानेनेति।

एवं च ध्वनयति विदधाति च मूर्तिपूजनं वेदो निरूपयति च तदाचारं स्मृतिः प्रशंसन्ति तदाचरितं दर्शनानि प्रतिपादयन्ति प्रतिमापूजनं पुराणानि साधयत्येतल्लौकिकी युक्तिः। अतो यदीष्यत आत्मनो हिन्दुत्वं यदि विद्यते वैदिकधर्माभिमानो यदि नास्ति निरयप्रत्याशा यदि च समपेक्ष्यते निर्गुणब्रह्मोपासनायामधिकारो यदि च प्रेप्स्यते निःश्रेयसमन्दिरकपाटोद्घाटनक्षमता तदा पूज्यन्तामन्वहं प्रतिमाः। इदमेव ह्यादिमं कर्तव्यमार्यवंशेसमधिगतजन्मनां पुरुषाणामिति शिवम्

---

# बुद्धिमाहात्म्यम् ।

( पूर्वतोऽनुवृत्तम् )

अथ दिनेषु व्यतीतेष्वेकदा पुनरपि नृपतिः सुशीलमादिशति—सुशील अहं लोकेऽदृष्टपूर्वं सप्ततलं सौधं निर्मास्यामि । किन्तु निर्माणप्रकारोऽन्यविधः श्रूयताम् । तथाहि प्रथमं शिखरदेशं निर्मातुमिच्छामि तदधो विटङ्कं तदधो विविधकारुकार्यखचितप्रदेशं तदधश्छदिस्तदधो भीमकाष्ठसंयोजनं तदधो बृहतः स्तम्भांस्तदधः षष्ठतलं तदधः पञ्चमतलं तदधश्चतुर्थतलं ततस्तृतीयतलं ततो द्वितीयतलं तदधः प्रथमतलं परिशेषे च वसुधायां भित्तिं निर्मातुमिच्छामि । अतस्तथाविधप्रकारकारकं कञ्चित् स्थपतिमुपाहरेति । तदाकर्ण्य सुशीलः स्मित्वा श्वस्तथा वक्ष्यामि स्वसामर्थ्यमसामर्थ्यं वेति कथयामास ।

ततः स्वावासं गत्वा तद्विस्मयकरं वचनं सुदर्शनमवादीत् । विदित्वा च सुदर्शनः किमत्र चित्रं तथैव प्रथमतो निर्भित्तिकं सप्तमतलं निर्मातुं कुशलं स्थपतिमानेष्यामि किन्तु षण्मासगम्यपथात्परदेशतः । नास्मिन्देशे सर्वथैव स मिलति । तद्वेतनमपि लक्षद्वयरूपकं प्रदेयं भविष्यति । अधुनैव तु तदर्धमिति भूपतये ब्रूया इति प्राह स्म ।

परेद्युः सुशीलो भूपतिं तथा व्यज्ञापयत् । विदित्वा नन्दिताच्च तस्मान्मुद्रालक्षमादाय स स्वसदनं प्रत्यगमत् ।

अथैकस्मिन्दिने सुदर्शनः सुशीलं कथयति सखे तथाविधं स्थपतिमानेतुं सुदूरदेशं व्रजामि षण्मासशेषसमये पुनः समेष्याम्यतः पाथेयं किञ्चिद्द्रव्यं दीयतामित्युक्त्वा लब्धपाथेयः समालिङ्ग्य च सखायं गृहान्निरगात् ।

ततः सुदर्शनः सुदूरं पर्वतमासाद्य सुजातीयं प्रियदर्शनं च किरातात्कीरमेकं क्रीत्वाऽतीवनिभृतदेशं गत्वा स्वाभिमतं कमपि वाग्विशेषं तं कीरं सम्यगशिक्षयत् स्वहस्तात्तमुदक्षिपत्पुनरपि तमाहूय स्वहस्तमुपानयत् ।

शुकमेवं सुष्ठु शिक्षयित्वा भूपितपञ्जरं तमादाय स्वगेहमागच्छत् । आगत्य च सुदर्शनः सुशीलं वक्ति सखे समानीतस्तथाविधः स्थपतिर्विज्ञाप्यतां राजेति ।

ततस्तथा वदति सुशीले हर्षविस्मयकुतूहलोत्फुल्ललोचनो भूपालः सर्वान्विज्ञापयति परश्वो निर्भित्तिकं निर्मापयामि सौधं शिखरदेशादारभ्येति सर्वैरेव तत्रोपस्थातव्यं द्रष्टव्यं च महदाश्चर्यमिति ।

अथ निर्दिष्टे दिवसे महती जनता समवेता अहो किमिति कथमिति व्याहरन्ती यावत्कलकलायमाना विचेष्टते तावत्सुदर्शनसुशीलौ सर्वैरलक्षितं शुकमुच्चैरुद्डाययताम् । स चातीत्य चक्षुःपथमन्तरीक्षं मुहुर्मुहुः स्पष्टमुच्चै रौति—

"ईंटा लेओ सुरकी लेओ हाम् गाँथेगा, *
ईंटा लेओ सुरकी लेओ हाम् गाँथेगा,
ईंटा लेओ सुरकी लेओ हाम् गाँथेगा, " इति

तदाकर्ण्य सर्वे ते जनसङ्घाः साश्चर्या उद्ग्रीवास्तस्थुः । सुदर्शनानुमतः सुशीलोऽपि राजानमुपागम्य निवेदयति नरपते रत्नपाद स्थपतिरत्युच्चदेशमारूढः परिश्राम्यति मुहुः प्रार्थयते स्पष्टमाचष्टे च **ईंटा लेओ सुरकी लेओ हाम् गाँथेगा** इत्यतः शीघ्रमेव इष्टकादिकं प्रासादोपकरणं भृत्यैस्तत्र योजय स्थपतिराजो मदीयो वृथा परिश्राम्यति । यदि प्रभुपादैरेव निरवलम्बे वियति सौधोपकरणं योजयितुं नैव शक्येत तर्हि नास्त्यत्र स्थपतेः किमपि दूषणं ममापि च तदानेतुरिति । श्रुत्वेदमुच्चैर्हसित्वा च भूपतिस्तत्क्षणमेव साधु साध्विति मुहुराख्याय तस्मै मुद्रालक्षं प्रादात् ।

अथ प्रायः संवत्सरमतीत्य वर्षीयानमात्यः पर्यटित्वा बहूनि तीर्थानि स्वगृहमागमत् । समतुष्यच्च श्रुततावद्वृत्तान्तः । किन्तु मन्त्रिपत्नी निर-

---

* ईंटा इष्टकाः सुरकी कोणसाधना कोनाळीति प्रसिद्धा । गाँथेगा मन्दिरं निर्मास्यामीत्यर्थः

न्तरं विषण्णवदना किमपि विचिन्तयन्ती दिनानि यापयति । मन्त्रिणा पुनः पुनः सनिर्वेदसानुनयं च पृच्छ्यमानापि न वैमनस्यनिमित्तं ब्रूते केवलं रोदिति ।

अहो माहात्म्यं स्त्रीमायायाः । एवं गच्छति काले किमिति कथमिति भृशं रुदती मामपि रोदयसि प्रिये किमपराद्धं मयाऽन्येन केनाऽपि वेति सानुनयं पृच्छति मन्त्रिणि तत्पत्नी कथयति । नाथ भवानतिवर्षीयान्कदाऽस्मान्परित्यज्य स्वरारोक्ष्यतीति नास्ति निश्चयः । परन्तु भवति कालवशंगते महाचतुरो धूर्ततमश्च पुत्रीकृतो योऽसौ सुदर्शनः स बुद्धिवृत्याऽऽत्मजं सुशीलं पराजित्यामात्यपदमधिकरिष्यतीति ध्रुवम् । प्रत्यक्षतो दृश्यतां वर्षस्यान्तर एवानागते त्वयि राजानं वञ्चयित्वाऽऽनीतानि द्रव्याणि । नास्य मतिचातुर्यं भवानपि सोढुं शक्ष्यति । अतो यद्यधुनैव नायं विनाश्यते तर्हि ध्रुवं प्राणांस्त्यक्ष्यामीति त्रिसत्यं वच्मि ।

तदाकर्ण्य दुःखरोषाविष्टो मन्त्री विविधेनापि न्यायोपन्यासेन यदा पत्नीं तस्माद्दुर्व्यवसायान्नियन्तुं नापारयत्तदा गत्यन्तरमपश्यन्ननिच्छन्नपि निरागसः सुदर्शनस्य वधमङ्गीचकार । अहो धिक् स्त्रीणां चित्तानुवर्तनम् ।

अथ साहसिकनामानं राजपशुच्छेदकमानाय्य विश्वास्य प्रलोभ्य च धनार्पणेन मन्त्री उवाच । अद्य पत्नीद्वितीयोऽहं किमपि मनोरथसिद्धिदं व्रतमनुतिष्ठामि तत्र च नरकण्ठशोणितमपेक्षणीयमतः क्षणान्तरे यस्त्वां समुपसृत्य भाषिष्यते दीयतां सद्यश्छिन्नपशुमांसमिति तत्क्षणमेव तं हन्या इति समादिष्टस्तथेत्युक्त्वा साहसिको गृहमाययौ ।

व्यतीते च कियति क्षणे समाहूतं सुदर्शनं मन्त्री जगाद । गच्छ तावद्ब्रूहि साहसिकं पत्नीद्वितीयो मन्त्री व्रतार्थं मांसमिच्छत्यतो दीयतां सद्यश्छिन्नपशुमांसमिति । तथेति विमलान्तरात्मा सुदर्शनोऽङ्गीकृत्य यावद्बहिरागतस्तावत्पथि मध्ये समेत्य सुशीलोऽपि तमिदमब्रवीत् सखे दीयमानेनानेन

हेम्नाऽमुनैव पूर्वं राजपुत्रार्थं कारिते इव कुण्डले ममाऽपि कारयित्वा समानयेति

इत्युक्तो मन्त्रिपुत्रेण सुदर्शनस्तदैव कृतानुरोधः कुण्डलयोः कृते प्रहितः। पित्रादिष्टं तु मांसमहमेवानेष्यामीति सुशीलोऽपि सुदर्शनकथित-मादेशं गृहीत्वा साहसिकसमीपं गतवान्। पूर्वमेव स्मृतादेशः सपशुघात-कस्तथैवोक्त्वा मन्त्रिण आदिष्टं स्थितं सुशीलं द्रुतहस्तं खड्गेनावधीत्। तच्चानीय कण्ठशोणितं मन्त्रिणे साहसिक उपाहरत्

सानुतापं च चिन्तयति तस्मिन्मन्त्रिणि कुण्डलहस्तः स सुदर्शनः क्वास्ते सखा मे सुशील इति यावत्पृच्छति तावत्सविलापमाख्यातस्ववृत्ता-न्तो मन्त्री भूतले पपात। भार्यामात्मानं च निन्दन् हा पुत्र इति चक्रन्द। भृत्यैरन्यैः पृष्टः स यथावत् सर्वमवर्णयत्। तदाकर्ण्य सुदर्शनः कथयति पूर्वमेव मया भूयो भूय उक्तम्—

**सोजे रास्तेमे चल्‌ आइये बाबा नहिं गिरे गा** इति

तथाचोक्तम्—

**कन्दुको भित्तिनिक्षिप्त इव प्रतिफलन्मुहुः।**
**आपतत्यात्मनः प्रायो दोषोऽन्यस्य चिकीर्षितः॥**

साधुहत्यां चिकीर्षुभिः पापैरस्माभिर्यत्पुत्रघातनं कृत्वा तत्कण्ठशोणितं प्राप्तमतो न प्राणान्रक्षयेयमिति सुदर्शनं बोधयित्वा दत्वा च समग्रं विभवं मन्त्रित्वपदं चास्मै स्वपापशुद्धये सभार्यो मन्व्यनुशयाऽग्निना दग्धो-ऽपि हुताशनं प्रविवेश।

सुदर्शनोऽपि मन्त्रित्वमास्थाय सुखेन राज्यं शशास। अत एव सर्वैरपि साधुरेव पन्थाः समाश्रयणीय इति शिवम्।

---

# दधीच्युपाख्यानम् ।

युगान्ते चलते मेरुः कल्पान्ते सप्त सागराः ।
साधवः प्रतिपन्नार्था न चलन्ति कदाचन ॥

पुरा किल दधीचिरिति महातपास्तापस आसीत् । तस्य च भार्या मूर्तिमतीव पातिव्रती बभूव गभस्तिनी नाम । यां खलु वडवेत्यप्याजुहवुर्मुनयः । निजकलत्रमात्रनिर्वृतोऽपरोऽगस्तिरिव भगवान्मरीचिर्गृहधर्मपरायणस्तयैव भार्यया सहारण्यमधिवसन्विविधं तपस्तेपे । निखिलं जगदुपप्लावयितुं बद्धपरिकरा अपि दानवास्तपःप्रभावपरिपालितं तस्याश्रमपदमाक्रमितुं न प्रबभूवुः । अथ गच्छता कालेन शक्रप्रमुखा देवाःसर्वेऽपि तस्याश्रमपदं प्राप्य सादरं कृतनतयो मुनिना च ग्राहितातिथ्याः कुशलमनुयुक्ताश्च प्रोचुः ।

मुनीन्द्र कुशलं नः फलितप्रायश्चास्माकं मनोरथद्रुमो यदसि संदृष्टः । भवता हि परिगृहीतानां न किञ्चिदपि दुर्लभं भुवने । तीर्थस्नानं भूतदया भवद्दर्शनं चेत्येतावदेव कर्तव्यं जीवतः पुरुषस्य । सत्यप्येवं किमपि कार्यान्तरमभिधातुं मुखरयतीवायमस्मान्स्नेहः । तच्चावधार्यताम् । भगवन्नशेषानपि दानवान्नामशेषान्विधाय भवत्पादमूलमुपयाताः स्मः । साम्प्रतं च शत्रुविरहितानां विफलान्येव नोऽस्त्राणि । यदि पुनः स्वर्ग एवैतानि स्थाप्येरंस्तदानेकविधं यत्नमास्थायापहरेयुरेतानि पराभवमसहमाना दैत्याः । तदेतानि भवदाश्रम एवार्हाणि स्थापयितुम् । अत एतान्यात्मीयतां नीत्वाऽनुजानीह्यस्मान्नन्दनवनविहाराय । तपःप्रभावाद्दानवदुःप्रवेशे ह्यत्र प्रदेशे नैतेषामपहारस्य शङ्काया अप्यवसर इति । मुनिरपि तत्सादरमङ्गीचकार ।

गभस्तिनी तु तदखिलमाकर्ण्य भर्तारं प्राह । नाथ किमनेन देवकार्येणास्माकम् । परमार्थैकनिष्ठानामपेतसंसारानुरागाणां हि लोकद्वय-

विरुद्धमेतदाचरणम्। किं च यदि जानीयुरत्र निहितान्यायुधानि महाप्रयासा दैत्यास्तदा महीयसा प्रयत्नेनाप्यपहरेयुः ततश्च निक्षेपविनाशक्रुद्धा अमी एव देवाः शत्रवः सम्पद्येरन्नस्माकम्। विदितमेवैतदार्यपुत्रस्य यद्बहवः खलु निक्षेपविनाशादुच्छिन्नसौहृदाः सुहृदोऽप्यसुहृदः सम्पन्ना इति। अत एव परित्यजन्त्यापातरमणीयं दुःखविपाकिनं पन्थानमेतं सन्तः। तदलमेतेन व्यवसायेनेति।

पूर्वमेव प्रतिपन्नार्थस्तु दधीचिर्निशम्येदं भार्याया वचनं प्रत्यब्रीत्। प्रेयसि अवितथं खल्वेतत् सर्वं किन्तु न शक्नोमि परावर्तयितुं सकृदपि समुद्गतां वाचम्। सा तु तदाकर्ण्य दैवमेव शरणं मन्वाना तुष्णीम्बभूव। देवा अपि प्रनष्टभीतयस्तापसाभ्यनुज्ञाताः सानन्दं दिवमगच्छन्। तेषु गतेषु दधीचिरपि कियन्तं कालं भार्यया सह सुखमुवास। अथ दैत्या दधीचिं पीडयितुं प्रावर्तन्त। देवास्तु व्यतीतेऽपि वर्षाणां सहस्रे नात्मन आयुधविषयिणीं निनीषां प्रदर्शयामासुः। प्रतिदिनं पुनरधिकाधिकं ववृधे राक्षसत्रासः। ततः पर्याकुलमतिर्दधीचिर्भार्यामाह स्म। प्रेयसि आयुधान्यत्र संस्थाप्य निर्विशङ्कं दिवं प्रस्थिता देवा नाद्यापि प्रतिनिवर्तन्ते प्रतिदिवसं च समेधत उपप्लवो दैत्यानां तदशक्यान्यतः परमायुधानि संरक्षितुं ब्रूहि किमत्र करवाणीति। सा तु सर्वार्थविद्भवानेवात्र प्रमाणमिति प्रत्यब्रूत। ततो श्लोत्कटेभ्यो दानवेभ्य आयुधानि परिरक्षितुमीहमानो दधीचिः पुण्यैर्जलैस्तानि प्रक्षाल्य जलमयत्वं नीत्वा च प्राश्नात्।

एवं भूते च देवा दधीचिमुपेत्य प्राहुः। मुने उपस्थिताऽस्माकं महाभीतिस्तत्प्रत्यर्प्यन्तामस्त्राणीति। ततो दधीचिः प्राह स्म। महाभागाः अत्रावस्थाप्यायुधानि दिवं प्रविष्टेषु युष्मासु निकामं प्रववृधे राक्षसत्रासः। ततो भीतश्चाहं भवतः प्रतिपालयंश्चिरायापि अनागतेषु श्रीमत्सु तान्यायुधानि जलमयतां प्रापय्यापिबम्। साम्प्रतं च तानि मदीये शरीरेऽस्थिभावमापन्नानि तदुच्यतां यदत्र साम्प्रतमिति। ततो देवा अभाषन्त। मुनीन्द्र कुलं परि-

हासेन देहि नोऽस्त्राणि बलवत्किल प्रपीड्यामहे रिपुभिः कथं वा तानि विना सुखं निवत्स्यामः कुत्र वा गमिष्यामः कथं च जीवितं धारयिष्यामः तद्विधीयतां करुणा समर्प्यन्तां चास्त्राणीति । ततो मुनिर्जगाद—महाभागाः न किल भवज्जीवितादप्यधिको मे देहः तद्योगयुक्तस्य तनुं त्यजतो ममास्थिभिर्निर्वाह्यतामस्त्रकार्यमिति । देवेषु च तथेति तद्वचनमङ्गीकृतवत्सु जलमानेतुं प्रयातायां च सहधर्मिण्यां महासत्वो दधीचिर्बद्धपद्मासन आत्मनो जीवं परमात्मसाच्चक्रे । ततो दधीचिं व्यपेतप्राणमवलोक्य देवास्त्वष्टारं समादिदिशुः आदाय मुनेरस्थीनि निर्मीयन्तां दिव्यान्यस्त्राणीति । तस्मिंश्चास्थिसमुद्धरणमनङ्गीकृतवति गा आहूय दधीचेरस्थीन्यानेतुमाज्ञापयामासुः। ता अपि तदभ्युपगत्य निष्कास्य दधीचिशवादस्थीनि संलिह्य व्यपनीय च संलग्नं मांसादिमलं समानीय तानि देवेभ्यः प्रायच्छन् । ततो देवा अपि कृतायुधाः स्वर्गं प्रययुः ।

अथ नद्याः प्रतिनिवृत्ता गभस्तिनी प्रविश्याश्रमे भर्तारमनवलोकमाना नितरां विषसाद । उद्भ्रान्तेव च हा नाथ क्वाऽसीति विलपन्तीतस्ततो बभ्राम । तत आश्रमवर्तिनं भगवन्तं हुताशनमुपेत्य क्व मे जीवितेश्वर इत्यप्राक्षीत् । सोऽपि यथावृत्तं वृत्तं निजगाद । तदाकर्णयन्त्येव च मूर्च्छिता धरातले न्यपतत् । ततो लब्धसंज्ञा च सोरस्ताडमुच्चैः क्रोशन्ती भर्तुर्नखलोमादीन्यादाय विरचय्य च महीयसीं चितां प्रणम्य चानलं प्रविदार्य चात्मनः कोष्ठं तत्र संस्थितं तनयं च पाणावादाय साञ्जलिबन्धं प्रार्थयामास

**पित्रा हीनो बंधुभिर्गोत्रजैश्च मात्रा हीनो बालकोऽछिन्ननालः ।**
**ओषध्योऽमुं भूतसङ्घैः समेताः सर्वे पान्तु प्रेमतो लोकपालाः ॥**

अयं च चरमो वः प्रणाम इति वदन्त्येव ज्वालामालाजटिलं जातवेदसं प्राविक्षत् । अहो सत्यवादिता साधूनाम् । अवितथं खल्वेतद्वचनं यथा—

**विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः ।**
**याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव** ॥ इति ।

---

भाविताः शक्तयः कुशपुञ्जान्तःस्थापिता भुशुण्ड्यश्च समुल्लसन्ति। उञ्छस्य शिलस्य समिदाहरणस्येङ्गुदीपर्यन्वेषणस्य भोजपत्रपरिमार्गणस्य कुसुमावचयनस्य तीर्थाटनस्य सत्सङ्गस्य च व्याजेन केचन जटिनः परे मुण्डिन इतरे काषायिणोऽन्ये मौनिनोऽपरे ब्रह्मचारिणश्च बहवो बटवश्चराः सञ्चरन्ति। विजयपुरादुड्डीयात्रागच्छन्त्या मक्षिकाया अप्यन्तस्थितं वयं विद्मः। किं नाम यवनहतकानाम्।

**शिववीरः**—साधु साधु कथं न स्यादेवम्। भारतवर्षीया यूयम्। तत्रापि महोच्चकुलजाताः। अस्ति चेदं भारतं वर्षं। भवति च स्वाभाविक एवानुरागः सर्वस्यापि स्वदेशे। पवित्रतमश्च यौष्माकीणः सनातनो धर्मः। तमेते जाल्माः समूलमुच्छिन्दन्ति। अस्ति च प्राणा यान्तु न च धर्म इत्यार्याणां दृढः सिद्धान्तः। महान्तो हि धर्मस्य कृते लुण्ठयन्ते पात्यन्ते हन्यन्ते न च धर्मं त्यजन्ति। किन्तु धर्मस्य रक्षायै सर्वसुखान्यपि त्यक्त्वा निशीथेष्वपि वर्षास्वपि ग्रीष्मघर्मेष्वपि महारण्येष्वपि कन्दरिकन्दरेष्वपि व्यालवृन्देष्वपि सिंहसङ्घेष्वपि वारणवारेष्वपि चन्द्रहासचमत्कारेष्वपि च निर्भया विचरन्ति। तद् धन्याः स्थ यूयं वस्तुत आर्यवंशीया वस्तुतश्च भारतवर्षीयाः। अथ कथ्यतां कोऽपि विशेषोऽवगतो वापजलखानस्य विषये।

**गौरसिंहः**—अवगतस्तत्पत्रमेव दर्शयामि।

(इति व्यावृत्योष्णीषसन्धौ स्थापितं कन्यापहारकयवनयुवकमृतशरीर-वस्त्रान्तःप्राप्तं पत्रं बहिश्चकार।)

सर्वे च विजयपुराधीशमुद्रामवलोक्य किमेतत् कस्मादेतदिति जिज्ञासमानाः सोत्कण्ठा वितस्थिरे। गौरसिंहस्तु शिववीरस्यापि तत्प्राप्तिशुश्रूषामवगत्य संक्षिप्य सर्वं वृत्तान्तमवोचत्। ततस्तु दर्श्यतां प्रसार्यतां पठ्यतां कथ्यतां किमिति पृच्छति शिववीरे गौरसिंहो व्याजहार। भगवन्सर्पाकारै-

रक्षरैः पारस्यभाषायां लिखितं पत्रमेतदस्ति एतस्य सारांशोऽयमस्ति। विजयपुराधीशः स्वप्रेषितमपजलखानं सेनापतिं सम्बोध्य लिखति यत्—वीरवर महाराष्ट्रराजेन सह योद्धुं प्रस्थितोऽसीति मास्म भूत्कश्चनान्तरायस्तव विजये। शिवं युद्धे जेष्यसि चेत्पद्भ्यां सिंहं जितवानसीति मंस्ये किन्तु सिंहहननापेक्षया जीवतः सिंहस्य वशीकार एवाधिकं प्रशस्यः। तद्यदि जीवन्तं शिवमानयेस्तद् वीरपुङ्गवोपाधिदानसहकारेण तव महतीं पदवृद्धिं कुर्याम्। गोपीनाथपण्डितोऽपि मया तव निकटे प्रस्थापितोऽस्ति स मम तात्पर्यं तव निकटे कथयिष्यति इति।

इत्याकर्णयत एव शिववीरस्यारुणकौशेयजालनिबद्धौ मीनाविव नयने सञ्जाते मुखं च बालभास्करबिम्बविडम्बनमालम्बे अधरश्च धीरताधुरमधरीकृतवान्। अथ स दक्षिणकरपल्लवेन श्मश्रुं परामृशन्नाकाशे दृष्टिं बध्वा अरेरे विजयपुरकलङ्क स्वयमेव जीवन् शिवस्तव राजधानीमाक्रम्य वीरपुङ्गवोपाधिसहकारेण तव महतीं पदवृद्धिं करिष्यति तत्किं प्रेषयसि मृत्योः क्रीडनकानेतान्कदर्यहतकान् इति साम्रेडमवोचत्। अपृच्छच्च ज्ञायते वा कश्चिद्वृत्तान्तो गोपीनाथपण्डितस्येति।

यावद्वीरसिंहः किमपि विवक्षति तावत्प्रतीहारः प्रविश्य विजयतां महाराज इति त्रिर्व्याहृत्य करौ सम्पुटीकृत्य शिरो नमयित्वा कथितवान् भगवन्दुर्गद्वारि कश्चन गोपीनाथनामा पण्डितः श्रीमन्तं दिदृक्षुरुपतिष्ठते। नायं समयः प्रभूणां दर्शनस्य पुनरागम्यतामिति बहुशः कथ्यमानोऽपि किंचनात्यावश्यकं कार्यमिति प्रतिजानाति। तदत्र प्रभुचरणा एव प्रमाणमिति।

तदवगत्य सोऽयं गोपीनाथः सोऽयं गोपीनाथ इति साम्रेडं सतर्कं सोत्साहं च व्याहृतवत्सु निखिलेषु शिववीरेण निजबाल्यप्रियो मालश्रीकनामा संबोध्य कथितो यद् गम्यतां दुर्गान्तरेव महावीरमन्दिरे तस्मै वासस्थानं दीयतां भोज्यपर्यङ्कादिसुखदसामग्रीजातेन च सत्क्रियतां ततोऽहमपि साक्षात्करिष्यामीति।

ततो बाढमित्युक्त्वा प्रयाते मालश्रीके महाराज आज्ञा चेदहमद्यैव अपजलज्ञानं कथमपि साक्षात्कृत्य तस्याखिलं व्यवसितं विज्ञाय प्रभुचरणेषु विनिवेदयामि। नाधुना मम क्षान्तिः शान्तिश्च यतः सन्यासिवेषोऽहं समागच्छन् द्वयोर्यवनभटयोर्वार्तयावागच्छं यच्छ्व एव युयुत्सन्त इति।

ततो वीर कुशलोऽसि सर्वं करिष्यसि जाने तव चातुरीं तद्यथेच्छं गच्छ नाहं व्याहन्मि तवोत्साहं नीतिमार्गान्वेत्सि। किन्तु म्लेच्छा एतेऽत्यन्तं निर्दया अतिकदर्या अतिकूटनीतयश्च सन्ति। एतैः सह परमसावधानतया व्यवहरणीयमिति कथयित्वा शिववीरस्तं विससर्ज।

गौरसिंहस्तु त्रिः प्रणम्य उत्थाय निवृत्य निर्गत्यावतीर्य सपदि तस्या एव नितम्बतरुतलवेदिकायाः समीपे आगत्य स्वसहचरं कुमारमिङ्गितेनाहूय कस्मिंश्चित्स्वसङ्केतितभवने प्रविश्य आत्मनः कुमारस्यापि च केशान्प्रसाधनिकया प्रसाध्य मुखमार्द्रपटेन प्रोञ्छ्य ललाटे सिन्दूरबिंदुतिलकं विरचय्य उष्णीषमपहाय शिरसि सूचिस्यूतां सौवर्णकुसुमलतादिचित्रविचित्रितामुष्णीषिकां सन्धार्य शरीरे हरितकौशेयकञ्चुकिकामायोज्य पादयोः *शोणपट्टनिर्मितमधोवसनमाकलय्य दिल्लीनिर्मिते महार्हे † उपानहौ च धारयित्वा लघीयसीं ‡तानपूरिकामेकां सह नेतुं सहचरहस्ते समर्प्य §गुप्तच्छुरिकामेकां दन्तावलदन्तमुष्टिकां यष्टिकां मुष्ट्या मुष्टौ गृहीत्वा पटवासैर्दिगन्तं दन्तुरयन्करस्थपटखण्डेन च मुहुर्मुहुराननं प्रोञ्छन्गायकवेषेणापजलखानशिबिराभिमुखं प्रतस्थे।

---

* अधोवसनं पायजमा इति प्रसिद्धम्।

† ईदूदेद्द्विवचनं प्रगृह्यमिति न स्वरसन्धिः।

‡ तानान्पूरयतीति तानपूरिका। वाद्ययन्त्रविशेषः।

§ गुप्तच्छुरिका अष्टिरथापि गुप्तिरिति प्रसिद्धा।

अथ तौ त्वरितं गच्छन्तौ सपदि एव परःशतश्वेतपटकुटीरैः शारदमेघमण्डलायितं दीपमालाविहितबहुलचाकचक्यमपजलखानाशिबिरं दूरत एव पश्यन्तौ यावत्समीपमागच्छतस्तावत्कश्चित्कोकनदच्छविवस्त्रखण्डवेष्टितमूर्धा कटिपर्यन्तसुनद्धश्यामाङ्गरक्षिकः कर्बुराधोवसनः शोणश्मश्रुर्विजयपुराधीशनामाङ्कितवर्तुलपित्तलपट्टिकापरिकलितवामवक्षःस्थलः स्कन्धे भुशुण्डीं निधायेतस्ततो गतागतं कुर्वन्सावष्टम्भमुर्दूभाषया§ उवाच कोऽयं कोऽयमिति ततो गौरसिंहेनापि गायकोऽहं श्रीमन्तं दिदृक्ष इति समादरं व्याख्यायि । ततो गम्यतामन्येपि गायका वादकाश्च सम्प्रत्येव गताः सन्तीति कथयति प्रहरिणि घृतेन स्नातु भवद्रसनेति व्याहरन् शिबिरमण्डलं प्रविवेश ।

तत्र च क्वचित्खट्वासु पर्यङ्केषु च उपविष्टान् सगडगडाशब्दं ¶ताम्रकधूममाकृष्य मुखात्कालसर्पानिव श्यामलनिःश्वासानुद्गिरतः स्वहृदयकालिमानमिव प्रकटयतः स्वपूर्वपूरुषोपार्जितपुण्यलोकानिव फूत्कारैरग्निसात्कुर्वतो मरणोत्तरमतिदुर्लभं मुखाग्निसंयोगं जीवनदशायामेवाकलयतः प्राप्ताधिकारकलिताखर्वगर्वान् क्वचित् हरिद्रा हरिद्रा लशुनं लशुनं मरिचं मरिचं चुक्रं चुक्रं वितुन्नकं वितुन्नकं शृङ्गवेरं शृङ्गवेरं रामठं रामठं मत्स्यण्डी मत्स्यण्डी मत्स्या मत्स्याः कुक्कुटाण्डं कुक्कुटाण्डं पललं पललमिति बालानां निद्रा विद्रावयतः समीपसंस्थापितकुतूकुतुपकर्करीकण्डोलकटकटाहककम्बिकडम्बान् उग्रगन्धानि मांसानि शूलाकुर्वतो नखम्पचा यवागूः स्थालिकासु प्रसारयतो हिङ्गुगन्धीनि तेमनानि तिन्तिडीरसैर्मिश्रयतो मध्ये मध्ये समागच्छतस्ताम्रचूडान्व्यजनताडनैः

---

§ यवनभाषया सेना उर्दू इत्युच्यते । यवनसैनिकानां भाषा उर्दूभाषा । कस्मिंश्चित्समये शुद्धां भारतभाषां भाषितुमसमर्था यवनसैनिकाः स्वभाषया संमिश्र्य ब्रुवते स्म सैव भाषाऽधुना भारते व्याप्ता ।

¶ ताम्रकं तमाखूरिति प्रसिद्धम् ।

चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ॥

## स्वर्गतस्य दरभङ्गाधिराजमहाराजस्य जी. सी. आय. इ. इ. इत्युपाधिमण्डितस्य लक्ष्मीश्वरसिंहबहादुरस्य कृते विलापः ॥

हा किमिदमनभ्रादप्यभ्रान्निपतितमद्य महाघोरं वज्रम्। येनैकेनैव पतता नैको न द्वौ न वा बहवः परंतु सर्व एवादह्यन्त शोकार्चिषा लोकाः।

हन्त केनापहृतोऽकस्मादस्माकं सर्वेषां साधारणश्चिन्तामणिदेवो लक्ष्मीश्वरः। केन निपातितो भूभूषणः सङ्कल्पितफलप्रदः समाश्रिततापापहशीतलच्छायः कल्पपादपो दरभङ्गाधिराजः। केनाच्छिन्नोऽर्थिनां महानिधिर्दयादाक्षिण्यादिनानागुणनिधिर्महाराजोमिथिलाराजः। केन ग्रस्तोऽमृतशीतलप्रकृतिः कीर्तिज्योत्स्नः कलापूर्णो द्विजराजराजः। यस्य विरहात्सतोरपि चन्द्रसूर्ययोरन्धकारितमिवाद्य पश्यामो जगत्। तथाहि निरवलम्बन इव संवृत्तो गुणप्रकाशः। निर्वाणप्रायः शास्त्रार्थदीपः। स्खलितपदेव कविसूक्तिः। विधवायते गन्धर्वविद्या। उन्नतिनिराशा इव सर्वविद्याः। किं बहुना देवानपि सम्प्रति दुःस्थितानिव जानीमः। स ह्येको देवः सर्वेषामासीदेकमाशानिबन्धनम्।

का कथा मानुषीणां दैवीनामप्यापदामासीत्सप्रतिहर्ता। अनतिचिरमतीते हि दुर्भिक्षे अष्टौ लक्षाणि रजतानां प्रभूतांश्च सोपकरणान्पर्वतप्रायानन्नराशीन्वितरन्नरक्षत्स दुर्भिक्षरक्षोमुखादखिलाः प्रजाः।

नूनमतिमानुषांस्तांस्तान्गुणानवलोक्य स्वर्गाधिपत्यं गाणपत्यं वा प्रापयितुं तमाचकर्ष भगवान्महादेवः।

तथापि वयं नैकान्ततो निराशाः। आशास्महे हि तदनुजस्य महाराजस्य श्रीमतो रामेश्वरसिंहबहादुरस्य तत्पदमधिरूढस्य तांस्तान् गुणानवलोकयितुमिति।

कीदृग्गुणः स आसीदिति विज्ञापयितुं तस्मै दत्तपूर्वमभिनन्दनपत्रमिदं प्रकाश्यते ।

स्वस्ति

श्रील श्रीलक्ष्मीश्वरसिंहबहादुरस्य जी. सी. आय्. इ. इ. इत्युपाधि-भूषितस्य दरभङ्गाधिराजमहाराजस्य क्षत्रियवंशावतंसस्य गुणिगायनपण्डि-तजनप्रतिपालकस्य यशोमयहीरकिरीटमण्डलमण्डितसमुच्छ्रितशिरसो गुण-हारालङ्कारभासुर हृदयस्य महोन्नताय महिम्ने सबहुमानमाशीःपूर्वकं प्रशस्तिरियमुपह्रियते—श्रीमहेशचन्द्रशर्मणा ।

तत्राशिषः

पाद्यैर्गाङ्गजलैः स्वयं श्लथजटाजूटाच्च्युतैः क्षालिता
भालेन्दोर्मधुपर्किताभिरमृतज्योत्स्नाभिराप्यायिता ।*
दीपेनापि तृतीयनेत्रशिखिना नीराजिताङ्घ्रिद्वयी
मानं मोचयतेश्वरेण नमता चण्ड्याः प्रसन्नास्तु वः ॥ १॥
सभ्रूभङ्गं विवर्त्याननमपवचनं बिभ्रती मानभाणं ¶
मानं विज्ञाय पत्युस्तदुपशमकृते पादमूले नतस्य ।
मूर्धारोहात्सगर्वां कलकलमुखरां वामपादेन हत्वा
जह्नोः कन्यां सपत्नीं दिशतु जयवती पार्वती मङ्गलं वः ॥२
मानध्वंसाय कान्तं चरणनिपतितं हस्तिभूतं विभाव्य
स्कन्धं तस्याधिरुह्य त्वरयति कुतकाद्याहि याहीति पुत्रे ।
मानिन्या दौर्मनस्यान्नयनजलमुचोऽप्याशु हासप्रकाशो
वर्षासम्भिन्नरौद्रस्फुरणमभिनयन्पातु वः स्कन्दमातुः ॥ ३

* मधुपर्कः कृता इति मधुपर्किताः । अमृतं मधुकृतं ज्योत्स्नाश्च दधिकृताः । ताभिरमृतेन ज्योत्स्नाभिश्च आप्यायिता तर्पिता ।

¶ मानभाणं भाणं धूर्तचरितं मानाभासमित्यर्थः । मानस्यावस्थाऽनुकरणम् ।

३ स्कन्दस्य मातुः पार्वत्या मानध्वंसाय कोपभङ्गार्थं तस्याश्चरणयोर्निपतितं प्रणत मित्यर्थः कान्तं महादेवं हस्तिभूतं अहस्तिनमपि हस्तिनं भूतं निश्चित्य [ अयं मम क्रीडार्थं हस्ती भूत इति मत्वेत्यर्थः ] पुत्रे स्कन्दनाम्नि धृष्टे तनये शिशाविति भावः तस्य महादेवस्य स्कन्धं आरुह्य याहि याहि गच्छ गच्छ इत्युक्त्वा त्वरयति पादाभ्यां

दानादि कीर्तयः।

ब्रह्मेव भवतो दानमनन्तं विश्वतोमुखम्।
अद्वैतं परमानन्दमवाङ्मनसगोचरः॥ ४
अष्टौ लक्षाणि भूपानामष्टानामपि सम्पदः
नालं ते स्थूललक्ष्यस्य सकृद्दानाय तान्यपि॥ ५
स्रस्तोगङ्गाप्रवाहः शिशिरयति धरामीशमौलेः किमेष
स्वर्गात्पीयूषधारा क्षरति किमथवा स्वार्गिणां पीतशेषः।
किंवा श्च्योतन्ति कल्पद्रुमकुसुमरसास्तुण्डतः षट्पदाना-
मित्थं नानाविकल्पान्विदधति कवयः स्वादयन्तो यशस्ते॥
हन्त गङ्गाजले पङ्कः कलङ्कश्चन्द्रमण्डले।
मुक्ताफलेष्वपि च्छिद्रं राजन्कीर्तेस्तुला कुते॥ ७

---

(पूर्वपृष्ठादनुवृत्तम्।)

चालयति सति मानिन्या ईर्ष्याकोपवत्या अत एव दौर्मनस्यान्मनोदुःखात् अश्रु मुञ्चन्त्या अपि आशु सद्यो हासप्रकाशो हास्यनिर्गमो वर्षासम्भिन्नरौद्रस्फुरणं वृष्टिकालीनातपस्य प्रकाशम् अभिनयन्नवस्थयाअनुकुर्वन् वो युष्मान्पातु रक्षतु। पिता हि कदाचित्पुत्रस्य क्रीडार्थं हस्ताव नम्रः सन्पुत्रं स्कन्धे करोतीति लोके दृश्यते। वर्षासम्भिन्नेति अश्रुणि वर्षासादृश्यं हासे च आतपसादृश्यं बिम्बानुबिम्बभावेन बोध्यम्। हास आनन्दस्य लक्षणं तेन आनन्दिता स्कन्दमाता पातु इति भावो गम्यते।

४ ब्रह्मेवेति। दानपक्षे अनन्तं समाप्तिरहितं विश्वतोमुखं सर्वद्वारं अद्वैतं तुल्यद्वितीयरहितं परमानन्दं पवित्रानन्दजनकम्। अवाङ्मनसगोचरः वाचा वर्णयितुमशक्यं मनसा च वितर्कयितुमशक्यम्। ब्रह्मपक्षेतु अनन्तमविनाशि विश्वतोमुखं सर्वव्यापकम् अद्वैतं द्वितीयशून्यं परमानन्दं नित्यानन्दस्वरूपं अवाङ्मनसगोचरः वाङ्मनसयोः पन्थानमतीतमिति।

५ अष्टाविति। अष्टौ लक्षाणि रजतमुद्राः अष्टानामपि राज्ञां सम्पदो भवन्ति लक्षपतिरपि राजेत्युच्यत इति भावः। तान्यपि अष्टलक्षाण्यपि रजतानि स्थूललक्ष्यस्य बहुप्रदस्य तव सकृद्दानाय अलं पर्याप्तानि न भवन्ति। अतीते तृतीयवत्सरे दुर्भिक्षपीडितानां प्रजानां रक्षार्थं दरभङ्गाधिराजः अष्टलक्षाणि दत्त्वाऽपि अतिरिक्तमपि दातुं स्वीकृतवानित्यत इयं वर्णना।

७ हन्तेति। पङ्कः कर्दमः पापं च। कलङ्को मलिनोऽङ्को लोकनिन्दा च। छिद्रं अवकाशो दूषणं च।

# सप्रमोदमङ्गीकारः ।

लष्करग्वाल्हेरतः पण्डितप्रवरश्रीमद्रघुपतिशास्त्रिभिः प्रेरितं हैमन्तो वसन्तोत्सवः सटीकं गोपीगीतमिन्दुविनोदावहाऽगाधमाधवश्चेति पुस्तकचतुष्टयं श्रेष्ठिवरेण श्रीगङ्गाविष्णुखेमराजमहाशयेन कल्याणतः प्रेषितं हिन्दीभाषाया द्वितीयपुस्तकं पण्डितेन लक्ष्मीनारायणशिवप्रसादेन प्रहितं शाखोच्चारपत्रावलिर्जयनगराष्टकं लघुपाराशरी १८२१ शाकीयं बृहत्पञ्चाङ्गं पट्टीपहाडे पुस्तकं चेति पुस्तकपञ्चकं सानन्दं धन्यवादप्रदानपुरःसरं सानुरागं च स्वीक्रियते । यथावसरं चैतानि समालोचयिष्यामः ।

---

# समालोचना ।

श्रीगुरुतन्त्रम्--तन्त्रग्रन्थोऽयम् । कैलासशिखरासीनः प्रणयिन्या श्रीपार्वतीदेव्या कृतप्रश्नो भगवान्महादेवो गुह्याद्गुह्यतरं परमोपयुक्तं तन्त्रमेतत्कथयामास । अत्र गुरुविषये शिष्यस्येतिकर्तव्यता ततो जायमानं फलं च सम्यगनुस्पष्टं च प्रतिपादितम् । शक्यमेतेन गुरोर्माहात्म्यमवबोद्धुं श्रद्धालुभिः । भूयांसः किल संस्कृतभाषानभिज्ञाः पुमांसः प्रबन्धानेवं विधाञ्जिज्ञासन्ते । तेषां चाभिलाषं पूरयितुं श्रीबलदेवमिश्रमहाशयेनानुवादितोऽयं ग्रन्थः । सुमनोहरा किलानुवादनपद्धतिः पण्डितस्य बलदेवमिश्रस्य । अतो नैतत्पृथग्वक्तुमावश्यकं यत्सम्यगयं सम्पन्नोऽनुवाद इति । मुद्रणसौन्दर्यमप्यस्य हृदयङ्गमम् । सर्वथा सङ्ग्राह्यमेतदिति शिवम्

पञ्चाङ्गम्--जयपुरनगरनिवासिना श्रीजीवनरामतनयेन पण्डितेन श्रीमनुशर्मणा निर्मितमेतदतिमनोहरमत्युपयुक्तं बृहत्तमं च पञ्चाङ्गम् ।

एतच्च पण्डितमन्नालालशिवनन्दपुस्तकालये जयपुरनगरे ( राजपुताना ) लब्धुं शक्यते। मूल्यं तु नावगतम्। अत्र च इंग्रेजीमासदिवसविशेषेषु सनातनधर्मीयाणां कर्तव्यानि घातचक्रं राशिसंज्ञाचक्रमत्युपयुक्तं गङ्गा-माहात्म्यापगमनविचारणं नक्षत्राणामुदयखमध्यास्तादिपत्रं वर्षमारणी हृद्दा-चक्रं होराद्रेष्काणादिचक्रं रेखाचक्रं पञ्चधामैत्रीचक्रं गुणपर्यवेक्षणचक्रं नक्षत्रदोहदादि शलाकाचक्राणि वर्षफलं मासदशा सप्तादिग्रहयोगशान्तिः सूर्यादिग्रहाणां मण्डलजपदानादिकं सामुद्रिकं नैकविधमुहूर्ताः लग्नसाधनपत्रं दशान्तर्दशोपदशादिपत्राणीत्याद्यत्युपयुक्ता विषया विलसन्ति। नूनमेतदे-कमप्यवश्यं सङ्ग्राह्यम्।

**भक्तिशतकम्**—बुद्धागमग्रन्थोऽयम्। प्रसादयति खलु मानसं प्रसा-दगुण एतस्य। अस्मत्सुहृदा बुद्धागमोपदेशकेन श्रीशीलस्कन्धस्थविरेण नाम लङ्कानिवासिना पण्डितेन विरचितया व्याख्यया समुद्भासित आमूला-त्पठितोऽयं प्रबन्धोऽस्माभिः। काव्यमेतदितिधिया पठितमेतदानन्दयतीति यद्यपि सत्यं तथाप्यस्य ब्राह्मणपण्डितेन [?] केनापि प्रणीतत्वमवलोक्य विस्मयते चेतो विषीदति च। सर्वैरेव हि स्वस्वधर्मः समाश्रयणीयस्तेन बौद्धानामेव युक्तस्तद्धर्मो धर्मविदा ब्राह्मणेन सेवित इत्यहो पाण्डित्यमे-तस्य। एतदेव चेत्कश्चिद्बुद्धभक्तो बौद्धजातीय एव प्राणेष्यत्तदा कमप्य-मन्दमानन्दं प्राप्स्यदन्तरमस्माकम्। तैस्तैर्हि सेवमानः स्वीयो धर्म एकान्ततः प्रीणयति नश्चेतः। अत एवास्य व्याख्यात्रे मित्राय श्रीशीलस्कन्धस्थवि-राय सहस्रशो धन्यवादाः प्रदीयन्ते। प्रशंसामश्चास्य संस्कृतभाषा-प्रावीण्यम्।

भूमिकायां भक्तिशतकप्रणेतुर्नानाशास्त्रपारङ्गमत्वे समुपवर्णितेऽपि नानेनास्मदीयो धर्मः सम्यग्विज्ञात इति प्रतीयते। प्रत्याययति ह्येवं पद्यमिदं यथा—

ब्रह्माविद्याभिभूतो दुरभिगमममहामायया लिङ्गितोऽसौ
विष्णू रागातिरेकान्निजवपुषि धृता पार्वतीशङ्करेण ।
वीताविद्यो विमायो जगति सभगवान् वीतरागो मुनीन्द्रः
कः सेव्यो बुद्धिमद्भिर्वदत वदत मे भ्रातरस्तेषु मुक्त्यै ॥ ३ ॥

ब्रह्मादीनामविद्याद्याभिभूतत्वं यद्यपि प्रतिपक्षपरितोषाय स्वीकृतं तथापि कुत्र वा तत्सेवनान्मोक्ष इत्यभिधीयते वैदिकग्रन्थेषु येन तत्परित्यागपूर्वकं बुद्धः सेव्येत । किं च व्यतिरेकेण प्रतिपाद्यमानेऽत्रब्रह्मादिभ्यो बुद्धस्याधिक्ये स्वीक्रियमाणे यत्किञ्चिदवच्छेदेनापि बुद्धब्रह्मादीनां सादृश्यमवश्यमभ्युपेतव्यम् अन्यथाऽव्यतिरेकासङ्गतेः । तथाच ब्रह्मादीनामिव बुद्धस्यापि सान्तत्वं मुक्तौ साक्षादनुयुक्तत्वं च दुःपरिहरमेवेत्यलमप्रकृतप्रसङ्गेन ।

दृश्यन्ते खल्वत्र केचित्काव्यदोषाः । यथा––षष्टितमे पद्ये कविवरमहमस्मि पण्डितस्ते––नुदति हि तमसन्ततिंप्रवृत्ताम् । अत्र कविवरमिति नपुंसकत्वं तमःशब्दस्य चादन्तत्वमप्रसिद्धतमम् । एवं पञ्चसप्ततितमे-कुमतिमुदस्य भवेभवेर्यभक्तिम् । इत्यत्र एकारात्परमाकारस्यपूर्वरूपं विधाय आर्यभक्तिमिति पदच्छेदो व्याकरणविरुद्धः । एवं सप्तसप्ततितमे यततेरात्मनेपदित्वम् । युक्तिसमुपन्यासस्तु मनोरमोपि ब्राह्मणेनास्थानेकृत इति न सम्यक्समुल्लसति ।

व्याख्या त्वस्य सर्वाङ्गमनोरमा किन्तु क्वचिद्वैदिकधर्मप्रतिपाद्यविषयेऽत्रास्यां स्खलितमवलोक्यते यथा ब्रह्माविद्याभिभूत इत्यत्र पद्ये ब्रह्मशब्दस्य पुंस्त्वेऽपि अद्वैतब्रह्मपरत्वं व्याख्यायत इति ।

अत्र च भक्तिरसः सर्वतः परिप्लुत इव प्रत्यक्षीभवति माधुर्यं च पदे पदेऽनुभूयते तथापि बौद्धेतरविरचितत्वमेव शोभां हापयति ।

बौद्धैस्त्वेतदवश्यं सङ्ग्राह्यम् । तेषु चैतस्य व्याख्याप्रणयनेन प्रकाशनेन च बहूपकृतं श्रीशीलस्कन्धस्थविरेणेति भूयोभूयः प्रशस्यतेऽयं महाभागः ।

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

॥ श्रीगणेशाय नमः॥

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

॥ मासावतरणिका ॥

यत्नैवाकलयाम्बभूवुरनिशं धर्मं प्रियं प्राणतो-
म्लेच्छाचारविधानसक्तमनसस्तत्राधुना ब्राह्मणाः ।
इत्यालोच्य विपर्ययप्रतिगतं दूनोऽखिलं भारतं
मासः फाल्गुनिको दहत्युपगतो होलीं वपुर्वह्निना॥१

---

उद्भटश्लोकाः

पयसा कमलं कमलेन पयः
पयसा कमलेन च भाति सरः ।
रविना किरणः किरणेन रवी
रविना किरणेन च भाति नभः ॥
मणिना वलयं वलयेन मणि-
र्मणिना वलयेन च भाति नरः ।
कविना च विभुर्विभुना च कविः
कविना विभुना च विभाति सभा ॥

अये चेतः श्वेतारुणमणिमये क्वापि निलये
सुखं सुप्त्वा कालं गमयसि कथं जागृहि पशो ।
अयं त्वामाकर्ष्टुं प्रसरति कृतान्तः सह भटै-
रदूरे श्रूयन्ते महिषगलघण्टा घनरवाः ॥

# पण्डितराजः श्रीजगन्नाथः ।

( पूर्वतोऽनुवृत्तः )

अथ दशमसंख्यायां विनिर्दिष्टायाः किंवदन्त्याः सत्यत्वासत्यत्वविचारं संक्षेपत एव विधायाख्यायिकान्तरे प्रवर्तिष्यामहे ।

विदितप्राय एव विबुधानां जगन्नाथस्यालौकिकाहङ्कारभूयिष्ठः स्वभावः। यश्च क्षणमप्यन्यकृतामवहेलनां व्यञ्जनामात्रेणाप्यवबुद्धां सोढुं न क्षमते कथं नाम स नानाविधापमानकन्दायितं सेवकत्वमङ्गीकुर्यात् । किं च प्रयोजनं जगन्नाथसदृशस्य पण्डितप्रकाण्डस्यात्मनो वैदुष्यमप्रकाशयितुम् । यस्य च तन्त्रीरणितसमधिकमनोहरेण वचनमाधुर्येण वशीकृतमानसा वीणागुणरणनमपि विरमयति भगवती भारती कथं नाम स एव पण्डितराज आत्मनो वचनवैभवेन लोकान्प्रीणयितुमशक्नुवानः समनुभवेद्दारिद्र्यम्। यदि च केषांचिद्वदनपङ्कजमलङ्कुर्वाणा किंवदन्तीयं प्रमाणतामवगाहेत तदा का गतिः कर्नाटकभूपालसमीपे कियन्ति दिनान्यतिवाह्य तत्र वैरस्यमापन्ने चेतसि जयपुरमुपागत्य पाठशालां निर्माय च शिष्यानध्यापयता जगन्नाथेन दिल्लीवल्लभस्य वाल्लभ्यमासादितमिति केषुचित्प्रबन्धेषूपलभ्यमानस्येतिवृत्तस्य । तन्मन्ये न दशमसंख्यायामुल्लिखिता प्रमाणमाख्यायिकेति । एवंविधा हि भूयस्यः प्रवर्तन्ते निर्मूलाः कथास्तेषु तेषु प्राचीनविद्वत्सु । इति ।

अथापरा लौकिकी गाथा । दिल्लीवल्लभपार्श्वमण्डलमलङ्कुर्वाणे ललितमधुरप्रसन्नपदविन्यासहृदयङ्गमैः पद्यैरावर्जितदिल्लीश्वरमानसे पण्डितराजे कदाचित्कश्चिन्मण्डलेश्वरस्तत्रोपाजगाम । आकर्णितवांश्च पण्डितराजस्यालौकिकं पाण्डित्यमसामान्यं कवित्वं च । तत आत्मनःसविध एवंविधः पण्डितो निकाममावश्यक इत्याकलय्य कस्मिंश्चिद्दिने पण्डितराजं सादरं सानु-

रागं च समाहूय विज्ञापयामास । पण्डितोत्तंस नूनमिदानीमासादितं मया जन्मनः साफल्यं यदस्मि सुकृतैकाधिगम्यस्य श्रीमतः कृपारसपरिस्यंदिनोऽपाङ्गपातस्य पात्रतां प्राप्तः । महात्मन् एवमेव सन्ततं श्रीमतः सहवासेन पवित्रीकर्तुमिच्छाम्यात्मानम् । विद्वन्नूनं भवदीयमेतत्सर्वं यदस्ति मदीयं नाम । तत्संमान्यतामयं प्रणयः कृपया । आर्यकुलसंभवस्य मम सहवासान्न किल गरीयस्त्वमाकलनीयं म्लेच्छस्य पार्श्वचारित्वे महाभागेन । बलीयसा हि सन्तमसेन व्याकुलीकृतचक्षुषः प्रातिपदिकेन कलामात्रोदितेनापि विधुना समुल्लसितां बहुमन्यन्ते शर्वरीं लोकाः । तत्प्रार्थये सनिर्बन्धं समनुगृह्यतामयं परिचयाभिलाषुको जनो मनोरथपरिपूरणेनेति । तदाकर्ण्य मनाग्विहस्य चाकारव्यञ्जितानादरो जगन्नाथः पपाठ पद्यमिदम्—

**दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान्पूरयितुं समर्थः ।**
**अन्यैर्नृपालैः परिदीयमानं शाकाय वा स्याल्लवणाय वा स्यात्** ॥ इति ॥

भवतु वा कथाया एतस्या अवितथत्वं सत्यत्वेऽसत्यत्वेऽपि वा तुल्ययोगक्षेमत्वात् । किन्तु जगन्नाथविरचिते कस्मिंश्चिदपि प्रबन्धे नैव विद्यते पद्यमिदम् । यदि वार्तेयं सत्यभावमवगाहेत तदा तु दिल्लीश्वरपार्श्वावस्थायित्वमेव जगन्नाथस्य सिध्येत् । तच्च प्रमाणान्तरैः साधितमेवास्माभिः ।

श्रीमतो जगन्नाथस्य वैदुष्यं देवीप्रसादसंसिद्धमित्यपि श्रूयते । तथाहि । पुरा गुरोः सकाशाद्विविधानि शास्त्राण्यधीतुमुपक्रममाणो जगन्नाथः स्वस्मादात्मनः सतीर्थ्यानामेव प्रतिभायाः समधिकमौज्ज्वल्यमवलोक्य मनस्यमन्देन विषादेनाक्रान्तः काननं गत्वा भगवतीं महाकालीमर्चयामास । तेपे चानेकविधं तपः । ततः प्रसन्ना भगवती साक्षाद्भूय जगन्नाथमप्राक्षीत् । वत्स सन्तुष्टास्मि तवानेनानन्यसुलभेन तपश्चरणेन । तत्कथ्यतामात्मनोऽभीष्टमिति । सोऽपि तदात्व एव समुद्भिद्यमानपुलकेन गात्रेण प्रमोदजलपरिप्लुतेन च नयनपङ्कजद्वन्द्वेनानन्दरसमयेन च चेतसा भगवतीं सहस्रशः प्रणम्याभ्यर्च्य च चन्दनादिभिरुपचारैरामूलादात्मनो वृत्तं कथयामास । ततो देवी पद्यमिदं व्याजहार—

आकुरुदेशं विचरेर्मा कुरु परवादिनिर्जये शङ्काम्।
स्वीकुरु वरमेकं मे व्याकुरु भो वत्स शास्त्राणि॥ इति॥

व्याहृत्य चेदमन्तर्दधे भगवती महाकाली। जगन्नाथस्तु तत्कालमेव समुद्दीप्तप्रज्ञः प्रत्यागत्य मन्दिरं सतीर्थ्यान् पराजिग्ये। ततः प्रभृति च निःशङ्कमेव प्रतिवादिनः पराबभूव व्याकरोच्च शास्त्राणीति। एषा तु वार्ता सत्यतामसत्यभावं वा भजत इत्यवबोद्धुं यद्यप्यशक्यं तथापि समनन्तरोदाहृतेन वार्ताद्वयेनैतस्या मनाग्विरोध इव प्रतिभाति। कथं हि नाम प्रसन्ना भगवती महाकाली नैर्धन्यजलधिकल्लोलपरम्पराघातव्याकुलितमानसं विदध्यादात्मनो भक्तम्। सा तु यद्यपि विद्यामेव प्रार्थिता जगन्नाथेन तथापि प्रसन्नायास्तस्याः कृपापाङ्गपातस्यानुषङ्गिकमेतत्फलं लक्ष्मीर्नाम। कश्च नाम प्रसादितमहाकालीकः संख्यावतामग्रणीरनायासोपनतामार्यवंश्यभूपालमैत्रीमवधीर्य वैदिकाचारविरोधिनीं म्लेच्छभूपतिसेवां बहुमन्येत। अतोऽस्यामपि वार्तायां बलवत्संशेते हृदयम्। इति।

दिल्लीवल्लभस्य हृदयमावर्जयति जगन्नाथे कदाचित् तत्रभवतश्चुलुकीकृतभाष्याब्धेर्महावैय्याकरणस्य श्रीनागेशभट्टस्य गुरुर्हरदीक्षितो व्याकरणे विवादं कामयमानो दिल्लीमागत्य जगन्नाथेन सह विवादं विधातुमिच्छामीति भूपतिमभाषिष्ट। सोप्येवमस्त्विवति प्रतिभाष्य तथाकर्तुं पण्डितराजमादिक्षत्। पण्डितराजस्तु विवादे हरदीक्षितो नैव पराजेतुं शक्यो विवादमन्तरा च नैव भूपालमनमः सन्तोष इत्युभयतः पाशया सन्दानित इव क्षणं विचार्य आं एवं करिष्यामीत्यस्फुटाक्षरं सावहेलमिव च प्रतिजगाद। अथ नियतायां विवादवेलायां समागतेषु पण्डितजनेषु समधिष्ठिते च नानाविधमणिमयूखजालेन शिखिकलापकान्तिमपहरदकाण्डेन्द्रधनुर्विभ्रमावहं सिंहासनं दिल्लीपतौ विजिगीषयाऽऽक्रान्तमनसि सोत्साहं सकौतुकं च जगन्नाथागमनमार्गसमर्पितेक्षणे समलङ्कुर्वति सभां हरदीक्षिते तन्त्रशास्त्रप्रवीणो जगन्नाथः प्रतिवादिव्यामोहोत्पादकैः कैश्चिदपि मन्त्रैः संस्कृतामङ्किकां शरीर

आमुच्य सभामण्डपं प्रविवेश । ततः पूर्वपक्षं कृतवति हरदीक्षिते जगन्नाथः सरभसं तमुपसृत्य सुदृढमालिलिङ्ग । तदानीमेव च तच्छरीरगतया तयाऽङ्गिकया संस्पृष्टगात्रो हरदीक्षितो व्यामोहमापन्नो जानन्नप्यजानन्निव संवृत्तः जगन्नाथश्च यथा यथा सिद्धान्तयति स्म तथा तथा तमनुससार । अन्ते च जगन्नाथ एव विजयी संजातः। ततः सदनं प्रत्यागतो विनिवृत्तमोहः श्रीहरदीक्षितो जगन्नाथस्य वचनानि तत्समये चात्मनस्तूष्णीम्भावं संस्मरन्नात्मनैवात्मानं विजहास । इति च जगन्नाथविषये वार्तान्तरं श्रूयते । न जानीमो महाकालीतो मा कुरु परवादिनिर्जये शङ्कामित्यधिगतवरस्य किमिव मन्त्रसंस्कृताया अङ्गिकाया आमोचनप्रयोजनं जगन्नाथस्येति । सर्वथा वार्तेयं सत्यभावमवगाहमाना उदाहृतपूर्वायामाख्यायिकायामश्रद्धां जनयेत् ।

अपरश्चायं जगन्नाथविषये लोकप्रवादः । परिणीतम्लेच्छवधूर्जगन्नाथो दिल्ल्यां तारुण्यमतिवाह्य शरच्चन्द्रिकासमानकान्तितामुपगते केशपाशे स्खलितप्रायायां रदनावलौ पलितपाण्डुरेषु गात्रेषु सहधर्मिणीद्वितीयः काशीमुपागत्य मन्दाकिनीतीरे निववास । एकदा तु प्रभातायामपि रजन्यां भार्यया साकं भागीरथीघट्टे स्वपन्तं जगन्नाथमवलोक्य श्रीमदप्पयदीक्षिताः प्रोचुः ।

**किं निःशङ्कं शेषे शेषे वयसि त्वमागते मृत्यौ ।** इति ।

तदाकर्ण्य प्रबुद्धे कोयं प्रवदतीति निरूपयति जगन्नाथे सञ्जातप्रत्यभिज्ञाः पुनः प्राहुः स्म—

**अथवा सुखं शयीथा निकटे जागर्ति जाह्नवी भवतः ।** इति ।

एवंविधाभिश्च वार्ताभिः संकुलप्रायमेतच्चरित्रं जगन्नाथस्य । एताश्च कथा यद्यपि न शक्यन्ते सर्वथा श्रद्धातुं तथापि शक्यमेताभिरवबोद्धुं जगन्नाथमाहात्म्यम् । अथैतत्कृतानां प्रबन्धानां वर्णनं चिकीर्ष्यमाणं संख्यान्तरे करिष्याम इति प्रतिजानीमः ।

( क्रमशः )

# साकारोपासना ।

इह जगति हीनदीनकृपणरुग्णा अमरनरपतियोगिनो वा सर्वेषामेव प्राणिनां लक्ष्यमेकं सुखमेव । यत् किमपि दैनिकव्यापारमाहारादिकं कुर्महे वयं तत्सुखलाभार्थमेव केवलमात्मनः । प्राणिनां तु मनो निरन्तरं सुखमाहर्तुमेवेतस्ततो बम्भ्रम्यते न निमेषमपि कालं स्थितिपदं लभते । धनं राज्यमैश्वर्यं पुत्रक्षेत्रकलत्रमित्राणि क्रमशः पर्णकुटीरादेकतलं द्वितलं त्रितलं च प्रासादं भूषणं वसनं यानमासनं किमधिकं देवत्वं लब्ध्वापि मनो न परितृप्यते प्राणिनां न वा लभते शान्तिम् । यथाऽतःपरमपि किमपि सुखं वर्तेतैव तदर्थमेवाहर्निशं घूर्णति लोलुपं मनः । यदुक्तं शान्तिशतके—

**निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो**
**लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेश्वरत्वं पुनः ।**
**चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्रह्मास्पदं वाञ्छति**
**ब्रह्मा विष्णुपदं पुनः पुनरहो आशावधिं को गतः** ॥ इति ॥

अत्रैकमेव कारणं निरूपये यदुपर्युक्तेषु धनादिषु नित्यस्याखण्डस्याकृत्रिमस्य सुखस्य कारणता न लक्ष्यते । प्रत्युत ते च विषयाः कृत्रिमस्य दुःखानुविद्धस्यैव सुखस्य हेतवो भवन्तीति । प्राणिनां तु मनो न दुःखसंसृष्टायानित्याय सुखाय स्पृहयदपि कृतार्थीभवति न वा शाम्यति । अत एव तच्छान्तिलाभेऽकृतकार्यं विषीदति ।

तदानीमेव मनः कृतार्थम्मन्यं वीतलिप्सं सुस्थं शान्तं च तिष्ठेत् यदा खलु तदखण्डानन्दकन्दमकृत्रिमं लप्स्यते सुखम् । तथाविधसुखलाभायैकमेवेश्वरसाक्षात्कार एव कारणमवाधारि पुराविद्भिरिति । तदन्यथा युगसहस्रचेष्टयापि तथाविधसुखलाभो नभःपुष्पमेव सम्पत्स्यते ।

नास्माकं सर्वसुखाकरस्य सुखमयस्येश्वरस्य साक्षात्कारोऽनायाससाध्यः यतोऽसौ क्षित्यप्तेजोमरुद्व्योमातिरिक्तस्तत्तद्गुणाच्च शब्दस्पर्शरूपरसगन्धाद्-तिरिक्तश्च। सुतरां श्रोत्रत्वगक्षिरसनघ्राणैरिन्द्रियैरत्यन्तमविषयः एवं परमाणुरिव प्रत्यक्षायोग्य ईश्वरः कदापि मनसापि न ग्रहीतुं शक्यते। एतदेव तलवकारोपनिषदि व्यक्तं।

**यन्मनसा नमते येनाहुर्मनो मतं।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥**

ईश्वरः सर्वभूतानां हृद्देशे तिष्ठतीति सिद्धान्तितं वचः। ईश्वरः सर्वकर्तेत्यत्रापि नास्त्यास्तिकानां वैमत्यम्। अधुनेश्वरः सर्वकर्तेत्यस्यैव शब्दस्य विचार्य तात्पर्यं प्रतिपाद्यते। तथाहि सर्वपदेन तावच्चतुर्दश भुवनानां चराचरं वस्तु कथ्यते। तत्र तावतां वस्तूनां मध्ये कल्पनाप्येकं वस्तु। एकस्मिन्वस्तुन्यन्यस्यारोपः कल्पनेति। यथा मुखे चन्द्रबुद्धिर्घटे प्रतिमाया-ञ्चेश्वरबुद्धिरिति। कल्पनापीश्वरेणैव सृष्टेति। यदि कल्पना तदितरेण सृष्टा तर्हि तस्य सर्वकर्तृत्वं व्याहन्यते। अपि चैवमपि समुचितं नैव वक्तुं। यदीश्वरेण निरर्थकं तत्सृज्यते यदि तथेति स्वीक्रियते तर्हि निष्फलसृष्टत्वेन स दोषैर्ग्रस्यते। अत एव कल्पनापि सफलेत्यवश्यमभ्युपेतव्यं कल्पनायाः साफल्यं बहुषु लक्ष्यते। तथाहीश्वरेण सृष्टस्य शब्दस्य नास्त्याकृतिर्न वा शुक्लादिरूपसंस्थितिरिति। किन्तु तथापि द्विविधस्यापि तस्य शब्दस्य ध्वनिवर्णात्मकस्य कल्पितेन ध्वनिवर्णाकृतिविशेषेण तावदेव कर्म निर्वाह्यते लोकैरिति। तथाहि ध्वन्यात्मकस्य 'तितिन्ता ना धिन्ता तिनि किटिगेदा धिनि' इत्यव्यक्तस्यापि गुरूपदिष्टेन कल्पितेन तत्तद्वर्णसंस्थानेन ध्वनिना चैकतालादि तालं समभ्यस्यन्ते लोकाः।

एवं वर्णात्मकस्यापि शब्दस्य 'क' 'ख' 'ग' 'घे'त्यादेः कल्पितेन वर्तुलकुण्डल्यादिरूपेण पत्रारूढेन देशान्तरस्थितानामपि बन्धूनां वार्ता-

दिकं निश्चयेनोपलभ्यते । सुतरां कल्पना निष्फलेति कल्पनया फलं न लभ्यत इति न जातु वक्तुमुचितं । अत एव कालमावहमानमारभ्य प्राचीनैरार्यैर्निराकारस्येश्वरस्य कल्पितेन पञ्चवक्त्रत्रिनेत्रादिशिवादिरूपेण निराकारस्य शब्दस्य कल्पितकादिरूपेण यथाविधि पूजितेन स्वस्वाभीष्टं लभ्यते। साकारस्त्वीश्वरो रूपादिमत्त्वात्साक्षात्कर्तुं भवितुञ्च नासम्भवीति ।

अपि चेश्वरो निराकार इति सर्ववादिसिद्धमिति । एवं सोऽपीश्वरो जीवात्मनो वयमिव भक्तिस्नेहप्रेमादिभिः साक्षात्कर्तव्य इति । एवं जीवात्मापि नास्मादीश्वराज्जलानलवदत्यन्तं भिन्नः किन्त्वविद्यानुविद्धश्चित्प्रतिबिम्बः क्लेशकर्मविपाकैः परामृष्टः पुरुषो वा जीवोपाधिना जातः । तस्या एवाविद्याया आवरणशक्तिमहिम्नैव स जीवो नित्यसुखादेर्निराकारत्वाच्च प्रभ्रष्टः ।

इदानीं विचार्यते निराकारे प्रेम विधातुं शक्यते न वेति । इत्थमेवावलोक्यते यदस्माभिराजन्म प्रेमादिः साकार एवाभ्यस्यते विनाऽभ्यासान्न किमपि सिध्यति । यथा जीवनौषधिरूपे मातुः स्तन्ये स्नेहपरम्परा संजाता परन्तु तदप्याकारवत् शुक्लं मधुरं कवोष्णं चातस्तदपीन्द्रियग्राह्यं प्रत्यक्षत इति । ततो बाल्यमुपेयुषामस्माकं परमस्नेहमय्यां जनन्यामेवाधिकाधिका प्रेमप्रवृत्तिरिति सापि मूर्तिमयीति । ततः साकारैरेव सह सर्वदा भोजन विहरणजनितः संसर्ग इत्यतोऽस्माकमिन्द्रियप्रवृत्तिरपि साकार एव चिरप्रसक्ता । यतो निराकारं वस्तु कदापि कस्यापि नेन्द्रियगोचरं तेनैव हेतुना प्रेमभाजनमपि नैव भवितुं युज्यते । अतो निराकारद्वारा सुखप्रत्याशा न क्वापि सम्भवति ।

( क्रमशः )

---

पराकुर्वतस्त्रपुलिप्तेषु ताम्रभाजनेषु आरनालं परिवेषयतः सूदान् क्वचिद्व-क्रप्रसाधितकाकपक्षान्मदव्याघूर्णितशोणनयनान्सपारस्परिककण्ठग्रहं पर्यटतो यौवनचुम्बितशरीरान्स्वसौन्दर्यगर्वभारेणेव मन्दगतीननवरताक्षिप्तकुसुमेषु बाणैरिव कुसुमैर्भूषितान् वसनातिरोहिताङ्गच्छटान्विविधपटवासवासितानपि चिरास्नानमहामलिनमहोत्कटस्वेदपूतिगन्धप्रकटीकृतास्पृश्यतान्यवनयुवकान् क्वचित् अहो दुर्गमता महाराष्ट्रदेशस्य अहोदुराधर्षता महाराष्ट्राणाम् अहो वीरता शिववीरस्य अहो निर्भयता एतत्सेनानीनाम् अहो त्वरिता गतिरेतद्घोटकानाम् आः किं कथयामो दृष्ट्वैव चमत्कारं शिववीरचन्द्रहासस्य न वयं पारयामो धैर्यं धर्तुं न च शक्नुमो युद्धस्थाने स्थातुं को नाम द्विशिरा यः शिवेन योद्धुं गच्छेत् कश्च नाम द्विपृष्ठो यस्तद्भटैरपि च्छलालापं विदध्यात् वयं बलिन आस्माकीना महती सेना तथापि न जानीमः किमिति कम्पत इव क्षुभ्यतीव च हृदयम्। यवनानां पराजयो भविष्यति अपजलखानो विनङ्क्ष्यतीति न विद्मः को जपतीव कर्णे लिखतीव सम्मुखे क्षिपतीव चान्तःकरणे मास्म भो मैवं स्यात् रक्ष भो रक्ष जगदीश्वर। अथवा सम्भोभवीतितमामेवमपि योयमपजलखानः सेनापतिपदविडम्बनोऽपि शिवेन योत्स्ये हनिष्यामि ग्रहीष्यामि वेति सप्रौढि विजयपुराधीशमहासभायां प्रतिज्ञाय समायातोऽपि शिवप्रतापं च विदन्नपि अद्य नृत्यमद्य गानमद्य लास्यमद्य वाराङ्गना अद्य*भ्रकुंसकोऽद्य वीणवादनमद्य मद्यगोष्ठीति स्वच्छन्दैरुच्छृङ्खलाचरणैर्दिनानि गमयति। न च यः कदापि विचारयति यत्कदाचित्परिपन्थिभिः प्रेषिता काचन वारवधूरेव मामासवेन सह विषं पाययेत् कोऽपि नट एव ताम्बूलेन सह गरलं ग्रासयेत् कोऽपि गायक एव वा वीणया सह खड्गमानीयासयेत् इत्यादि ध्रुव एव तस्य विनाशो ध्रुवमेव पतनं ध्रुवमेव च पशुमारैर्मारणम्। तत्र वयं तेन सहजीवनरत्नं हारयिष्याम इति व्याहरतः इतरांश्च मैवं भोः

---

* स्त्रीवेषधारी पुरुषः।

श्च एवाहवक्रीडाऽस्माकं भविष्यति तच्छ्रूयते सन्धिवार्ताव्याजेन शिव एकत आकारयिष्यते यावच्च स स्वसेनामपहाय एकाकी अस्मत्स्वामिना सहालपितुमेकान्तस्थाने यास्यति तावद्वयं श्येना इव शकुनिमण्डले महाराष्ट्रसेनायां छिन्धि भिन्धीति कृत्वा युगपदेव पतिष्यामो वसन्तवाताहतनीरसच्छदानिव च क्षणेन विद्रावयिष्यामः । इतस्तु च्छलेनास्मत्स्वामिसहचराः शिवं पाशैर्बध्वा पिञ्जरे स्थापयित्वा जीवन्तमेव वशंवदं करिष्यन्ति । परन्तु गोप्यतमोऽयं विषयो मास्म भूत्कस्यापि कर्णगत इत्युत्तरयतः साङ्ग्रामिकभटानवलोकयन् धन्या भवन्तो येषां गोप्यतमा अपि विषया एवं वीथिषु विकीर्यन्ते महाराष्ट्रा धूर्ताचार्या नैतेषु भवतां धूर्तता सफला भविष्यतीत्यात्मन्येवात्मना कथयन्स्वप्रभावधर्षितसकलरक्षकगणः स्वसौन्दर्येणोत्कर्षयन्निव विश्वेषां मनांसि सपद्येव प्रधानपटकुटीरद्वारमाससाद। तत्र च प्रहरिणमालोकयदुक्तवांश्च यत् पुण्यनगरनिवासी गायकोऽहमत्र भवन्तं गानरसरसायनैरमन्दमानन्दयितुमिच्छामीति । तदवगत्य स भ्रूसंचारेण कंचिन्निवेदकं सूचितवान् स चान्तःप्रविश्य क्षणानन्तरं पुनर्बहिर्निर्गत्य गायकमपृच्छत् किं नाम भवतः पूर्वं च कदाचित्समायातो नवा । अथ स आह तानरङ्गनामाहं कदाचन युष्मत्कर्णमस्पृशं न पूर्वं कदापि ममात्रोपस्थातुं संयोगोऽभूत् अद्य भाग्यान्यनुकूलानि चेच्छ्रीमन्तमवलोकयिष्यामि इति । स च आमित्युदीर्य पुनः प्रविश्य क्षणानन्तरं बहिर्निर्गत्य च विचित्रगायकममुं सह निनाय ।

तानरङ्गस्तु तेनैव तानपूरिकाहस्तेन बालकेनानुगम्यमानः शनैः शनैः प्रविश्य प्रथमं द्वितीयं तृतीयं च द्वारमतिक्रम्य कांश्चिन्मृदङ्गस्वरान्संदधतः कांश्चिद्वीणावरणमुन्मुच्य*प्रवालं प्रोञ्छ्य कोणं कलयतः कांश्चिदविचलोऽयमेतेनैव सह योज्यन्तामपरवाद्यानीति वंशीरवं साक्षीकुर्वतः कांश्चित्कलितनेपथ्या-

---

* [illegible] । कोणश्च तद्वादनोपकरणविशेषः [ मिजराफ इति भाषा ]

न्पादयोर्नूपुरं बध्नतः कांश्चित्स्कंधावालम्बिगुटिकातः करतालिकामुत्तोलयतः कांश्चिच्च कर्णे दक्षकरं निधाय चक्षुषी संमील्य नासामाकुञ्च्य पातितोभयजानूपविश्य वामहस्तं प्रसार्य तन्त्रीस्वरेण+स्वकाकलीं मेलयतः संमुखे च पृष्ठतः पार्श्वतश्चोपविष्टैः कैश्चित्ताम्बूलवाहकैरपरैर्निष्ठ्यूतादानभाजनहस्तैरन्यैरनवरतचालितचामरैरितरैर्बद्धाञ्जलिभिर्लालाटिकैश्च‡ परिवृतं रत्नजटितोष्णीषिका§ मस्तकं सुवर्णसूत्ररचितविविधकुसुमकुड्मललताप्रतानाङ्कितकञ्चुकं महोपबर्हमेकं क्रोडे संस्थाप्य तदुपरि सन्धारितभुजद्वयं रजतपर्यङ्के विविधफेनफेनिलक्षीरजलधितलच्छविमङ्गीकुर्वत्यां तूलिकायामुपविष्टमपजलखानं च ददर्श।

ततस्तु तानरङ्गप्रभावशीकृतेषु सर्वेष्वागम्यतामागम्यतामास्यतामास्यतामिति कथयत्सु तानरङ्गोऽपि सादरं दक्षिणहस्तेनादरसूचकसङ्केतसहकारेण यथानिर्दिष्टं स्थानमलंचकार।

ततस्तु इतरगायकेषु सगर्वं सासूयं सक्षोभं साक्षेपं सचक्षुर्विस्फारणं सशिरःपरिवर्तनं च तमालोकयत्सु अपजलखानेन सह तस्यैवमभूदालापः।

**अपजलखानः**——किंदेशवास्तव्यो भवान्।

**तानरङ्गः**——श्रीमन्राजपुत्रदेशीयोऽहमस्मि।

**अप०**——ओः राजपुत्रदेशीयः।

**तान०**——आम् श्रीमन्।

**अप०**——तत्कथमत्र महाराष्ट्रदेशे।

**तान०**——सेनापते मम देशाटनव्यसनं मां देशाद्देशं पर्याटयति।

**अप०**——आ एवम् तत्किं प्रायः पर्यटति भवान्।

**तानरङ्गः**——एवं चमूपते। नव्यान्नव्यान्देशानवलोकयितुं नवा नवा भाषा अवगन्तुं नूतना नूतना गानपरिपाटीश्च कलयितुमेधमानमहाभिलाष एष जनः।

---

+ काकली तु कले सूक्ष्मे इति अमरः।

‡ लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्चयः। § उष्णीषिका टोपी इति भाषा

**अपजल**—अहो ततस्तु बहुदर्शी बहुज्ञश्च भवान् । अथ वङ्गदेशे गतो भवान् । श्रूयतेऽतिवैलक्षण्यं तद्देशस्य ।

**तान०**—भगवन्वर्षत्रयात्पूर्वमहं काश्यां गङ्गायां संस्नाय उज्जयिनीदेशीय क्षत्रीयकुलालङ्कृतं भोजपुरदेशमालोक्य गङ्गागण्डकतटोपविष्टं हरिहरनाथं प्रणम्य विलासिकुलविलसितं पाटलिपुत्रपुरमुल्लङ्घ्य सीताकुण्डविक्रमचण्डिकादिपीठपटलपूजितं विक्रमयशः सूचकदुर्गविशेषशोभितं देवधुनीतरङ्गक्षालितप्रान्तं * मुद्गलपुरं निरीक्ष्य † कर्णदुर्गस्थानेन तद्यशोमहामुद्रयेवाङ्कितमङ्गदेशं दिनत्रयमध्युष्य अतिवर्धमानविभवं वर्धमाननगरं च सम्यक् संदृश्य यथोचितसंभारैस्तारकेश्वरमुपस्थाय ततोऽपि पूर्वं वङ्गदेशे पूर्ववङ्गेऽपि चिरमहमभ्रमम् ।

**अप०**—किं किं किं पूर्ववङ्गेऽपि

**तान०**—आं श्रीमन् पूर्ववङ्गमपि सम्यगवालुलूकदेष जनो यत्र प्रान्तप्ररूढां पद्मावलीं परिमर्दयन्ती पद्मेव द्रवीभूता पयः पूरप्रवाहपरम्पराभिः § पद्मा प्रवहति यत्र ¶ ब्रह्मपुत्र इव शत्रुसेनानाशनकुशलो ब्रह्मदेशं विभजन् ब्रह्मपुत्रो नाम नदो भूभागं क्षालयति यत्र साम्लसुमधुररसपूरितानि फूत्कारोद्धूतभूतिज्वलदङ्गारविजित्वरवर्णानि जगत्प्रसिद्धानि नारङ्गाण्युद्भवन्ति यद्देशीयानां जम्बीराणां रसालानां तालानां नारिकेलानां खर्जूराणां च महिमा सर्वदेशीयरसज्ञानां साम्रेडं कर्णं स्पृशति यत्र च भयङ्करावर्तसहस्राकुलासु स्रोतस्वतीषु सहोहोकारं क्षेपणीः क्षिपन्तः अरित्रं चालयन्तः बडिशं योजयन्तः कुवेणीस्थम्रियमाणमत्स्यपरीवर्तानालोकमालोकमानन्दन्तः अदृष्टतटेष्वपि महाप्रवाहेषु स्वल्पया कूष्माण्डफक्किकाकारया नौकया भिन्नाञ्जनलिप्ता इव मसीस्नाता इव साकारा अन्धकारा इव काला धीवरबाला निर्भयाः क्रीडन्ति ।

---

* मुंगेर इतिप्रसिद्धं नगरम् † भागलपुरनामकनगरे कर्णदुर्गचिन्हमद्याप्यस्ति ।

§ पद्मा नाम नदी ¶ ब्रह्मपुत्रः प्रदीपनः गरलविशेषः ।

# श्रीदरभङ्गाधिराजस्य कृते विलापः।

( पूर्वतोऽनुवृत्तः )

स्फुटति नवयुवत्याः प्रेमहास्यं यथास्ये
सितरजनिमुखे वा चन्द्रिकोदेति यद्वत्।
कुसुममभिनवं वा भाति यद्वद्वसन्ते
स्फुरति शुचि यशस्ते देव तादृग्दिगन्ते ॥ ८

चेतो रञ्जयति श्रियं वितनुते धत्ते सुधामाधुरी-
माशां पूरयति क्षिणोति जगतस्तापं तमो हन्ति च।
यद्यत्ते कुरुते यशस्तदखिलं कुर्वन्नपि श्रीपते
चन्द्रस्तस्य गुणाकरस्य तुलनां नाप्नोति दोषाकरः॥ ९

माधुर्येण सुधारसं परिमलेनामोदिना सारसं
वैमल्येन विधोः करं तरलया कान्त्या च मुक्तासरम्।
गत्या गन्धवहं परं महदपि व्याप्त्या च जित्वाऽम्बरं
क्षुद्रे कर्णबिले नृणां तव यशो राजन्कथं लीयते ॥ १०

---

९ चेत इति। यशःपक्षे श्रियं त्रिवर्गसम्पदं चन्द्रपक्षे शोभाम्। आशां याचकानामिच्छाम् अन्यत्र दिशम्। तमो हिताहितज्ञानविपर्ययम् चन्द्रपक्षे तु अन्धकारम्। गुणानामाकरस्य उत्पत्तिस्थानस्य तस्य यशसः। दोषा रात्रिस्तां करोति (?) दोषाकरः दोषाणां कलङ्कगुरुपत्नीहरणादिपापानामाकर इति च व्यज्यते।

१० माधुर्येणेति सुधारसं अमृतस्यास्वादं आमोदिना परिमलेनेति आमोदयति प्रीणयतीत्यामोदी प्रमोदजनकस्तेन परिमलेन विमर्दनेन आमोदिना अतिनिर्हारिणा विमर्दोत्थगन्धेनेव सारसं पद्मम्। अत्र यशसो विमर्दनं पुनः पुनश्श्रवणा इत्यर्थः। मुक्तासरं मुक्तावलिं मुक्ताहारमिति यावत्। गत्या गतिवेगेन गन्धवहं पवनम्। व्याप्त्या विस्तारेण च परं महदपि परमहदपि अम्बरमाकाशं जित्वेत्यर्थः। लीयत इति तिष्ठतीति भावः। अथ च तत्सर्वं जित्वाऽपि भीतवत् कथं कर्णच्छिद्रे अन्तर्धन्ते इति व्याजस्तुतिश्च।

शुद्धेत्यव्यभिचारिणीति नृपते प्राणप्रियां मन्यते
यां कीर्तिं नियतं न वेत्ति चरितं तस्या निगूढं भवान् ।
सान्येषां वदनानि चुम्बितवती सन्धातुमन्यान्पुन-
र्मन्त्रं कञ्चन कामसाधनमिव ब्रूते श्रुतौ सङ्गता ॥ ११

रूपं भूप तवावलोक्य यशसः काचिद्दरिद्राङ्गना
मुग्धा हीरककर्णपूर इति तत्कर्णे करोत्यादरात् ।
अन्याघ्राय सुशीतलं परिमलं कर्पूरचूर्णभ्रमा-
त्ताम्बूलेन सहैव चर्वति तदित्यालोकि चित्रं मया ॥ १२

## सभावर्णना

बहुगुरुद्विजराट्कविसौम्यया
परिषदा बहुमङ्गलमित्रया ।
तव कृतैककतैरुपसेविता
सुरसभा रसभावविदप्यधः ॥ १३

---

११ शुद्धेति । कीर्तिपक्षे शुद्धा निष्कलङ्का अव्यभिचारिणी अनन्यसाधारणा । पत्नीपक्षेतु शुद्धा बाह्यशौचशालिनी । अव्यभिचारिणी एकपत्नी । व्याजस्तुतिरत्रालंकार: भावस्तु एकेषां मुखेभ्य उच्चरिता तव कीर्तिरन्येषां कर्णप्रविष्टा सती तानपि समीपं गत्वा प्रार्थयितुं प्रवर्तयतीत्यर्थ: ।

१२ रूपमिति । अस्यायं भाव: । काचिद्दरिद्रवनिता अन्यस्या दरिद्रवनिताया। सकाशात्तव यश: शृणोति साच ताम्बूलं चर्वन्ती तव यश: स्वादं स्वादं कथयतीति पूर्वार्धे यशसश्चाकचक्यशालि रूपं परार्धेच कर्पूरवच्छुभ्रत्वं व्यज्यते ॥

१३ बहिवति । बहवो गुरव उपदेशका मन्त्रिणोऽध्यापका वा द्विजराजो ब्राह्मणाश्च कवयो वर्णयितारश्च सौम्या ज्ञाश्च नादविद्याभिज्ञाश्च यस्यां तया अथवा बहुभिर्गुरुभि: द्विजराड्भि: कविभिश्च सौम्यया मनोज्ञया । तथाच सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवत इति मेदिनी । तथा बहूनि मङ्गलानि मङ्गलजनकानि मित्राणि सुहृदो यस्यां तया तव परिषदा सभया एककतै: सच सच सच सच सचेतिते एककाश्चते तैश्चेति एककतै: एकाकिना गुरुणा बृहस्पतिना एकाकिना द्विजराजा चन्द्रेण एकाकिना कविना शुक्रेण एकाकिना सौम्येन सोमपुत्रेण बुधेन तथा एकाकिना मङ्गलेन भौमग्रहेण एकाकिना मित्रेण सूर्येण च उपसेविता समीपे आश्रिता सुरसभा देवानां सभा रसभावविदपि रसान्भावांश्च जानत्यपि अध:कृता निर्जितेत्यर्थ: । नीचै: कृतेति विरोधाभासश्च ।

भवतस्तां सुधर्माणमानन्दामृतमानदाम् ।
भूमौ देवसभां द्रष्टुं कविम्मन्योऽहमागमम् ॥ १४

पुनराशिषः ।

जय गुणिषु धृतादर दरभङ्गेश्वर दुष्टभयङ्कर शिष्टमते धनहीनगते ।
जय मर्त्यपुरन्दर सत्यधुरन्धर नित्यमनश्वर धर्मरते कृतकीर्तिततते ॥
जय मानवतांवर दानपयोधर कविमानसचर हंसपते विहितारिहते ।
जय गुणरत्नाकर विबुधपुरःसर नृपलक्ष्मीश्वर भवतु सते कुशलं भवते ॥ १५ ॥ गीतिः ॥

द्विजानां राजासौ लसति दरभङ्गाभुवि हरं-
स्तृषां भूदेवानां सुचरितसुधाभिर्बुधहितः ।
कलापूर्णो देवः परिहृतकलङ्कश्च स भवा-
निति श्रुत्वाऽऽश्चर्यं वयमुपगता द्रष्टुमनसः ॥ १६

---

१४ भवत इति । हे देव राजन् भूदेवेति वा भवतस्तां सभां द्रष्टुमहमागममित्येकोऽर्थः । भूमौ मर्त्यलोके तां देवसभां बहुगुर्वादिभूषिताम् अपूर्वामित्यपरोर्थः । सुधर्माणं शोभनो धर्मो यस्यां ताम् सुधर्मनाम्नींच । आनन्दोऽमृतमिवेति तेन मानदां-सम्मानप्रदाम् । आनन्दजनकेनामृतेन पीयूषेण सम्मानदामितिच ।

१५ जयेति । कविमानसन्चरहंसपते इत्यत्रपरम्परितरूपकं कवेर्मानसं मनएव मानसं सरस्तत्र चरतीति तादृशो हंसपती राजहंसः सते साधवे भवते कुशलं भवतु सज्जनस्य तव शुभमस्तु इत्यर्थः

१६ द्विजानामिति । द्विजानां राजा ब्राह्मणः चन्द्र इति च व्यज्यते । सुचरितानि पुण्यकर्माणि दानादीनि सुधा इवेति सुचरितसुधास्ताभिरिति राजपक्षे चन्द्रपक्षे तु शोभनं चरितं चेष्टितं यासां ताः सुचरितास्ताश्च ताः सुधाश्चेति ताभिः । भूदेवानां ब्राह्मणानां तृषामाशां हरन्नपनयन्निति राजपक्षे चन्द्रपक्षे तु भुवः स्वर्गरूपस्य स्थानस्य देवानामिन्द्रादीनां तृषां पिपासां हरन्निति देवा हि चन्द्रस्य सुधां पिबन्तीति प्रसिद्धिः । बुधहितः पण्डितानां उपकारक इति राजपक्षे चन्द्रपक्षे तु बुधस्य स्वपुत्रस्य हितः [?] कलाभिर्गीतवाद्यादिभिः चन्द्रपक्षे तु षोडशभिर्भागैः । देवो राजा चन्द्रपक्षे तु द्योतनशीलः । परिहृतकलङ्कः कलङ्करहित इतिव्यतिरेकवान् स भवान्दरभङ्गानाम्न्यां भुवि पृथिव्यां लसतीति आश्चर्यम् । अन्यत् सुगमम् ।

क्षीरोदादुदिता तदम्बुवसतेः कष्टाद्विमुक्ता रमा
विष्णोर्वक्षसि निःश्वसत्यपि पुनः सम्पीडिता वर्मणा ।
तस्मात्पद्ममुपेत्य तत्र च निशि प्राप्य व्यथां मीलिते
पाणिं ते प्रतिपद्यमुक्तमनिशं दानाय सम्मोदते ॥

यमकेनाशीः काव्ये ।

शुभवतो भवतोषणकर्मणा
मुदमिता दमितासुरविक्रमा ।
हरवधूररवधूनयताद्भयं
तवहितावहिता शमनादपि ॥ १८

सुरासुराणां पिबतिस्म योऽस्मयो
दयोदयोन्नः किल किल्विषं विषम् ।
सवः सवध्वत् पुरमन्मथोन्मथो
महामहा यच्छतु पीवरं वरम् ॥ १९

---

१७ क्षीरोदादिति । लक्ष्मीः क्षीरोदजलेवसन्ती निःश्वासमपि ग्रहीतुमशक्ताऽऽसीत् इत्यतस्तस्मादुत्थिता विष्णोर्वक्ष आश्रित्य निःश्वासं तत्याज । अथ दैत्यवधाय विष्णौ सन्नद्धे सति वर्मणा सम्यक्पीडिता बभूव ततश्च पद्ममाश्रित्य तिष्ठन्ती रात्रौ पद्मे मुद्रिते सति पीडां प्राप । अथ तस्मात्तव हस्तं दानाय सदा मुक्तमाश्रित्य सम्यक् मोदते ।

१८ शुभवत इति । दमित उपशमितोऽसुराणां विक्रमो यया सा दमितासुरविक्रमा । तोष्यतेऽनेनेति तोषणं प्रीणनं भवस्य संसारस्य महादेवस्य वा भवयोरुभयोर्वा तोषणं तत्कर्म तेन मुदं प्रीतिं इता प्राप्ता । हितेषु पथ्येषु अवहिता अवधानवती जाग्रतीति यावत् । हरवधूर्भवानी देवी शुभवतो मङ्गलयुक्तस्य तव शमनाद्यमादपि किमुतान्यस्मादिति भावः भयं अवधूनयतात् त्याजयतु इत्याशीः । भवतो भवतो दमिता दमिता रवधूरवधू वहिता वहिता इति यमकचतुष्टयम् ।

१९ सुरासुराणामिति । स्मयो गर्वः । अस्मयो गर्वरहितः । दयाया उदयेन उन्नः क्लिन्नः [ उन्दीक्लेदन इत्यस्य धातोः क्तान्तस्य रूपम् ] दयोदयोन्नः दयारसेनार्द्रः यः सवध्वत् क्रतुध्वंसी महादेवः सुरासुराणां देवानामसुराणां च किल्विषमनिष्टं मृत्युजनकं विषं कालकूट नामकं गरलं किल ऐतिह्ये पिबतिस्म पपौ अथवा विषसदृशं किल्विषं पापमेव पपौ । महत् महस्तेजो यस्य स महामहा महातेजाः । पुराणि च मन्मथः कामश्च पुरमन्मथाः तेषामुन्मथः उन्मथ्नातीत्युन्मथोदाहकृत् । सवं यज्ञं दक्षयज्ञं ध्वंसत इति सवध्वत् क्रतुध्वंसी महादेवः वो युष्मभ्यं पीवरं स्थूल-

चित्रकाव्येनाशिषः ।

देवस्तावच्छिवस्ते गुरुरुरु कुरुतां ज्ञानदानम्मनस्थः
सा काली कान्तकाया तवभवतु वराभीतिदातिप्रतिष्ठा ।
देवी ते वीर वीणागुणगणरणनी ढौकतां कम्बुकण्ठं
श्रीपाणौ पाणिपाल्या लगतु गजगतिः सा च ते चन्द्रचर्चा॥२०॥

कण्ठभूषणबन्धः । ( १ ) *

---

# वर्णलेखनप्रचारः ।

बहवः किल विदेशीयाः प्रतिपादयन्ति योऽयं धरणीतले वर्णलेखन-प्रचारो दृश्यते स पाणिनेरुत्तरकालिकः । श्रुतिसमये तु नायमासीत्कापि । तदानीं खलु सर्वेऽपि सर्वानर्थाञ्छ्रवणेनैवावधारयामासुः । अत एव च वेदानां श्रुतिसंज्ञा । नापि वेदेषु क्वचिल्लेखनकलाविषये किंचिदपि प्रमाण-

---

२० देव इति । गुरुर्ज्ञानोपदेशको देवः शिवस्तव मनसि स्थितः सन् तावत् [ वाक्यालङ्कारः ] उरु महद्यथा स्यात्तथा ज्ञानदानं कुरुताम् । कान्तः कमनीयो भक्तानां स्पृहणीय इति यावत् कायो मूर्तिर्यस्याः सा कान्तकाया अतिप्रतिष्ठा पूजितगौरवा अतिशब्दः पूजार्थकः प्रतिष्ठा गौरवम् प्रतिष्ठा गौरवे क्षितौ इति मेदिनी । सा प्रसिद्धा काली तव वराभयप्रदा भवतु । हे वीर दानवीर वीणाया गुणगणानां तन्त्रीसमूहानां रणनी वादयित्री वाच्यलिङ्गं क्वापीति कर्तरियुट् देवी सरस्वती तव कम्बुसदृशं त्रिरेखं कण्ठं ढौकतां प्राप्नोतु । चन्द्रः कर्पूरं चर्चा अनुलेपनं यस्याः सा चन्द्रचर्चा श्रीर्लक्ष्मीः पाणिपाल्या करावल्या करद्वयेनेत्यर्थः । तव पाणौ हस्ते लगतु च लग्नाभवतु च कीदृशी सती गजगतिः गजस्येव गतिर्यस्याः यद्वा गजैः गतिरागमनं यस्यास्तादृशी ।

* सर्वेषामपि बन्धानां चित्राणि अन्ते प्रकाशयिष्यन्ते ।

मुपलभ्यते येन वर्णविन्यासरीतेः प्रचारस्य तत्समानकालिकत्वं व्यवस्थापयितुं शक्येतेति । एतमेव च विदेशीयानां सिद्धान्तमनुसरन्ति केचिदस्मद्देशीयाः पण्डिताः । अतोऽत्र सप्रमाणं विचार्यते कदातनोऽयं वर्णलेखनप्रचार इति ।

तत्र तावद्यदुच्यते वेदानां श्रुतिरिति संज्ञायाः प्रवृत्तिनिमित्तं लिपिं विना श्रवणमात्रेणार्थावधारणं ततश्च प्रतीयते न हि श्रुतिसमानाकालिको वर्णलिपिप्रचारः अन्यथा वेदानां श्रुतित्वानुपपत्तेरिति । तदेतदापाततो रमणीयम् । न हि संज्ञामात्रेणैव तदानीन्तन उदन्तः शक्योऽनुमातुम् । दृश्यते हि मन्वादिप्रणीतानामपि धर्मसंहितानां स्मृतिरित्याख्या । किन्तु न हि तया तदानीं लेखनकलाया अभावः कथंचिदप्यनुमातुं शक्यते । तासु प्रत्यक्षत एव लेखविधानस्य दृश्यमानत्वात् । अतो न संज्ञया संज्ञिकालिकं वृत्तमनुमातुं युक्तम् । वेदानां श्रुतिरित्याख्या तु पूर्वपूर्वमहर्षिभिः पठितानां मन्त्राणामुत्तरोत्तरैः श्रुत्वा संग्रहणादेवेति प्रतीयते श्रुतिमूलकमेव च संग्रहणम् । ततश्च निमित्तनैमित्तकयोरभेदोपचारेण वेदानामपि श्रुतिसंज्ञा । एवं च नहि श्रुतिरित्याख्यामात्रेण वेदकाले लिपिप्रचाराभावः शक्योऽनुमातुमिति । किं च वेदानामिव श्रीमत्कालिदासादिप्रणीतानां रघुवंशादीनामपि श्रव्यकाव्यत्वमालङ्कारिकैः स्वीक्रियते । तच्च भवदुक्तन्यायस्वीकारे कालिदासादिकविकालेष्वपि लेखनाप्रचारमनुमापयेत् । अनुमानं चैतत् एतस्मिन्शुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु इत्यादि शकुन्तलायाः पत्रलेखनप्रस्तावव्याहृतेन वचनेन विरुद्धमेव । तदवश्यमभ्युपेतव्यं न हि संज्ञाः सञ्ज्ञिकालिकमुदन्तं निवेदयितुं प्रभवन्तीति ।

अथोच्यते नास्ति वेदे लेखनसाधनानां वर्णपत्रमसीलेखनीत्यादिशब्दानामुपन्यासः क्वापि येन तदानीं लेखनकलायाः प्रचारो ऽनुमातुं शक्येतेति । तदपि नैव विचारसहम् । न ह्यप्राकरणिकं केनापि कदाचिदपि क्वाप्युपनिबध्यते । न हि भोक्तुमुपविष्टः शय्यां तत्कालीनं वा कृत्यमुप-

वर्णयति नापि वा गुरुमभिवादयन् रमणीं सम्बोधयति न वा भगवति हुताशने हव्यं जुह्वत्सङ्गीतशास्त्रगतान्सरिगमपदादीनुच्चारयति अप्रकृतानुरोधि ह्युपवर्ण्यमानमभिधीयमानं वा वक्तुरसामञ्जस्यं बोबोधयतीति । एतदेव श्रुतिषु लेखनलेखनीत्यादिशब्दानामनुपनिबन्धने बीजम् । ऋग्भिः स्तौति यजुर्भिर्जुहोति सामभिर्गायतीत्यादिना वेदानां भगवदाराधनमात्रहेतुकत्वेन तथाविधस्थलेऽप्रकृतानां लेखन्यादिपदानामुपनिबन्धः कथं वा घटतामिति प्रष्टार एव जानन्तु । यज्ञादौ वेदप्रतिपाद्ये कर्मणि च लेखन्यादीनामनावश्यकत्वं स्पष्टतो द्रष्टव्यम् ।

किञ्च दृश्यते वेदेष्वधीत इत्यादि शब्दानामुपनिबन्धनमिति प्रतिवादिभिरपि स्वीक्रियत एव नह्ययं विशालतमो भगवान्वेदः पुस्तकपठनमन्तरा केवलेन श्रवणेनाधीतुं शक्यः कथञ्चिदपि । अतोऽपि श्रुतिकाले लेखनप्रचारस्यास्तित्वानुमानं सुस्थिरीभवति ।

(क्रमशः)

---

# प्रश्नस्योत्तरम् ।

* * *

अद्य दशमसंख्यायां प्रकटितस्य साम्बा पुनात्विति पद्यस्य यथामति अनतिक्लिष्टोऽर्थः कृतः प्रेर्यते प्रकाश्यताम् ।

पद्यमिदं महाकविर्भवभूतिः प्रणिनाय । एतद्रचनासन्तुष्टेन राज्ञा भवभूतिरित्यभिख्या तस्मै कवितल्लजाय प्रथमतो दत्ता । पद्यस्यास्यायमर्थः—

शम्भोः परिचर्यानियुक्ता पार्वती गङ्गाजलं गाङ्गं प्रसन्नतरं क्रीडायोग्यं सलिलं ह्रदयमात्मनस्तदुत्सुकं चित्तं कुचौ आलिङ्गनमभिकाङ्क्षन्तौ घनोन्नतौ स्तनौ पादौ च अभिसरणोत्सुकौ चरणौ च विलोक्य शृङ्गाररसोद्दीपकत्वेन विभाव्य हरे तु हारे हिमभूते सप हिमकरं विरहिजनोपप्लवदा-

यिनि कुटिले चन्द्रे मकरे कन्दर्पदाहकविषमचक्षुषि (?) करे शूलादिप्रतिभयहेतिसनाथे हस्ते वक्रं भयोत्पादकत्वेन स्वाभीष्टकुण्ठकं यथा स्यात्तथा विलोक्य दृष्ट्वा या मदनानलदह्यमाना मदनानलेन सन्मथाग्निना दह्यमाना भस्मीक्रियमाणा नितान्तमभिसन्तप्तेत्यर्थः । बभूवेति शेषः । सा भवभूतिपवित्रमूर्तिः भवस्य रुद्रस्य भूत्या [ अनुलेपनसम्बन्धिना ] भस्मना जीवनोचितसम्पदा वा पवित्रमूर्तिः अवाप्तनिरुपमसर्वमङ्गलशरीरा अम्बा प्रपञ्चमाता भवानी पुनातु सत्पथे प्रवर्तयतु अस्मानिति शेषः ।

अत्र निगरणपूर्वकाध्यवसानेन मकरपदं चक्षुःपरम् ।

अयमाशयः—

पार्वती परमप्रिये नितरामनुरक्ताऽपि तदीयभीषणहेतिदर्शनेन संजातभया मदनानलपीडिता बभूव । किन्तु भक्तपराधीनस्य परमेश्वरस्य कृपया समधिगताश्लेषा पवित्रमूर्तिर्नितान्तं सुखमनुबभूवेति ।

प्रकृतिमधुरस्य राज्ञः प्रसादमाकाङ्क्षमाणः क्रूरात्तदीयपरिजनाद्भीतस्तद्दर्शनालाभजनितं दुःखमनुभवन् राज्ञा स्वयमाहूय पश्चात्संमानितो भवभूतिर्गूढार्थेनानेनाशीर्वादरूपेण पद्येन स्ववृत्तान्तं व्यवृणोत् । तेन तुष्टो भूपालस्तस्मै भवभूतिरिति नाम दत्तवानिति प्रकृतोऽर्थः ।

**बालकविः श्रीशेषशायिशर्मा ।**
( मेलुकोट्टयूर )

---

# सप्रमोदमङ्गीकारः ।

समस्तीपुर [ दरभङ्गा ] निवासिना श्रीयुतपण्डितजगन्नाथमिश्रेण प्रेरितं अष्टत्रिंशद्भाष्यसंवलितं गायत्रीभाष्यपुस्तकं श्रीयुतपंडित लेले श्रीकाशी-

नाथशास्त्रिभिः प्रहितं महाराष्ट्रभाषामयं 'वर्णव्यवस्था उत्पत्तिसिद्धच आहे,' 'वेदांत सुरापान निषिद्ध च आहे,' 'विवाहकालनिर्णय' 'भारतीयव्याख्यानमालायाः प्रथमव्याख्यानस्य पूर्वार्धमुत्तरार्धं चेति पुस्तक पञ्चकं एट्टनराजेन कविप्रवरेण तत्रभवता श्रीमता श्रीमानविक्रमकविराज-कुमारेण प्रेषितानि विशाखविजयोल्लासं केरलविलासो वैराग्यतरङ्गिणी ओदनवनेश्वरविजयं दीनदयापरचम्पूः ध्रुवचरितकाव्यं सूक्तिमुक्तामणि-माला सत्हृदयसमागमपुस्तकं केरलभाषागानमाला कृत्यनुमोदनं समस्यापूरण-माला सङ्गीतकृतिशतकं Pearls of Advice collected अनेकविषय-कृतिपुस्तकं पार्वतीपरिणयनाटकं लेखमालापुस्तकत्रयं तदन्यच्च पुस्तकद्व-यमिति एकविंशतिः पुस्तकानि अत्रत्येन तोरो श्रीबालशास्त्रिणा प्रदत्त आह्निकसारश्चेति पुस्तकानि प्राप्तान्यस्माभिः तानि च सादरं सविनयं सानन्दं च स्वीक्रियन्ते । केरलदेशे प्रतिमासं त्रिः प्रकाश्यमाना विज्ञान-चिन्तामणिसंज्ञा च सर्वाङ्गहृदयङ्गमा काऽपि संस्कृतपत्रिकाऽस्मत्सविध-मुपागता निकाममाह्लादयति नश्चेतः । उत्तरदेशीयाश्चैतां केरलवर्णमयी-मनवबुध्यमाना रसामृतास्वादे न प्रभवन्तीत्यालोच्य तुलामासात्प्रभृति सेयं देवनागराक्षरैरेव मुद्रयिष्यत इति प्रत्यज्ञायि अस्याः सम्पादकैः पुन्नश्शेरि निम्बिश्रीनीलकण्ठशास्त्रिभिः तदस्ति बलवती नः प्रत्याशा सङ्गृह्णीयुरेता-मवश्यमुत्तरदेशीया आस्वादयेयुश्च रसं प्राप्नुयुश्चामन्दमानन्दमिति विशेषतस्तु समयान्तरे समालोचयिष्याम इतिशिवम् ।

---

## समालोचना।

**वृत्तालङ्कारः**—नयपाल (नेपाळ) निवासिना पण्डितश्रीछविलालसूरिणा विरचितः । अत्र च प्रतिपद्यमलङ्काराणां वृत्तानां च लक्षणं सोदाहरणमु-पवर्णितम् । भूयांसः खलु वर्तन्ते छन्दसि अलङ्कारशास्त्रे च प्रबन्धाः पूर्वेषां विदुषाम् । तथापि अल्पीयसा कालेन गुरुमन्तराप्यवबोद्धुं सुलभो युगपच्छास्त्रद्वयावबोधको नैवंविधः प्रबन्धोऽद्यावधि नयनपदवीमुपारूढो-

ऽस्माकम्। अनेन च सामान्यतोऽलङ्कारा वृत्तानि चावबोद्धुं शक्यानि। उपयुक्तश्चायमतिमात्रं प्रथमशिक्षायाम्। क्वचिच्च दुर्बोधवद्भासमानानि प्रतिपाद्यानि व्याख्याकरणेन सुलभतां नीतानि। अत्रत्यानि च कानिचित्पद्यानि पाठकेभ्य उपह्रियन्ते। तत्रप्रतीपलक्षणं यथा—

वर्ण्यत्वमस्या उपमाभिधाया
यत्कल्प्यते तद्भवति प्रतीपम्।
कान्तेऽरविन्दं तव नेत्रतुल्यं
स्यादिन्द्रवज्रा यदि तौ जगौ गः॥ इति॥

एवमपह्नुतिनिरूपणम्—

यदारोपोऽन्यस्मिन्परतरगुणस्यापलपनं
विधायाहुर्विज्ञास्तमिह बहुधापह्नुतिरिति।
सुधांशुर्नायं खे किमुत खसरित्पङ्कजमिदं
रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी॥ इति॥

एवमुत्प्रेक्षा—

भवति खलु सोत्प्रेक्षा हेतोः फलस्य च वस्तुन-
स्तदितरस्वरूपत्वे सम्भावना यदि गृह्यते।
निशि न तमसं धूमः कोकीवियोगजशुष्मणो
रसयुगहयैर्न्सौ म्रौ स्लौ गौ यदा हरिणी तदा॥ इति॥

एवं तुल्ययोगिता—

वर्ण्यानां वेतरेषां गुणद्युतिकथनात्तुल्ययोगित्वमाहुः
सङ्कुञ्चत्येव कान्ते तव नयनयुगं कैरवं चार्कभासा।
दृष्ट्वा ते सौकुमार्यं शशिकरसुमनःकेशरा यान्ति दार्ढ्यं
म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्॥ इति॥

एतानि च पद्यान्यवलोक्य शक्यमवबोद्धुं प्रबन्धस्यास्य स्वरूपं विद्वद्भिः अतीवोपयुक्तोऽयमवश्यं संग्राह्योऽनायासेन च्छन्दसि चालङ्कारे च प्रवेष्टुकामैरिति शिवम्।

**सङ्केतनिधिः**—होरास्कन्धेऽनुभूतफलप्रतिपादको ज्यौतिषग्रन्थोऽयम् । एष च श्रीरामदयालुनाम्ना ज्योतिःशास्त्रविशारदेन प्रणीतः । अस्ति खल्वस्य प्रबन्धप्रणेतुर्ज्यायसः सहोदरस्य तनयो वासीरामो नाम । तं च ज्योतिःशास्त्रस्य होरास्कन्धमवबोधयितुं विरचितोऽयं प्रबन्ध इत्यनेनैव शक्यमवबोध्दुमेतस्य सौष्ठवादिकम् । नूनं बहूकारकोऽयं प्रबन्धो होरास्कन्ध-जिज्ञासूनाम् । सुबोधस्याप्येतस्य कचिट्टीकासापेक्षत्वमिव प्रतिभाति । तदाशास्महे संस्करणान्तरे टिप्पनीसहकृत एव प्रबन्धोऽयं प्रकाश्येतेति । अत्रत्यश्च लग्नसाधनप्रकारोऽयं दृश्यतां जिज्ञासुभिः—

सायनांशनिजेष्टकालिकभानुभोग्यलवाहतात्—
स्वोदयात्खगुणाप्तभोग्यपलैर्वियुक् स्वपलन्नजात् ।
व्योश्रिमोद्यतः खरामहतं तु शेषमशुद्धहृत्
शुद्धराशियुतं लवादिफलं तनुर्व्ययनांशकम् ॥ इति ॥

मन्यामहे नैवंविधानि पद्यानि विना व्याख्यामविज्ञातज्योतिःशास्त्रै-रवबोद्धुं शक्यानीति । मूल्यमस्य केवलमानकचतुष्टयं जिघृक्षुभिस्तु पत्रं मूल्यं च ' श्रीजगन्नाथप्रसाद, कोटीगुरसहाय छोटेलाल बूलानाला बनारस-सिटी ' इत्यत्र प्रेरणीयम् ।

**सारमञ्जरी**—श्रीजयकृष्णतर्कालङ्कारभट्टाचार्यविरचिता श्रीवैकुण्ठ-नाथन्यायरत्नविरचितेन विवरणेन संवलिता च । एषा किल न्यायघटित-व्याकरणसिद्धान्तमयं मकरन्दं विकिरन्ती कल्पद्रुममञ्जरीव कस्य वा सचे-तसश्चेतो नानुरञ्जयेत् । यथा किल श्रीगदाधरभट्टाचार्यस्य व्युत्पत्तिवादो यथा वा श्रीजगदीशतर्कालङ्कारस्य शब्दशक्तिप्रकाशिका यथा वा कौण्डभ-ट्टस्य वैय्याकरणभूषणसारो यथा वा श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यस्य शब्दार्थरत्नमेवमसौ श्रीजयकृष्णतर्कालङ्कारप्रणीता सारमञ्जरी । नवद्वीपे समुल्लसन्त्या विबुधजनन्या नाम सभाया द्वारा प्रतिवत्सरं भवन्त्यां उपा-धिपरीक्षायां व्याकरणे परीक्ष्यविषयत्वेन निर्दिष्टेयं मञ्जरी । एतावतैव

चास्याः सौष्टवं चोपयुक्ततमत्वं च माहात्म्यं चावबुध्येत सुधीभिः। अत्रत्यश्च वैधहिंसाविचारः सहृदयेभ्य उपह्रियते--

**मा हिंस्यात्सर्वाभूतानीति** सामान्यशास्त्रं **श्वेतच्छागलमालभेतेति** विशेषशास्त्रम् । अत्र हिंसायां विधिनिषेधयोरवस्थानेन विरोधात्सामान्यशास्त्रं विशेषशास्त्रेण बाध्यते । विरोधे हि बलीयसा दुर्बलं बाध्यते । विशेषशास्त्रं तु बलीयो निरवकाशत्वात् सामान्यशास्त्रं दुर्बलं सावकाशत्वात्। तेन सामान्यशास्त्रस्य वैधेतरपरत्वम् । न खलु सर्वभूतहिंसाभावविषयकं कार्यं इति निषेधविध्यर्थस्य बाधकं विना अग्नीषोमीयपश्वालम्भनविषयकं कार्यमिति भावविध्यर्थमुपपद्यत इति मीमांसकाः । नन्वेवं श्येनेनाभिचरणाय यजेतेत्यत्र श्येनस्य शत्रुवधरूपेष्टसाधनत्वं **अभिचारो मूलकर्म** चेतिमनुनोपपातकमध्ये पाठादनिष्टसाधनत्वं चावगम्यते तदेतत्कथमुपपद्यत इति चेन्न । **आततायिनमायान्तं हन्यादेवाविचारयन्** इत्येकवाक्यतया आततायिनः स्थले इष्टसाधनत्वमनाततायिस्थले तु उपपातकत्वेन बलवदनिष्टसाधनत्वमित्यविरोधः कल्प्यते । पदार्थान्तरसाकाङ्क्षं विशेषमिति न्यायात् । तथा च वैधेतरहिंसाया एव नरकजनकत्वमिति कल्प्यते । वाचस्पतिमिश्रमते तु सामान्यविशेषशास्त्रयोर्न विरोधो भिन्नविषयत्वात् । तथाहि मा हिंस्यादिति हिंसाया अनर्थहेतुता ज्ञाप्यते । विशेषशास्त्रेण तु हिंसायाः क्रतूपकारकत्वं बोध्यते । अतएव वैधहिंसाया अपि नरकजनकत्वं कल्प्यम् । वैधहिंसायाः क्रतूपकारकत्वमेव न तु स्वर्गजनकत्वं किन्तु क्रतोरेव स्वर्गजनकत्वं तत्तद्विशेषविध्यभिधानात् । इति ।

एतेन चास्याः सुबोधत्वं विषयप्रतिपादनाशैली चावबुध्येतैव रसिकैः । लघीयानपि बहूपकारकः प्रबन्धोऽयमवश्यं सङ्ग्राह्यो जिज्ञासुभिः । मूल्यमस्य आनकषट्कं आदित्सुभिः पत्रादिकं तूपरि सङ्केतनिध्यधिगमस्थान एव प्रेर्यम् ।

---

७।४।९९

श्रीशिवः शरणम् ।

# ॥ संस्कृतचन्द्रिका ॥

॥ श्रीगणेशाय नमः॥

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

॥ भासावतरणिका ॥

विविधभूमिरुहप्रसवोद्भवे
दिशि दिशि प्रसरत्यपि सौरभे ।
विकसितं[1] न लता[2] भजते मधौ[3]
क इव वेत्तुमलं वनितान्तरम् ॥

उद्भटश्लोकाः ।

अकारणमुखग्लानिः कठिनत्वं विलासति ।
उन्नतिः परपीडायै नीचस्येव कुचस्य च ॥

यदि भवेत्करुणा मयि पामरे
तदिह ते करुणा परिगीयते ।
चरणपद्मनिषेविणि सेवके
न करुणा करुणा करुणाम्बुधेः ॥

गन्तुं यदि व्यवसितासि घनान्धकारे
नीलाम्बरेण तनुमावृणु मुग्धशीले ।
विद्युल्लता पथि यदि प्रतिरोधिनी स्या-
दमावृतैव कनकद्रवगौरि गच्छेः ॥

---

१ भावे क्तः । २ सुमना मालती जातिर्वासन्ती माधवी लता । स्याच्चैत्रे चैत्रिको मधुरिति चामरः ।

# पण्डितराजः श्रीजगन्नाथः ।



( पूर्वतोऽनुवृत्तः । )

प्रतिपादितप्रायमेवास्माभिः पण्डितराजश्रीजगन्नाथरायस्य चरितादिकं सिद्धान्तितोऽस्यावस्थितिसमयो निर्णीतं च तद्विषयिणीनां लोकवार्तानां सत्यत्वासत्यत्वादिकम् । अथैतत्कृतानां प्रबन्धानां सुधासमधिकं रसं पाठकानास्वादयितुमिच्छामः । तत्र तत्र च तत्तद्विषयाणां युक्तत्वायुक्तत्वादिकं यथोचितं विचारयिष्यामो निर्देक्ष्यामश्च केषु केषु शास्त्रेष्वस्यातिमात्रं प्रावीण्यं समुद्बभास इति । तत्र तावत्पण्डितरायप्रणीताः प्रबन्धा जगदाभरणं प्राणाभरणं पीयूषलहरी सुधालहरीकरुणालहर्यमृतलहरी लक्ष्मीलहरी चेति पञ्चलहर्यो रसगङ्गाधरो मनोरमाकुचमर्दनं भामिनीविलास आसफविलास श्चित्रमीमांसाखण्डनं यमुनावर्णनचम्पूश्चेत्येवं त्रयोदश ।

१ **प्राणाभरणम्**—पद्यमयोयं ग्रन्थः । अत्र च प्राणनारायणाख्यस्यश्रीकामरूपदेशाधिपतेःप्रशंसा समुल्लसति । काव्ये चात्र तेनैव निर्मिता काचन टिप्पन्यप्यस्ति यया तत्तत्पद्यगता अलङ्कारध्वन्यादयः सम्यगवबोद्धुं शक्यन्ते विज्ञायते च श्रीमतः पण्डितरायजगन्नाथस्याद्वितीयं कवित्वम् । अत्र च प्रथमपद्ये—

> **विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमा**
> **भूपालाः कमलाविलासमदिरोन्मीलन्मदाघूर्णिताः ।**
> **आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-**
> **स्वर्वामाधरमाधुरीमधरयन्वाचां विलासो मम ॥**

इत्यनन्यसामान्यमधुरिममण्डिताया आत्मनो वाचो रसास्वादे पटुतमस्य

विद्राणैव गुणज्ञता समुदितो भूयानसूयाभरः
कालोयं कलिराजगाम जगतीलावण्यकुक्षिम्भरिः।
एवं भावनया मदीयकविते मौनं किमालम्बसे
जागर्तु क्षितिमण्डले चिरमिह श्रीकामरूपेश्वरः॥

इत्यात्मनः कविता समाश्वास्यते। एतेन च पद्येन जगतीतले कामरूपेश्वरस्यासाधारणं गुणज्ञत्वं पण्डितराजकवितारसास्वादलोलुपत्वं तेन च जगन्नाथस्य तदाश्रितत्वं स्फुटीभवति। इदमेव च प्रायेण जगन्नाथस्यादिमं काव्यमिति तर्कयितुं शक्यते। यदत्र क्षितितले विद्वांसः सन्तीत्यङ्गीकृतं पण्डितरायेण न पुनस्तृणीकृतं निःशेषमपि विश्वं यथा दिगन्ते श्रूयन्तइत्यादिभिः पद्यैः। क्रमशो ह्यधिगताशेषविद्यावैशारद्यः सर्वानपि पण्डितानाकिञ्चिज्ज्ञान्मेने जगन्नाथ इत्येव युक्तिसहं वचनम्।

माहात्म्यस्य परोऽवधिर्निजगृहं गम्भीरतायाः पिता
रत्नानामहमेक एव भुवने को वाऽपरो मादृशः।
इत्येवं परिचिन्त्य मास्म सहसा गर्वान्धकारंगमो।
दुग्धाब्धे भवता समो विजयते श्रीप्राणनारायणः।

एतेन च कामरूपेश्वरस्य श्रीप्राणनारायण इत्यभिधानं स्फुटीभवति। प्रतीपालङ्कारघटितश्चायं मनोहरः श्लोकः। केचित्त्विममुपमाविशेषमपरे चातिरिक्तमेवालङ्कारं मन्यन्त इति प्रोक्तं जगन्नाथेन व्याख्यायाम्।

अत्रत्येन चैकेन पद्येन श्रीजगन्नाथावसरे पट्टिशयुद्धप्रचारो विशेषत आसीदिति प्रतीयते यथा—

भुजभ्रमितपट्टिशोद्दलितदृप्तदन्तावलं
भवन्तमरिमण्डलक्रथन पश्यतः सङ्गरे
करालकुलिशाहतिस्फुटविभिन्नविन्ध्याचलो
न कस्य हृदयं झटित्यधिरुरोह जम्भाहितः॥ इति॥

अत्र स्मरणालङ्कारोऽनुगुणारचना च निकाममाह्लादयति मनः सहृदयानाम्। एतत्काव्यगतेनोपान्त्यपद्येन च किमपीतिवृत्तं विशदीभवति।

तथाहि। कामरूपेश्वरः प्राणनारायणमहीपालः कविरासीत् तस्य च कविता जगन्नाथरायस्य नयनगोचरतामापन्नास्ताश्चावलोक्य प्रसन्नात्मा जगन्नाथः क्षितिपतिं वर्णयामासेति। एतेनैव च पद्येन जगन्नाथस्यात्मनो वैदुष्यंप्रति महीयानहङ्कारः प्रस्फुट एवावगम्यते। तच्च पद्यम्——

**तैलङ्गान्वयमङ्गलालयमहालक्ष्मीदयालालितः**
**श्रीमत्पेरमभट्टसूनुरनिशं विद्वल्ललाटन्तपः।**
**सन्तुष्टः कमताधिपस्यकवितामाकर्ण्य तद्वर्णनं**
**श्रीमत्पण्डितराजपण्डितजगन्नाथो व्यधासीदिदम्॥**

एतेनैव च पद्येनास्माभिः प्रकाशितपूर्वायाः पडितराजविषयिण्या दिल्लीश्वरो वा जगदीश्वरो वेति पद्यमूलिकाया आख्यायिकायाः सम्भवो मन्थरतरत्वमुपयाति। यदि हि जगन्नाथो दिल्लीश्वरादन्यान्नृपालानवमन्यते स्मेति स्वीक्रियेत तदा कामरूपेश्वरस्य श्रीप्राणनारायणस्य तेनैव विहितमिदं वर्णनमननुरूपभावमावक्ष्यति। प्रतीमश्चामुना पद्येन दिल्लीवल्लभाश्रयणोत्तरमेव श्रीमता जगन्नाथेनैतत्काव्यं प्रणीतमिति यतोऽत्र पण्डितराज इति तेनात्मा विशेषितः पण्डितराजपदं च तेन दिल्लीश्वराच्छहाजहानभूपालादेवाधिगतमिति च प्रादर्शि सप्रमाणमेवास्माभिः प्राक्। अतो दिल्लीपतिमाश्रितवताऽपि जगन्नाथेन गुणैकपक्षपातिनो हिन्दुभूपाला नैवावामन्यन्तेति प्रतिपत्तव्यम्। दिल्लीपतिसमाश्रयणोत्तरमेवास्यप्रणीततया च नेदमादिमं काव्यमिति च प्रतीयते। ततश्च दिल्लीश्वराश्रयणात्प्राक्प्राणनारायणमहीपालमेवावलम्बे जगन्नाथ इति केषाञ्चिद्वचनं निर्मूलमिव प्रतिभाति।

काव्यं चैतत्त्रिपञ्चाशता पद्यैः समाप्तिमापन्नम्। अतश्च काव्याज्जगन्नाथस्यालङ्कृतिशास्त्रपारङ्गमत्वं सुविशदीभवति।

**२ अमृतलहरी**——एकादशपद्यात्मकं काव्यमेतत्। अस्य चेदमादिमं पद्यम्—

मातः पातकपातकारिणि तव प्रातः प्रयातस्तटं
यः कालिन्दिमहेन्द्रनीलपटलस्निग्धां तनुं वीक्षते।
तस्यारोहति किं न धन्यजनुषः स्वान्तं नितान्तोल्लस-
न्नीलाम्भोधरवृन्दवन्दितरुचिर्देवो रमावल्लभः॥ इति

अत्र चान्तिमे पद्ये अयं पण्डितराजेन श्रीजगन्नाथशर्मणा। स्तवः कलिन्दकन्याया निर्मलो निरमीयतेति तेनात्मनः पण्डितराज इति शाहाजहानाख्ययवनभूपाल्लब्ध उपाधिरुपन्यस्तस्ततश्च दिल्लीश्वराश्रयणोत्तरमेवायमपि स्तवो व्यरचीति प्रतीयते। एतेन च स्तवेनैतत्प्रणयनावसरे जगन्नाथचेतसो राजसेवाया उद्वेगोनुमीयते। अत्र हि तृतीयपद्ये—

दानान्धीकृतगन्धसिन्धुरघटागण्डप्रणालीमिल-
द्भृङ्गालीमुखरीकृताय नृपतिद्वाराय बद्धोञ्जलिः।
त्वत्तीरे फलमूलशालिनि मम श्लाघ्यामुरीकुर्वतो
वृत्तिं हन्त मुनेः प्रयान्तु यमुने वीतज्वरा वासराः॥

इति राजसेवाया अनभीष्टत्वं द्योतितमेतेन। भगवत्यां गङ्गायां श्रीमतो जगन्नाथरायस्य विशिष्टा प्रीतिरिति तु यदुच्यते कैश्चित्तन्न हृदयङ्गमामिति चैतदादिस्तवावलोकनेन सुदृढीभवति बुद्धिः। यथाहि गङ्गालहर्यां कृतं प्रायश्चित्तैरलमथ तपोदानविभवैरित्यादि भगवत्या भागीरथ्याः पापपनोदनपटुत्वम्प्रत्यपादि तथैवात्रापि दृश्यते। यथा सप्तमपद्ये—

स्वर्णस्तेयपरानपेयरसिकान्पाथःकणास्ते यदि
ब्रह्मघ्नान्गुरुतल्पगानपि परित्रातुं गृहीतव्रताः।
प्रायश्चित्तकुलैरलं तदधुना मातः परेताधिप-
प्रौढाहङ्कृतिहारिहुङ्कृतिमुचामग्रे तव स्रोतसाम्॥ इति॥

३ सुधालहरी—आदित्यस्तवात्मकमेतत्काव्यमस्य च त्रिंशत्पद्यानि। एतदवलोकनेन जगन्नाथपण्डितरायस्यान्यादृशोऽसामान्यः कविभावः स्फुटीभवति। अन्येषु काव्येष्विवात्र न माधुर्यगुणप्रायैव रचना। यद्यपि चात्रपरिस्फुरति भयिष्ठमोजस्तथापि पदेषु नार्थग्रहणाय हठात्कारोत्रांशतोऽपि व्यधायि

पण्डितराजेन । किञ्चात्रार्थालङ्कारेष्विव शब्दालङ्कारेऽनुप्रासे भूयसी दृश्यते ऽनुकम्पा जगन्नाथरायस्य । वर्णनानि च कानिचिदत्रत्यान्यतिमात्रमनोरमाणि। अयं चास्य काव्यस्यादिमः श्लोको यत्र मालया हेत्वलङ्कार उपनिबद्धो निकाममावहति सौभाग्यम् । यथा—

उल्लासः फुल्लपङ्केरुहपटलपतन्मत्तपुष्पन्धयानां
निस्तारः शोकदावानलविकलहृदां कोकसीमन्तिनीनाम् ।
उत्पातस्तामसानामुपहतमहसां चक्षुषां पक्षपातः
सङ्घातः कोऽपि धाम्नामयमुदयगिरिप्रान्ततः प्रादुरासीत् ॥ इति ॥

पद्मरागारक्तरोचिषां च प्राभातिकानामहस्करकिरणानामुपर्वर्णनमेतद्दृश्यतां रसिकैः—

आलेपा हिङ्गुलानामिव धरणिभुजामच्छसौधाग्रमौलि-
ष्वग्रेषु क्ष्मारुहाणामभिनवविलसत्पल्लवोल्लासलीलाः ।
प्रौढप्रालेयपुञ्जोपरि चितखदिराङ्गारभारा इवारा—
त्पारावारात्प्रयान्तो दिनकरकिरणा मङ्गलं नः क्रियासुः ॥ इति ॥

यद्यप्यनुप्रासबाहुल्यमत्रानुपदमेव प्रत्यक्षीभवति तथापि विशेषतः प्रादुर्भूतं तत्केषुचित्पद्येषु । तेषु च पद्यमेकमुपहारामो रसिकेभ्यः । यथा—

गीर्वाणग्रामणीभिर्गगनतलगतैर्गीर्भिरुद्गीथगाभि[1]—
र्गन्धर्वैश्चापि गीता गुणगणगरिमोद्गारिगाथासहस्रैः ।
गाहं गाहं गृहालीरगतिकगदिनां गन्धयन्तो[2] गदार्ति
ग्लानिग्रामं ग्रसन्तां ग्रहरुचिगुरवो गोपते[3]र्गो[4]विलासाः ॥ इति॥

(क्रमशः)

---

१ उद्गीथं सामवेदस्य कश्चन भागः २ गन्धयन्तो नाशयन्तः ३ गोपतिः सूर्यः

# वत्सरान्ते विज्ञप्तिः।

अयि भो प्रियमहाभागाः संस्कृतचन्द्रिकावाचकाः अवसितः खल्वयमनया संख्यया भगवतः श्रीचन्द्रचूडस्य श्रीमतां भवतां चासाधारणयाऽनुकम्पया चन्द्रिकायाः षष्टः खण्डः। नूनमेतदतिमात्रं कष्टं कर्म यन्नाम प्रतिमासमेवंविधायाः पत्रिकाया नियतकालं प्रकाशनम्। तत्र च विनावाचकमहाशयानुग्रहं नैव कर्मैवंविधं निरन्तरायं प्रचलतीति नैव व्यस्मराम न विस्मरामो नापि विस्मरिष्यामः। किन्तु कर्मण्यत्र दयावद्भिः सहृदयैर्वाचकमहाशयैरपि नैवोदासितव्यमित्यपि प्रार्थयामः। अत्र च कोल्हापुरे प्रकाश्यमानायाश्चन्द्रिकाया पूरितमिदानीं वत्सरद्वयम्। तत्र च भूयसां महाभागानां नैष्कारुण्यं चन्द्रिकां विघातयितुं प्रावर्तत। एतच्च नैष्कारुण्यं पैशुन्यापरपर्यायमेव यन्न सहृदयः कश्चिदपि स्वीकुर्यात्। निवेदितमेव गतवत्सरावसानेऽस्माभिर्यद्वत्सरारम्भादेकादशसंख्यास्तूष्णीं स्वीकृत्य मूल्यार्थं व्ही. पी. द्वारा प्रेरितां प्रतिन्यवर्तयन्केचन महोदारा इत्यहो पराकाष्ठा सौजन्यस्य। प्रियमहाभागाः विचार्यतां तावन्निपुणं यदि नामैवंविधैवासाधारणा करुणा भूयसां मनांस्यलङ्कुर्यात्तदा कथं नाम निराबाधमेव चन्द्रिका प्रचारयितुं शक्येत। तथापि स्वीकृत्यापि महीयसीं हानिं नोज्झित्वा च धैर्यं वत्सरेऽत्र चन्द्रिकां प्राचारयाम। गतवार्षिकं च तत्तेषां महोदाराणां चरितं नास्मन्मनस्यतिमात्रमाश्चर्यं जनयामास। तत्र हि वत्सरे विनाप्यनुज्ञां केषांचिद्रसिकतया प्रतीतानां सकाशे चन्द्रिकां प्रैरयामेति। तथापि आदर्शार्थं प्रेरितायां पत्रिकायां यदि नैषा रोचेत तदा प्रतिनिवर्त्यतामियमेव संख्या अन्यथा श्रीमतामप्रतिषेधात्मिकामनुमतिं मन्वाना वयं ग्राहकश्रेण्यां श्रीमतां नाम निवेशयिष्याम इति न्यवेदयाम।

दुर्भाग्यं वराक्याश्चन्द्रिकायाः । अत्र च संवत्सरे प्रथमतोऽस्माभिर्मूल्यप्रार्थनापत्राणि प्राहीयन्त ततोऽप्यननुगृहीतायां ग्राहकमहाभागैश्चन्द्रिकायां तदनुग्रहमन्तरा च दुष्प्रचारामेतामवलोक्यानन्यगत्या व्ही. पी. द्वारैतस्याः प्रैषयाम संख्यां दशमीम् । तथापि बत नैवानुगृहीताः स्मः कैश्चित् । प्रतिनिवर्तिता हि कैश्चिन्महाशयैः संख्याः । तेषां च नामानि यथावसरं प्रकाशयिष्यामः । भवतु नमस्तेभ्यो महोदात्तचरितेभ्यो यैरात्मनः स्वरूपमाविष्कुर्वद्भिर्यशसोऽपि द्रव्यमेव बहुमन्वानैश्च प्रतारकस्वभावमवबोधिताः स्मः।

प्रियमहाभागाः गतवत्सरे खल्वेषा चन्द्रिका प्रदत्तावलम्बना वङ्गदेशीयप्रधानविद्याधिकरणिकेन । किन्तु जिह्रेति नश्चेतस्तद्वृत्तं कथयितुं यदतीतप्रायेऽपि वत्सरद्वये न चन्द्रिकामूल्यमस्मत्करतलमापतितम् । तेन च महाभागेन शतंचन्द्रिकाः प्रतिमासं प्रहेतुमन्वज्ञायि । तत्र च षष्टिः प्रतिपाठशालमेकैकेति प्रेषणीयेति चाज्ञप्तं तेन । तथा च प्रेरितायामप्यस्यां दैवदुर्विपाकाद्वाभवितव्यतयैव वैवंविधस्य वृत्तस्य सौजन्यातिशयाद्वाऽध्यापकमहाशयानां नाधिगतानि बहूनां शिक्षकमहाशयानां चन्द्रिकाप्राप्तिपत्राण्यस्माभिः । प्रतिमासं सम्यग्द्विधा त्रिधा च परीक्ष्य प्रेरितास्वपि संख्यासु वत्सरान्ते कैश्चित्संख्यामेकामारभ्य संख्यादशकं यावन्नाधिगतास्माभिश्चन्द्रिकेति प्रेरितानि पत्राणि । न जानीमः सर्वेभ्योऽपि समकालमेव प्रेरितायामेतस्यां कथमेषा कैश्चिदेवाधिगन्तव्या न तु सर्वैरिति कथं च पत्राणि सर्वैरप्यधिगम्यन्त इत्यपि नैव शक्यते ज्ञातुम् । नूनं कर्मण्यत्र यावांश्चन्द्रिका प्रेरणव्ययस्तावानेव पत्रप्रेरणव्ययः संवृत्तोऽस्माकम् । एवं विधेन च व्यापारेण कामपि हानिमुपादत्ते सम्प्रति चन्द्रिका । अन्ते च यद्द्रव्यं विद्याधिकरणिकेन दातुं प्रत्यश्रावि नैव तदद्यापि चन्द्रिकायां कृपामृतं वर्षतीत्यहो भाग्यं चन्द्रिकायाः ।

वत्सरेऽत्र चन्द्रिकां प्रचारयितुं विशेषतः प्रायत्यतास्माभिः वङ्गदेशी-

प्राहैष्म तेषां चाचरितेनासीदस्माकं प्रत्याशा यदचिरादेव सावलम्बनतामारोक्ष्यति वराक्येषेति किन्तु नाद्यापि सा सफलीभूता प्रत्याशा। एवमस्याः साहाय्यार्थं काश्मीरजयपूरमैसूरुत्रिवेन्द्रमत्रावणकोराद्यधीश्वराः प्रार्थ्यन्त। आवेदिताश्च श्रीमत्परमहंसपरिव्राजकाचार्याद्यनेकबिरुदावलिभ्राजमानाः शृंगेरिमठाधिष्ठिताः श्रीजगद्गुरुपूज्यपादाः। किन्तु बलवती भवितव्यता नाद्यापि विमुञ्चत्येताम्।

अत्र चैतन्नांशतोऽपि विस्मर्तुं योग्यं यद्वत्सरेऽस्मिन्संशायितप्रायजीविता चन्द्रिकाऽस्माकं प्रियवयस्येन महोद्यमेन कल्याणभाजनेन झांशीनिवासिना **श्रीमहावीरप्रसादद्विवेदि**महाशयेनैव प्रत्युदजीविति। अहो एतस्य महाभागस्याकारणबन्धुत्वमस्मासु। एतत्कृतां चोपकृतिमाजीवितं नैव विस्मरिष्यामः।

अथेदानीमेतन्निवेद्यते यत्केवलमस्यास्तपस्विन्याश्चन्द्रिकाया वाचकानुग्रहमात्रनिबन्धनं जीवितमिति तैरेवेयं यावच्छक्यं समवलम्बनीया। गतवत्सरापेक्षया च वत्सरेऽस्मिंस्तेषामस्यामनुग्रहः सुखाकरोति न श्चेतः। एतां च प्रतिदिनमधिकाधिकमभ्युदयमारोपयितुं प्रयतेरन्वाचकमहाशया इति बलीयसी नः प्रत्याशा। अथ यदि एकैकेन वाचकेन नव्य एकैको वाचकः सम्पाद्येत तदापिनिरन्तरायमेवैषा प्रचलेदित्यत्र नास्त्यस्माकमंशतोऽपि सन्देहः। तद्विज्ञाप्यते विधीयतां यथोचितमिति।

वर्षेऽस्मिन्मुद्रालयपरिवृत्यादिना नानाविधेन प्रतिबन्धकेन चद्रिकां यथावसरं प्रेरयितुं न प्राभाव्यस्माभिरिति दुःखितं लज्जितं नश्चेतः। आशास्महे पुनरचिरादेवेयं यथावसरं प्रकाशयितुं शक्येतेति। अन्येषां यन्त्रालये मुद्यमाणा चेयं कदा वा यथावसरं प्रकायितुं शक्येतेति यद्यपि सुनिश्चितं नशक्यमभिधातुं तथापि प्रयतामहे वयं तथा कर्तुम्। सति प्रसङ्गे मुद्रायन्त्रान्तरे संख्यामेकां पृथक् प्रकाश्य प्रवर्तमानां वाचकमहाशयानां

[illegible] इति।

आगामिनि च वत्सरे प्रतिमासं कश्चन दार्शनिकः प्रबन्धो द्वितीये तृतीये चावरणपृष्ठे देशेतिवृत्तानि प्रकाश्येरन् । अन्ये च भूयांस उपयुक्ताः प्रबन्धाः प्रकाश्येरन्निति च निवेद्यते ।

अस्मिन्वर्षे वङ्गदेशात्प्रकाशमानो विद्योदयः केरलविभागे प्रतिमासं त्रिःप्रादुर्भवन्विज्ञानचिन्तामणिर्ग्वाल्हेरनगरात्प्रकाश्यमाने च काव्यकादम्बिनीविद्वत्कलाख्ये पत्रिके इति संस्कृतपत्राण्युपास्थितान्यानन्दयन्त्येकान्ततो नश्चेतः एतानि च चिरायालङ्कुर्वन्तु भारतं वर्षमिति भगवन्तं शशाङ्कशेखरमभ्यर्थयामः ।

अथ चन्द्रिकायां प्रकाशयितुं ये केचन महाभागाः प्रबन्धादिकं प्रेरयेयुस्तैः स्वीया मनोहराः प्रबन्धाः समग्रा एव प्रेर्याः असमग्रास्तु प्रकाशयितुमशक्या एव । तेषां चाप्रकाशने प्रधानं कारणमसमग्रत्वमेवेति चावबोद्धव्यम्। अवसितः खल्वयं वत्सरस्तदतः परं यैर्नानुग्रहीतुमिष्यते संस्कृतचान्द्रिका तैः संख्यामेतां प्राप्यैवासौ प्रत्याख्येया। न पुनर्व्हीं.पी.परावर्तयतां सरणिरनुसरणीया । अनुचिततमो ह्ययं पन्था यद्विश्वास्य प्रतार्यते विस्रब्धः । यदि तु न प्रत्याख्यानपत्राणि प्रेर्येरंस्तदा सर्वानपि ग्राहकानाकलयिष्यामः ।

यैस्तु प्रतारिताः स्मस्तेषां दमनाय राजनियमोऽनन्यगत्याचिरादेवावलम्बिष्यते । इति शिवम् ।

---

# साकारोपासना ।

(पूर्वतोऽनुवृत्ता)

यथाहि क्षितिकुहरे निश्चितनिहितनिधानमिन्द्रियागोचरत्वादेव नास्माकं व्यावहारिकसुखसम्पत्त्यै प्रभवति तथेश्वरोपि निराकारः सदासन्निहितोऽपि

विचार्यतां तावन्मनसि श्रद्धया स्नेहेन भक्त्या च लब्धव्यं वस्तु नान्येनोपायेन लब्धुं शक्यते गन्धग्रहणे नासिकैव पटीयसी न तु सहस्रं पद्मचक्षुरपि पातालमूले स्थितं वस्तु गिरिशिखरे न लभ्यते दक्षिणसागरे-वृत्तं वस्तु निरन्तरमुत्तरस्यां युगसहस्रमनुसन्दधानेनापि न लब्धुं शक्यते जलेन निर्वाह्यं कर्मानलेन तेन च निर्वाह्यं जलेन नैव निष्पद्यते ।

अपि च यद्वस्तुलाभे यादृशी प्रक्रिया यादृशं स्थानं यथाविधः कालश्चापेक्ष्यते तदन्यया प्रक्रियया स्थानेन कालेन च तल्लाभः कथमपि नैव सम्भवेत् । विचार्यमेतन्मनसि—सर्वस्मिन्नेव गोशरीरे क्षीरं सञ्चरति किन्तु हस्ताभ्यां स्तनस्याकर्षणादेव न तु च्छेदात् स्तनादेव न तु जिह्वादितो यथासमयमेव नत्वकालतः क्षीरं प्रस्नौति तद्वत् भक्त्या श्रद्धया प्रेम्णा विश्वासेन शास्त्रोक्तपूजनादिना च यदुपपद्यते कार्यं न तदन्यया युगसहस्रक्रिययापि तत्सम्पद्यन्ते ।

अत एव निराकारस्य शब्दस्य कल्पितवर्णवत् कल्पिताभिः शिवदुर्गा-प्रभृतिभिर्मूर्तिाभिर्मनसि प्रसन्ने शास्त्रोक्तस्थानं भक्तिश्रद्धाप्रेमादिभिश्च शास्त्रोक्तैरेवेश्वराराधनेनतत्साक्षात्कारः शक्यते लब्धुम् ।

ईश्वरो हि सर्वेषां जानाति मनः प्रवृतिं च बुध्यते सर्वज्ञः । अतः केवलं मुखत एव स्तोत्रपाठेन ललाटे च कृत तिलकेन सर्वाङ्गे च समूढ-रुद्राक्षभारेण भूरिणा च नैवेद्येन सदीर्घश्वासं नारायण नारायण शिवशिव दीननाथ इत्याद्युक्तेन च न प्रतारणीयोऽसौ धूर्तभक्तैः । न वा सप्ताहमध्ये रविदिवसे केशविन्यासादिना विजातीयवेशेन च सज्जीभवन्तः पट् किट् मिडिति शब्दायमाने च चर्मपादुके परिदधत उच्चैरासन्दीषु दीर्घवर्तुलखट्टि-कासु चोपविशन्तो मन्दुरास्तृतसर्वतःकुट्टिमेषु उपासनागृहेषु प्रविशन्त एव मुद्रितचक्षुषो ब्रह्मवादिनः हे नाथ दीनबन्धो त्वं निरञ्जनस्त्वं हि सहस्रसूर्यवत्पुरो विराजसि किन्तु ज्ञानिभिर्नास्माभिरवलोक्यस इत्यादि

न त्वां विना क्षणमप्यन्यं जानीमो नान्यं स्नेहयामो नान्यं श्रद्दधीमो नान्यं नः शरणं तुभ्यमेवात्मानमुत्सृज्यामह इत्यादि विश्वस्ततया तमीश्वरं ज्ञापयितुं शक्नुम इति ।

अपि च यः खल्वीश्वरः स्वशक्त्याऽऽत्मानमुत्तुङ्गं पर्वतमपारसागरं परमाण्वादींश्चासृजत् स पुनर्भक्त्याराध्यः स्वाभीष्टः शिवो दुर्गा रामः कृष्णश्च भूत्वा नास्माकं पुर उपस्थातुं शक्नोतीति न श्रद्धेयं वचः । यदि पुनस्तथा न शक्नुयात्तर्हि कथं तं सर्वकर्तारं सर्वज्ञं सर्वान्तर्यामिणं वा मन्येमहि किमिति वा भक्तानुग्रहकातर इति तं पूजयेम ।

अपि चास्माकमिन्द्रियाणामयमेव धर्मो यद्विना हि स्थूलमालम्बनं सूक्ष्मं प्रत्यक्षीकर्तुं नार्हन्ते । यथाऽनाकृतेः शब्दस्य स्थूलानां कण्ठताल्वादीनां साहाय्येनैव श्रवणप्रत्यक्षं जायते । तथा रूपस्यापि न स्वातन्त्र्येणोपलब्धव्याऽऽकृतिर्वर्तते किन्तु घटादिस्थूलवस्त्वालम्बनादेव शुक्लपीतनीललोहितादयो वर्णा नयनगोचरीभवितुमर्हन्ति । यदि वयं जलीयकीटाणुं द्रष्टुमिच्छामस्तर्हि तच्चर्मचक्षुषा न साधयामः किन्त्वणुवीक्षणयन्त्रसाहाय्यमपेक्ष्यते । तथा अलोकसाधारणं मनोनयनकमनीयं देवविग्रहं पुरः संस्थाप्य शास्त्रानुमोदितयानवविधया* भक्त्या संशुद्धचेतसः साकारं तमीश्वरं प्रत्यक्षीकृत्य विदित्वा च नित्यशुद्धबुद्धमुक्तस्वभावं सच्चिदखण्डानन्दमतिमृत्युं लभेमहि प्रशान्तमनसो वयमिति ।

स्वकपोलकल्पितया मनोगठितया अशास्त्रीयभक्त्या पुनरतीवानर्थः सम्पद्यते नित्यसुखं तु सुदूरतः पराहन्यते । तथा च स्मर्यते

श्रुतिस्मृतिपुराणानि पञ्चरात्राणि हापयन् ।
अत्युत्कटा हरेर्भक्तिरनर्थायैव कल्प्यते ॥ इति ॥

शिवम् ।

---

अप०—[ स्वयं हसन् सर्वानपि हसतः पश्यन् ] सत्यं सत्यं धन्यो भवान्योऽल्पेनैव वयसा एवं विदेशभ्रमणैश्चातुरीं कलयति ।

तान०—धन्य एव यदि युष्मादृशैरभिनन्द्ये ।

अप०—[ क्षणानन्तरम् ] अथ भवान्मूर्छनाप्रधानं गायति तानप्रधानं वा ।

तान०—ईदृक्षं तादृक्षं च ।

अप०—[ क्षणानन्तरम् ] अस्तु आलप्यतां कश्चिद्रागः ।

तान०—[ किञ्चिद्विचार्य ] आज्ञा चेदेकां रागमालागीतिं गायामि यत्र प्रत्याभोगं नवीन एव रागो भवेदेकेनैव च ध्रुवेण सङ्गच्छेत तत्तद्रागनामानि च तत्रैव प्राप्येरन् ।

अप०—आः किमेवम् । ईदृशं तु गानं न प्रायः श्रूयते तद्गीयताम् ।

ततस्तानपूरिकायाः स्वरान्संमेल्य पातितवामजानुस्तानपूरिकातुम्बं क्रोडे निधाय दक्षपादस्योत्थितजानुनि च दक्षहस्तकूर्परस्थापनपुरःसरं तेनैव हस्तेन तर्जन्यङ्गुल्या तानपूरिकां रणयन् स्वकण्ठेनापि त्रीन् ग्रामान् सप्तस्वरांश्च समधात् । तन्मात्रश्रवणेनैव मुग्धेष्विवाखिलेषु *रागमालागीतिमगायत् ।

सखि हे नन्दतनय आगच्छति ॥ सखि ॥
मन्दं मन्दं मुरलीरणनैः समधिकसुखं प्रयच्छति ।
भैरवरूपः पापिजनानां सतां सुखकरो देवः ।
कलित ललितमालतीमालिकः सुरवर वाञ्छितसेवः ।
*सारङ्गैः †सारङ्गसुन्दरोदृग्भिर्निपीयमानः ।

---

* यस्यां प्रतिचरणं रागभेदो भवति रागनामानि च श्लेषमुद्रया तत्रतत्रोपलभ्यन्ते सा रागमालेत्युच्यते ।

* सारङ्गैः

चपलाचपलचमत्कृतिवसनो विहितमनोहरगानः।
श्रीवत्सेन लाञ्छितो हृदये श्रीलः श्रीदः श्रीशः।
सर्वश्रीभिर्युतः श्रीपतिः श्रीमोहनो गवीशः।
गौरीपतिना सदा भावितो बर्हिणबर्हकिरीटः।
कनककशिपुकदनो बलिमथनो विहतदशाननकीटः॥

अथैतावदेव श्रुत्वातितरां प्रसन्नेषु पारिषदेषु ससाधुवादं वितीर्णकङ्कणे चापजलखाने तानरङ्गोऽपि सप्रसादं तानपूरिकां भूमौ संस्थाप्यापजलखानस्य गुणग्राहितां प्रशशंस।

अथापजलखान उवाच। कथ्यतामस्मिन्प्रान्ते भवादृशानां गुणग्राहकाः के सन्ति के वा कविताया: संगीतस्य च मर्मावगच्छन्तीति। ततस्तानरङ्गोऽचकथत् को नामापरः शिववीरात् स एव राजनीतौ निष्णातः। स एव सैन्धवारोहविद्यासिन्धुः। स एव चन्द्रहासचालने चतुरः। स एव मल्लविद्यामर्मज्ञः। स एव पण्डितमण्डलमण्डनः। स एव बाणविद्यावारिधिः। स एव धैर्यधारिधौरेयः। स एव वीरवारवरः। स एव पुरुषपौरुषपरीक्षकः स एव दीनदुःखदावदहनः। स एव स्वधर्मरक्षणसक्षणः। स एव विलक्षणविचक्षणः। स एव च मादृशगुणिगणगुणग्रहणाग्रह्यस्तीति। अथापजलखाने तत्किं शिव एष एवं गुणिगणविशिष्टोऽस्ति। एवं वा वीरवरोऽस्तीति सचकितं सभयं सतर्कं सरोमोद्गमं च कथयति किञ्चिद्विचार्यैव नीतिकौशलपुरःसरं तानरङ्गः पुनरवादीद्भगवन् सामान्यराजभृत्यस्य पुत्रः शिववीरो यदि नाम नाभविष्यत्स्वयमीदृश ऊर्जस्वलस्तत्कथं स्वर्णदेशसदृशं सहचरं प्राप्स्यत्। कथं तद्द्वारा समस्तं कल्याणप्रदेशं कल्याणदुर्गं च स्वहस्तगतमकरिष्यत्। कथं तोरणदुर्गभोगभाजनतामकल्पयिष्यत्। कथं तोरणदुर्गाद्दक्षिणपूर्वस्यां पर्वतस्य शिखरे महेन्द्रमन्दिरखण्डमिव धर्षि-

तारिवर्गं डमरुहुडुक्कारतोषितभर्गं रायगढनामकं महादुर्गं व्यरचयिष्यत्। कथं वा तपनीयभित्तिकाजटितमहारत्नकिरणावलीवितन्यमानमहावितानवितितिविरोचितं प्रतापतापितपरिपन्थिनिवहं चन्द्रचुम्बनचतुरचारुशिखरनिकरं भुशुण्डिकाकिणाङ्कितप्रचण्डरक्षककुलविधीयमानपरःसहस्रपरिक्रमं धमद्धमद्दोधूयमानानेकध्वजपटलनिर्मथितमहाकाशं प्रतापदुर्गं निरमापयिष्यत्। कथं वागत एव शिववीर इति भ्रमेणापि सम्भाव्यास्य विरोधिषु केचन मूर्च्छिता निपतन्ति। अन्ये विस्मृतशस्त्रास्त्राः पलायन्ते। इतरे महात्रासाकुञ्चितोदरा विशिथिलवाससो नग्ना भवन्ति। अपरे च शुष्कमुखा दशनेषु तृणं सन्धाय साम्रेडं प्रणिपातपरम्परा रचयन्तो जीवनं याचन्त इति।

ततस्तस्य प्रतापमवगत्य किञ्चिदरुणनयन इव दक्षिणहस्ताङ्गुष्ठतर्जनीभ्यां श्मश्रुवग्रं परिमृजति यवनसेनापतौ तानरङ्कः पुनर्न्यवेदयत्परन्त्वद्य सिंहेन सह शिवस्य साम्मुख्यमस्ति तन्मन्य इयमस्तमनवेला तत्प्रतापसूर्यस्येति§। तत्कर्णे कृत्वा सन्तुष्ट इव सकन्धरकम्पं सेनापतिरुवाचाथास्य संग्रामे कस्य विजयः संभाव्यत इति। स उवाच श्रीमन्यदि शिवस्य साहाय्यं साक्षाच्छिव एव न कुर्यात्तद्विजयपुरस्यैव विजय इति। अथ सहासं सोऽब्रवीत्कोनाम खपुष्पायितः शशशृङ्गायितः कमठीस्तन्यायितः सरीसृपश्रवणायितो भेकरसनायितो वन्ध्यापुत्रायितश्च शिवोऽस्ति य एनं रक्षिष्यति। दृश्यतां श्व एवैषोऽस्माभिः पाशैर्बद्ध्वा चपेटैस्ताडयमानो विजयपुरं नियत इति। सकष्टमाकर्ण्य स्यादेवं भगवन्निति कथयति तानरङ्केऽभिमानपरवशः स स्वसहचरान्सम्बोध्य पुनरादिशद्भो भो योद्धारः सूर्योदयात्प्रागेव भवन्तः पञ्चापि सहस्राणि सादीनां दशापि च सहस्राणि पत्तीनां सज्जीकृत्य युद्धाय तिष्ठत। गोपीनाथपण्डितद्वाराहूतोऽस्ति मया शिववराकस्तद्यदि विश्वस्य स समागच्छेत्ततस्तु बद्ध्वा जीवन्तं नेष्यामोऽन्यथा तु सदुर्गमेनं धूलीकरिष्याम इति।

तदवधार्य समस्तककूर्चान्दोलनं यदाज्ञाप्यते यदाज्ञाप्यत इति वाचां धारासंपातैरिव स्नापयत्सु पारिषदेष्वकस्मादेव प्रविश्य सूदेनोक्तं श्रीमन्-न्यत्येति भोजनसमय इति । तच्छ्रुत्वा आ एवं किलैतदिति*सोत्प्रासं सविस्मस्यं सकूर्चोद्धूननं सोपबर्हताडनमुच्चार्य सपद्युत्थाय पुनरागम्यतामिति तानरङ्गं विसृज्य सेनापतिरन्तः प्रविवेश । तानरङ्गश्च यथागतं निववृते ।

इतस्तु प्रतापदुर्गे विहिताहारव्यापारे रजतपर्यङ्किकामेकामधिष्ठिते किञ्चित्तन्द्रापरवश इव गोपीनाथे शनैः शिववीर उपसृत्य तं प्रणम्योपाविशदवोचच्च । अहो भाग्यमस्माकं यदालयं युष्मादृशा भूदेवाः स्वचरण रजोभिः पावयन्तीति । अथ तयोरेवमभूवन्नालापाः ।

**गोपीनाथः**—राजन् कोऽत्र सन्देहः सर्वथा भाग्यवानसि । परं साम्प्रतं नाहं पण्डितत्वेन कवित्वेन वा समायातोऽस्मि किन्तु यवनराजदूतत्वेन । तच्छ्रूयतां यदहं निवेदयामि ।

**शिववीरः**—शिव! शिव! खलु खलु खल्वेवमुक्त्वा ¶ । येषां श्रीमतां चरणेनाङ्कितं विष्णोरपि वक्षःस्थलमैश्वर्यमुद्रयेव मुद्रितं विभाति । न तेषां ब्राह्मणकुलकमलदिवाकराणां यवनकैङ्कर्यकलङ्कपङ्को युज्यते यं श्रृण्वतोऽपि मम स्फुटत इव कर्णौ । तथापि कुलीना निरभिमाना भवन्तीत्यानीतश्चेत्कश्चित्संदेशस्तदेष आज्ञाप्यतां श्रीमच्चरणकमलचञ्चरीकः ।

**गोपीनाथः**—वीर कलिरेष कालः । यवनाक्रान्तोऽयं भूभागः । तन्नास्माकं तथा तानि तेजांसि यथा वर्णयसि । साम्प्रतं तु विजयपुराधीशवितीर्णां भूमिं भुञ्ज इति तदाज्ञामेव परिपालयामि तच्छ्रूयतां तदादेशः ।

**शिववीरः**—आर्य अवदधामि ।

---

इदं सरस्वती देवी भवते कण्ठभूषणम् ।
महेशग्रथितं प्रेम्णा ददाति गुणिने गुणि ॥

मल्लीमङ्गलमाल्यवत्तव यशो दिक्केलिहास्यायित-
क्कण्ठं हेडतु धीमतां नवगुणस्यूतं गिरां शिल्पिनाम् ।
दग्ध्वा शङ्करभालदृष्टिवदथो तेजश्छटैषा खरा
राजन् काममरिं करोत्वदयितां तस्याङ्गनां सत्वरा ॥२१

महेशस्याशिषा विष्णुः समुत्पाट्य स्वचक्रतः ।
सुदर्शनमिदं चक्रं ददाति तव शक्तये ॥

कविनामगर्भश्चक्रबन्धः ।

देवता तावदेकेष्टा तव तातावतक्षतु ।
धीरतातारधीगम्यादूनतातानदूरघम् ॥ २२ ॥

प्रवेशनिर्गमाभ्यामष्टदलपद्मबन्धः ।

---

२१ मल्लीति । दिशां स्त्रीणामिवेति भावः केलिहास्यं नर्महसितमिवाचरितवदिति दिक्केलिहास्यायितं । क्यङन्तादकर्मकतया कर्तरि क्तः । नवैरपूर्वैर्गुणैः सूत्रैरिव त्रिवृता त्रिगुणेन सूत्रेणेति भावः स्यूतं योजितं ग्रथितमिवेति भावः । तव यशो मल्लीमङ्गल-माल्यवत् मल्लिकापुष्पाणां मङ्गलप्रयोजनं माल्यमिव मालेव स्वार्थे यत् । गिरां शिल्पिनां वाचो ग्रथ्नतां धीमतां पण्डितानां कवीनामित्यर्थः कण्ठं हेडतु वेष्टतां गृह्णातु इति भावः । तवयशोऽधिकृत्य कवयः कण्ठेनोद्गायन्तु इति भावः । अथो समुच्चये तव खरा तीक्ष्णा एषा प्रसिद्धा तेजसः प्रातापस्य च्छटा दीप्तिः परम्परा सत्वरा त्वरया सह वर्तमाना सती शङ्करस्य भालदृष्टिवत् ललाटचक्षुरिव कामं यथेष्टं यथा स्यात्तथा अरिं शत्रु दग्ध्वा भस्मीकृत्य शत्रोरङ्गनां पत्नीं अदयितां दयितशून्यां विध-वामिति यावत् करोतु विदधातु । शङ्करस्य ललाटनेत्रं काममेव अरिं दग्ध्वा तस्या-ङ्गनां रतिं विधवां चकार । तव तेजश्छटा तु अरिं यथेष्टं दग्ध्वा तदङ्गनां विधवां करोत्विति श्लेषानुप्राणितोपमा ।

२२ देवतेति । देवता । तावत् । एका । इष्टा । तव । तात । अवतक्षत । धीरतातार-

एतत्पद्मापदेशेन पद्मं नाम महानिधिम् ।
पद्मा मातेव वात्सल्यात्करपद्मे ददाति ते ॥
उमा ददातु साऽऽराध्या शं पदे रक्षतादिह ।
सुसाया गानपाधीशज्ञानिभावा जयन्तव ॥ २३ ॥
उदेतु दिवपा वासा दक्षराशयगाऽनिशम् ।
याज्ञापदानन्तहसा धीध्यातजरसा सुभा ॥ २४ ॥

अश्वपदबन्धेन श्लोकद्वयम् ।

---

[ पूर्वपृष्ठादनुवृत्तम् । ]

हेतात वत्स धीरतातारधीगम्या धीरता धैर्यं तारः प्रणवः धीश्चिन्ता ताभिर्गम्या लभ्या ज्ञेया वा । दूनतातानदूः दूनस्य उपतप्तस्य भावो दूनता उपतापः दूनता च दूनता च दूनता च दूनतास्त्रय उपतापाः आध्यात्मिकाधिदैविकाधिभौतिका उपतापा इति फलितोऽर्थः तेषां तानो विस्तारः तं दूरयति निवारयतीति दूरशब्दाण्णिजन्तात् क्विप्ततः प्रथमैकवचनं दूनतातानदूः उपतापसमूहध्वसंकृत् । एका अद्वितीया इष्टा अभीष्टा देवता देवः तव अघं पापं दोषं वा तावत् [ वाक्यालङ्कारे ] अवतक्षतु तनूकरोतु विनाशयत्विति यावत् ।

२३ उमेति । आराध्या आराधनीया सा प्रसिद्धा उमा पार्वती देवी शं मङ्गलं ददातु । इह जीवलोके तव जयपदे जयस्थाने रक्षतात् रक्षतु च । कीदृशी सा सुसाया स्यति अन्तं करोति येन स सायोऽत्र षोऽन्तकर्मणीत्यस्माद्धातोः करणघञ् । शोभनाः सायाः सायकायस्याः सा तादृशी गानपा गानं स्तुतिगानं पिबति शृणोति इति गानपा । अधीशज्ञानिभावा अधिगतः प्राप्तः ईशस्य महादेवस्य ज्ञानिभावो ज्ञानित्वं ज्ञानमिति यावत् । यया सा तादृशी ।

२४ उदेत्विति । हे धीध्यातज धिया एकाग्रया बुध्या ध्यातश्चिन्तितोऽजो विष्णुर्येन तादृश अक्षरा अनश्वरा रमा लक्ष्मीः दिवं स्वर्गं पाति रक्षतीति दिवपः इन्द्रस्तस्य आवासाच्छयं हस्तं गच्छतीति शयगा तव हस्तगता सतीत्यर्थः अनिशं नित्यं उदेतु उन्नमतु वर्धताम् । या रमा अज्ञापदा अज्ञो मूर्खः अपदं अस्थानं यस्याः सा तादृशी तथा अनन्तो हसो हास्यं हासलक्षणं यस्याः सा अनंतहसा । अथवा अज्ञापदा अज्ञानां मूर्खाणामापदा व्यसनेन अनन्तो हसो हासजनिका प्रीतिर्यस्याः सा तादृशी

कुरङ्गनयना लक्ष्मीस्तुरङ्गपदबन्धनम्।
चतुरङ्गक्रीडनकं चक्रमेतद्ददाति ते ॥

अस्योद्धारस्तु अनुलोमेन पङ्क्तिक्रमेण प्रथमश्लोकस्य पाठः। द्वितीयश्लोकस्य पाठस्तु चतुरङ्गक्रीडायामश्वो यथा सार्धं द्विपदमुल्लङ्घ्य गच्छति तथाविधया गत्या १, ११, ९, १९ प्रभृतिचिह्नितेषु कोष्ठेषु चालनीय इति। दुष्करोयं बन्धः।

तारा तातततारातारावलाववलावरा।
तालावहाहावलाता तवहानिनिहावत ॥ २५ ॥

सर्वतोभद्रः।

एकैव दिक्षु सर्वासु पार्वतीवर्तता तव।
सर्वतोभद्रबिम्बस्थाकविसूक्तिरिवाद्भुता ॥
श्रीरामोऽघतमो वध्याद्धीरामोदक्षमोवत।
तवमोक्षद्रुमो दत्तां कावमोघतमोदयम् ॥ २६ ॥

मुरजबन्धः

---

२५ तारेति। तारा। तात। ततारातारावलाववला। वरा। तालावहा। आहावलाता। तव। हानिनिहा। वत। इति पदच्छेदः। हे तात वत्स ततारातारावलाववला अरातीनां वृन्दमारातं पादातादिवत् तद्वन्दार्थेऽण्। आरातस्य अरातिवृन्दस्य शत्रुवृन्दस्येत्यर्थः आरावः शब्दः सिंहनाद इति यावत्. ततो विस्तीर्णश्चासावारातारावश्चेति ततारातारावः तं लुनाति इति कर्मण्यण्। ततारातारावलावं व [ ब ] लं सारो यस्याः सा तादृशी। वरा श्रेष्ठा वरणीया वा। तालावहा तालं समरनृत्यस्य तालं कालक्रियामावहतीति तादृशी। आहावलाता आहावेन आहुत्या लाता गृहीता ला आदान इत्यस्मात्कर्मणि क्तः। तादृशी तारा महाविद्या बत हर्षे तव हानिनिहा हानिं क्षतिं निहन्तीति डप्रत्ययः। अस्तु इति शेषः।

२६ श्रीरामेति। धीराणां विदुषामामोदाय आनंदाय क्षमः शक्तो हितो वा धीरामोदक्षमः। मोदस्य निर्वाणफलस्य द्रुमोद्रुमवत् दाता श्रीरामस्तव अघं पापावहं तमस्त-

कुशीलवसमुद्गीतयशोमङ्गलसङ्गतः ।
श्रीरामस्येव ते राज्ये जायतां मुरजध्वनिः ॥
वासेनुतातव निरस्तदवापलावा ।
वालापवादरहिता स जयाभिधा वा ॥
वाधाभिया जलजतः किलसा रमा वा ।
वामा रसालसपदाऽस्तुततानुसेवा ॥ २७ ॥

राशिचक्रबन्धः ।

रमेव गौरी कीर्तिस्ते राशीभूय दिने दिने ।
राशिचक्रमपि स्पृश्याद्विप्रधीराशिषा सह ॥
देव जीव भवत्वेव देवदेवः शिवश्शिव ।
नवजीवनवर्षीव भवदावपिवस्तव ॥ २८ ॥

षोडशदलपद्मबन्धः ।

---

२७ वास इति । सा प्रसिद्धा रमा लक्ष्मीस्तव वासे गृहे रसालसपदा रसेन अलसं अन्यत्रगमनाशक्तं पदं चरणं यस्याः सा तादृशी अस्तु । कीदृशी सेत्याह । नुता स्तुता प्रशस्तेति यावत् । निरस्तदवा निरस्तो निवारितो दव उपतापो यया तवेति भावः । अपलावा अपगतो लावश्छेदोयस्याः ह्रासशून्या इत्यर्थः । वालापवादरहिता बालानामपवादो लक्ष्मीश्चञ्चलेति कलङ्कस्तेन रहिता त्यक्ता अचञ्चलेत्यर्थः । जलजतः किल वाधाभिया वा पद्मात्पीडाभियेव पद्मं रात्रौ निमीलति तदानीं तत्रावस्थानं कष्टकरमित्याशङ्कयेव तस्मात्तत्पद्मं परित्यज्य सजयाभिधावा जयेनसहवर्तमानोऽभिधावोभवदभिमुखधावनं यस्याः सा तादृशी । वामा सुन्दरी अथवा पद्मं प्रति वामा प्रतिकूला । ततानुसेवा तता विस्तृता अनुगता सेवा परिचर्या यस्याः सा तादृशी ।

२८ देवेति । हे देव राजन् भूदेवेति वा त्वं जीव शतं जीवेत्याशीः । नन्वत्र संसारे बहवस्तापाः सन्ति तान्भुक्त्वा दीर्घजीवितमपि कष्टकरमित्यत आह । हे शिव मङ्गलास्पद अनुकूलेति वा देवदेवो महादेवः शिवोऽनुकूलः सन्नवजीवनवर्षी नूतन-

अत्रैव षोडशदले तव हृत्कमलेऽमले।
विदले वसतु ध्यातो महेशोऽघानिषाशनः

मन्दाररक्तच्छविपुण्यपांशु
हेरम्बमाताच्छमुखेन्दुशोभा।
शस्तं पदं तेऽच्छलमब्जकाशिशि
स्यन्नामृतं यच्छतु मातृवेषा॥ २९॥

कवेराशीःसूचकोऽष्टदलपद्मबन्धः।

---

# सम्प्रमोदमङ्गीकारः।

गोस्वामिश्रीलक्ष्मणाचार्यनिर्मितो मुहूर्तप्रकाशः श्रीमद्विधुशेखरशर्मणा विरचितो यौवनविलासः श्रीमहेन्द्रनाथकविरत्नप्रणीतं भूदेवनिर्वाणं रतलामनगरात्प्रकाशमानस्य कलासंग्रहाख्यस्य सचित्रमासिकपुस्तकस्य तृतीयसंख्याचेति पुस्तकानि मिरतनिवासिना पण्डितश्रीसूर्यप्रसादशर्मवैद्यराजेन निर्मितं नयनामृताख्यमञ्जनं चास्मत्करतलमापतितम्। एतानि सानुग्रहमस्मभ्यं प्रेषयतां तेषां तेषां महाशयानां निरतिशयं प्रेम सहस्रशोऽभिनन्दामः।

---

२९ मन्दारेति। अच्छमुखेन्दुशोभा अच्छा निर्मला प्रसन्नेति यावत् मुखेन्दोर्मुखचन्द्रस्य शोभाकान्तिर्यस्याः सा तादृशी हेरम्बमाता गणेशजननी दुर्गा देवी तव मातृवेषासती मातुर्वेषमिव वेषं विधायेत्यर्थः ते तुभ्यं शस्तं सुखजनकं प्रशस्तं वा पदमधिकारं निजचरणं वा अच्छलमव्याजं यथा स्यात्तथा यच्छतु ददातु। पदं चरणं कीदृशं मन्दारपुष्पस्येव रक्ता लोहिता छविःकान्तिर्यस्य तादृशं। पदमधिकारंतु मन्दारैर्मन्दारपुष्पै रक्ता छविः कान्तिर्यत्र तादृशं पदं ऐन्द्रं पदमिति भावः तत्रैव देववृक्षस्य मन्दारस्य सत्वात्। पुण्यपांशु चरणपक्षे पुण्याः पावनाः पांशवो धूलयो यस्य। अधिकारपक्षे तु पुण्याः पुण्यगन्धयः पांशवः पुष्परागा यत्र तादृशम्। अब्जकाशि चरणपक्षे पद्मवत्काशते दीप्यत इति अधिकारपक्षे तु अब्जवत्चन्द्रवत्काशते स्वयं प्रकाशत इति। स्यन्नामृतं चरणपक्षे स्यन्नं स्पन्दितं अमृतं मुक्तिर्यस्मात्तादृशं। अधि-

# समालोचना ।



**मुहूर्तप्रकाशः**—एतन्नामश्रवणेनैव किमत्रप्रतिपाद्यमिति तत्कालमेवावबोद्धुं शक्यते सर्वैः । किन्तु मुहूर्तमार्तण्डमुहूर्तमालाप्रभृतय इव सर्वेषां मुहूर्तानां शास्त्रार्थप्रतिपादक एवायमन्यतमः प्रबन्धः स्यादिति भ्राम्येन्मतिः केषांचित् । स च भ्रम एतत्पुस्तकावलोकनेन भ्रम एव स्यात् । अत्र हि गर्भाधानादिसंस्काराणां यात्रादीनां द्विलाणांचान्येषां कर्मणां मुहूर्ता एतद्वार्षिकाः सर्वेऽपि प्रतिपादिताः । यथा दैवज्ञपञ्जिकासु विवाहोपनयनानां मुहूर्तदिनानि निर्दिश्यन्ते एवमेवात्रान्येषामपि संस्काराणामेतद्वर्षे समुचितानि दिनानि निर्दिष्टानि । तेन मुहूर्तमार्तण्डाद्यनभिज्ञो ज्यौतिषिक एतत्पुस्तकावलोकनेनात्मनः कार्यं निर्वर्तयितुं शक्नोति । अत्र च पुस्तके मुहूर्तदिनादिनिर्देशात्प्राक् तत्तन्मुहूर्तविषयकः संक्षिप्तः शास्त्रार्थो हिन्दीभाषया निवेशितः । प्रबन्धारम्भे च मुहूर्तविषयकपरिहारादिप्रमाणसन्दोह इत्याख्यं नानाविधप्रमाणसमुल्लासितं प्रकरणमेकमुन्यस्तम् । मुहूर्तनिर्देशक्रमश्च प्रथमं तिथिस्ततोवारस्ततो नक्षत्रं ततो दिनमानं ततश्चन्द्रस्ततः स्पष्टसूर्यस्ततो लग्नं ततो यथासंभवं मुहूर्तगतो दोष इति । यथा अक्षरारम्भमुहूर्तः । वैशाखशुक्ले

तिथिः वारः नक्षत्रं दिनमानं चन्द्रः स्प. सूर्यः लग्नं दोषः ।
१२ । चन्द्रः । चित्रा । ३३ । ४० । ६ तुला । १ । ८ । १९ । मि. । अभि. व्यतीपातः । इति ।

एतच्च सांप्रतिकग्रामगणकानामतिमात्रमुपकरिष्यतीत्यस्माकमभिप्रायः । मूल्यमस्यानकद्वयम् । जिघृक्षुभिः पत्रादिकं गोस्वामिश्रीलक्ष्मणाचार्य, मथुरा इत्यत्रस्थाने प्रेर्यम् ।

**नगनाथनाडन्नम** — मीरतनगरवर्तिन आयुर्वैदिकौषधालयस्याध्यक्षेण

तमञ्जनम् । अत्र च भीमसेनकर्पूरमुक्तादयो बहवो बहुमूल्यपदार्था मिश्रिता इति ज्ञायते ऽस्माभिः । दृष्टमेतदञ्जनमभ्यञ्जितं चानेन चक्षुः समुद्भिद्भिरस्माभिः । एतेन सुतप्तमपि चक्षुस्तत्कालं शीतलीभवतीति नः प्रत्ययः । निवेशनिमेषे तु किञ्चित्संत्रस्यति चक्षुः पश्चात्पुनरश्रुणि निष्पतिते तच्छीतलीभवति । अत्रत्यश्च कर्पूरोऽञ्जने ऽस्मिन्ननावृतप्रदेशे समवस्थापिते सति व्योमसाद्भवति । तत्तस्य स्थिरीकरणे यदिको ऽप्युपायो वैद्यराजेनास्थीयेत तदा बहूपकृतं स्यद्ग्राहकजनस्येति ब्रूमः । सर्वेषामपि नेत्रामयानामपहारकं सर्वर्तुसेव्यं चेदमिति प्रोच्यते वैद्यराजेन । बहुभिश्चायुर्वेदविद्भिः परीक्षितमेतत् । एककर्षमितस्यास्य मूल्यमेको रूपकः किन्तु य आगामिनि वत्सरे सस्कृतचन्द्रिकां गृह्णीयुस्तैरर्धमूल्येनैव लभ्येत आदित्सुभिः पत्रिकादिकं ‘ पण्डितसूर्यप्रसादशर्मा वैद्यराज, आयुर्वैदिक औषधालय मु० मोरीपाडा शहर मीरत ’ इत्यत्र प्रेरणीयम् ।

**साङ्ख्यसागरसुधा**—भारतरत्नपण्डितश्रीमदम्बिकादत्तव्यासराहित्याचार्यप्रणीतोऽयं प्रबन्धः । एतत्कर्तुर्नाम्नः श्रवणेनैवैतस्य समीचीनभावः शक्यतेऽनुमातुम् । विदितः खल्वयं महाभागश्चन्द्रिकायाः सर्वेषामपि वाचकमहाशयानाम् । अस्यैव हि समुत्तरङ्गं सरस्वतीसुधानिस्यन्दं श्रीशिवराजविजयं नाम स्वादं स्वादं दोधूयन्ते शिरांसि रसिकप्रवराः । यः किल प्रतिमासमेव चन्द्रिकां समलङ्करोति । अतो विनाऽपि वाचनं कीदृशोयं प्रबन्ध इति शक्यमेव समवबोद्धुं रासिकैः । सन्ति किल प्रतिदर्शनं प्राथमिकशिक्षणे छात्राणामुपकारका बहवः प्रबन्धाः । यथा वेदान्तसारो वेदान्ते मीमांसायां मीमांसापरिभाषा तर्के तर्कसङ्ग्रहतर्ककौमुदीतर्कभाषाप्रभृतयो न्यायेच । योगसांख्ययोः पुनर्नैवंविधः प्रबन्धः समभूत् । सांख्यसारतत्वकौमुदीप्रभृतयस्तु साङ्ख्यदर्शनमात्रजिज्ञासूनां शास्त्रान्तराप्रविष्टानां नैकान्तत उपयुक्ताः । अतो निःशेषमपि साङ्ख्यदर्शनसमुद्रं समुन्नततमेन धीमन्दरेण

नूनमेष सुगमः सारभूतश्च साङ्ख्यग्रन्थः सर्वैरप्यवश्यं सङ्ग्रहणीयः । किञ्चायमपरः पयसि सितशर्करापातो यदेष सुबोधोऽपि प्रबन्धो हिन्दीभाषानुवादेन पुनरतिमात्रं सुबोधतां नीतः । एतदवलोकनेन **चामूलेखं लेखमेव परःसहस्रेषु पठितवत्सु बहूनामाग्रहेण प्रकाश्यतेऽपि मुद्रायन्त्रसंस्कृतैषापुस्तिकेत्येतदुपोद्घातगतं** प्रणेतुर्वचनं यथार्थमेवेति प्रतिभाति । सांख्यदर्शनसंमतं प्रत्यक्षानुमानागमाख्यं तु प्रमाणत्रयं नात्र प्रपञ्चितमिति तदर्थं प्रबन्धान्तरानुधावनमावश्यकत्वमुपयाति । अतः संस्करणान्तरे तदवश्यमत्र निवेश्येतेत्याशास्महे । यत्त्वत्रोपोद्घाते बादरायणमतस्य संशयितसाध्यकत्वं प्रतिपाद्यते तन्न रोचते चेतसेऽस्माकम् । अवश्यं संग्राह्यः प्रबन्धोऽयं भागलपुरे व्यासमुद्रायन्त्रालय आनकद्वयमूल्येन लब्धुं शक्यः ।

**रत्नाष्टकम्**—श्रीमदम्बिकादत्तव्याससाहित्याचार्यमहाशयेनैव प्रणीतोऽयं ग्रन्थः न किल तादृश एकोऽपि रसिकः स्याद्यस्यैतत्पुस्तकं पठतो नालङ्कुर्याद्वदनसरोरुहं प्रमोदातिशयोद्भूतो हासः । अत्र च हासरससमुल्लसितान्युपदेशगर्भितानि चाष्ट कथारत्नानि । ये किल संस्कृतभाषाया नामाप्याकर्ण्य नासासङ्कोचनपूर्वकं भ्रुवं कुटिलीकृत्यप्रकाशयन्ति तिरस्कारं तेऽपि खल्वत्रत्याः कथाः समाकर्ण्य संस्कृतभाषाया अवगमने प्रयतेरन्निति प्रतीयते । एतच्च मुद्रयितुं प्रयतमानेनापि मुद्रापकेन नापारि स्वाभिलषितं पूरयितुं सम्यक् । क्वचिद्धि वर्णानां विकलीभावो रसानुभवे प्रतिबन्धकतामुपयाति । पुस्तकपठनेन तद्गतरस एकतानतां गतस्य पाठकमनसो वर्णानां सामीचीन्यमेवान्यतमो हेतुरनुद्वेगस्य । रसप्रवणीभूते हि चेतसि वर्णानवबोधः पायसे दैवान्निपातितो गोक्षुरकण्टक इव परित्रासयति चेतः । मुहुर्मुहुः पठितमप्येतत्पुनः पठनवाञ्छामुत्पादयति । आस्वाद्यतां सकृदप्यस्य रसो रसिकैरिति साग्रहं ब्रूमः । बालानां चोपयुक्ततममेतत् । इदंचोपरिनिर्दिष्टादेव स्थानादभिगन्तुं शक्यत आनकचतुष्टयात्मकेन मूल्येन ।